हयमश्वाभिहत्य छित्त्वा रथं तिलशश्चापि वाणैः। छित्त्वा च बाहू वरचन्दनाक्तौ भल्लेन कायाच्छिर उच्चकर्त्त ॥ ८२ ॥ युवानमिन्दीवरदामवर्णञ्चेदिप्रभुं युवराजं प्रसह्य। वाणैस्त्वरावान् ज्वलिताग्निकल्पैर्विद्धा प्रादान्मृत्यवे साश्वसूतम् ॥ ८३ ॥ मालवं पौरवञ्चैव युवराजञ्च चेदिपम्। दृष्ट्वा समक्षं निहतं द्रोणपुत्रेण पाण्डवः ॥ ८४ ॥ भीमसेनो महाबाहुः क्रोधमाहारयत् परम्। ततः शरशतैस्तीक्ष्णैः स क्रुद्धाशीविषोपमैः ॥ ८५ ॥ छादयामास समरे द्रोणपुत्रं परन्तपः। ततो द्रौणिर्महातेजाः शरवर्षं निहत्य तम् ॥ ८६ ॥ विव्याध निशितैर्वाणैर्भीमसेनममर्षणः। ततो भीमो महाबाहुर्द्रौणेर्युधि महाबलः ॥ ८७ ॥ क्षुरप्रेण धनुश्छित्त्वा द्रौणिं विव्याध पत्रिणा। तदपास्य धनुश्छिन्नं द्रोणपुत्रो महामनाः ॥ ८८ ॥ अन्यत् कार्मुकमादाय भीमं विव्याध पत्रिभिः। तौ द्रौणिभीमौ समरे पराक्रान्तौ महाबलौ ॥ ८९ ॥ अवर्षतां शरवर्षं वृष्टिमन्ताविवाम्वुदौ। भीमनामाङ्किता वाणाः स्वर्णपुङ्खाः शिलाशिताः ॥ ९० ॥ द्रौणिं सञ्छादयामासुर्मेघौघा इव भास्करम्। तथैव द्रौणिनिर्मुक्तैर्भीमः सन्नतपर्वभिः ॥ ९१ ॥ अवाकीर्य्यत स क्षिप्रं शरैः शतसहस्रशः। सञ्छाद्यमानः समरे द्रौणिना रणशालिना ॥ ९२ ॥ न विव्यथे महाराज तदद्भुतमिवाभवत्। ततो भीमो महाबाहुः कार्त्तस्वरविभूषितान् ॥ ९३ ॥ नाराचान् दश सम्प्रैषीद्यमदण्डनिभान् शितान्। ते जत्रुदेशमासाद्य द्रोणपुत्रस्य मारिष ॥ ९४ ॥ निर्भिद्य विविशुस्तूर्णं वल्मीकमिव पन्नगाः। सोऽतिविद्धो भृशं द्रौणिः पाण्डवेन महात्मना ॥ ९५ ॥ ध्वजयष्टिं समाश्रित्य न्यमीलयत लोचने। स मुहूर्त्तात् पुनः संज्ञां लब्ध्वा द्रौणिर्नराधिप ॥ ९६ ॥ क्रोधं परममातस्थौ समरे रुधिरोक्षितः। दृढं सोऽभिहतस्तेन पाण्डवेन महात्मना ॥ ९७ ॥ वेगञ्चक्रे महाबाहुर्भीमसेनरथं प्रति। तत आकर्णपूर्णानां शराणां तिग्म-

तेजसाम् ॥ ९८ ॥ शतमाशीविषाभानां प्रेषयामास भारत। भीमोऽपि समरश्लाघी तस्य वीर्य्यमचिन्तयन् ॥ ९९ ॥ तूर्णं प्राहृजद्युग्राणि शरवर्षाणि पाण्डवः। ततो द्रौणिर्महाराज छित्त्वास्य विशिखैर्धनुः ॥ १०० ॥ आजघानोरसि क्रुद्धः पाण्डवं निशितैः शरैः। ततोऽन्यद्धनुरादाय भीमसेनोऽत्यमर्षणः ॥ १०१ ॥ विव्याध निशितैर्बाणैर्द्रौणिं पञ्चभिराहवे। जीमूताविव घर्मान्ते तौ शरौघप्रवर्षिणौ ॥ १०२ ॥ अन्योऽन्यं क्रोधताम्राक्षौ छादयामासतुर्युधि। तलशब्दैस्ततो घोरैश्छादयन्तौ परस्परम् ॥ १०३ ॥ अयुध्येतां सुसंरब्धौ कृतप्रतिकृतैषिणौ। ततो विस्फार्य्य सुमहच्चापं रुक्मविभूषितम् ॥ १०४ ॥ भीमं प्रैक्षत स द्रौणिः शरानस्यन्तमन्तिकात्। शरद्यहर्मध्यगतो दीप्तार्च्चिरिव भास्करः ॥ १०५ ॥ आददानस्य विशिखान् सन्दधानस्य चाशुगान्। विकर्षतो मुञ्चतश्च नान्तरं ददृशुर्जनाः ॥ १०६ ॥ अलातचक्रप्रतिमं तस्य मण्डलमायुधम्। द्रोणेराशीन्महाराज वाणान् विसृजतस्तदा ॥ १०७ ॥ धनुश्च्युताः शरास्तस्य शतशोऽथ सहस्रशः। आकाशे प्रत्यदृश्यन्त शलभानामिवायतीः ॥ १०८ ॥ ते तु द्रौणिधनुर्मुक्ता शरा हेमविभूषिताः। अजस्रमन्वकीर्य्यन्त घोरा भीमरथं प्रति ॥ १०९ ॥ तत्राद्भुतमपश्याम भीमसेनस्य विक्रमम्। बलं वीर्य्यं प्रभावञ्च व्यवसायञ्च भारत ॥ ११० ॥ तां समेघामिवोद्भूतां वाणवृष्टिं समन्ततः। जलवृष्टिं महाघोरां तपान्त इव चिन्तयन् ॥ १११ ॥ द्रोणपुत्रवधप्रेप्सुर्भीमो भीमपराक्रमः। अमुञ्चच्छरवर्षाणि प्रावृषीव वलाहकः ॥ ११२ ॥ तद्रुक्मपृष्ठं भीमस्य धनुर्घोरं महद्रणे। विकृष्यमाणं विबभौ शक्रचापमिवापरम् ॥ ११३ ॥ तस्माच्छराः प्रादुरासन् शतशोऽथ सहस्रशः। सञ्छादयन्तः समरे द्रौणिमाहवशोभिनम् ॥ ११४ ॥ तयोर्विसृजतोरेवं शरजालानि मारिष। वायुरप्यन्तरा राजन्नाशक्नोत् स विसर्पितुम् ॥ ११५ ॥ तथा

द्रौणिर्महाराज शरान् हेमविभूषितान्। तैलधौतान् प्रसन्ना-
ग्रान् प्राहिणोद्दधकाङ्क्षया ॥ ११६ ॥ तानन्तरीक्षे विशिखैस्त्रिधै-
कैकमशातयत्। विशेषयन् द्रोणसुतं तिष्ठ तिष्ठेति चाब्रवीत्
॥ ११७ ॥ पुनश्च शरवर्षाणि घोराण्युग्राणि पाण्डवः। व्यसृजद्
बलवान् क्रुद्धो द्रोणपुत्रबधेप्सया ॥ ११८ ॥ ततोऽस्त्रमायया
तूर्णं शरवृष्टिं निवार्य्य ताम्। धनुश्चिच्छेद भीमस्य द्रोणपुत्रो
महास्त्रवित् ॥ ११९ ॥ शरैश्चैनं सुबहुभिः क्रुद्धः सङ्ख्ये पराभिनत्।
स छिन्नधन्वा बलवान् रथशक्तिं सुदारुणाम् ॥ १२० ॥ वेगेना-
विध्य चिक्षेप द्रोणपुत्ररथं प्रति। तामापतन्तीं सहसा महो-
ल्काभां शितैः शरैः ॥ १२१ ॥ चिच्छेद समरे द्रौणिर्दर्शयन्
पाणिलाघवम्। एतस्मिन्नन्तरे भीमो दृढ़मादाय कार्मुकम् ॥१२२॥
द्रौणिं विव्याध विशिखैः स्मयमानो वृकोदरः। ततो द्रौणिर्महा-
राज भीमसेनस्य सारथिम् ॥ १२३ ॥ ललाटे दारयामास शरे-
णानतपर्व्वणा। सोऽतिविद्धो बलवता द्रोणपुत्रेण सारथिः ॥१२४॥
व्यामोहमगमद्राजन् रश्मीनुत्सृज्य वाजिनाम्। ततोऽश्वाः
प्राद्रवंस्तूर्णं मोहिते रथसारथौ ॥ १२५ ॥ भीमसेनस्य राजेन्द्र
पश्यतां सर्व्वधन्विनाम्। तं दृष्ट्वा प्रद्रुतैरश्वैरपकृष्टं रणाजिरात्
॥ १२६ ॥ दध्मौ प्रमुदितः शङ्खं वृहन्तमपराजितः। ततः सर्व्वे
च पाञ्चाला भीमसेनश्च पाण्डवः ॥ १२७ ॥ धृष्टद्युम्नरथं त्यक्त्वा
भीताः सम्प्राद्रवन् दिशः। तान् प्रभग्नांस्ततो द्रौणिः पृष्ठतो
विकिरन् शरैः ॥ १२८ ॥ अभ्यवर्त्तत वेगेन कालयन् पाण्डु-
वाहिनीम्। ते बध्यमानाः समरे द्रोणपुत्रेण क्षत्रियाः। द्रोण-
पुत्र भयाद्राजन् दिशः सर्व्वाश्च भेजिरे ॥ १२९ ॥

इति द्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि अश्वत्थामपराक्रमे
एकाधिकद्विशततोऽध्यायः ॥ २०१ ॥

सञ्जय उवाच। तत् प्रभग्नं बलं दृष्ट्वा कुन्तीपुत्रो धनञ्जयः। न्यवारयदमेयात्मा द्रोणपुत्रवधेप्सया ॥ १ ॥ ततस्ते सैनिका राजन्नेवं तत्रावतस्थिरे। संवार्य्यमाणा यत्नेन गोविन्देनार्जुनेन वै ॥ २ ॥ एक एव तु बीभत्सुः सोमकावयवैः सह। मत्स्यैरन्यैश्च सन्धाय पौरवैः स न्यवर्त्तत ॥३॥ ततो द्रुतमतिक्रम्य सिंहलाङ्गूलकेतनम्। सव्यसाची महेष्वासमश्वत्थामानमब्रवीत् ॥ ४ ॥ या शक्तिर्यच्च ते वीर्य्यं यज्ज्ञानं यच्च पौरुषम्। धार्त्तराष्ट्रेषु या प्रीतिः प्रद्वेषोऽस्मासु यश्च ते ॥ ५ ॥ यच्च भूयोऽस्ति तेजस्तत्परमं मम दर्शय। स एव द्रोणहन्ता ते दर्पं भेत्स्यति पार्षतः ॥ ६ ॥ कालानलसमप्रख्यं द्विषतामन्तकोपमम्। समासादय पाञ्चाल्यं माञ्चापि सहकेशवम्। दर्पं नाशयितास्म्यद्य तवोद्धतस्य संयुगे ॥७॥

धृतराष्ट्र उवाच। आचार्य्यपुत्रो मानार्हो बलवांश्चापि सञ्जय। प्रीतिर्धनञ्जये चास्य प्रियश्चापि महात्मनः ॥ ८ ॥ न भूतपूर्वं बीभत्सोर्वाक्यं परममीदृशम्। अथ कस्मात् स कौन्तेयः सखायं रूक्षमब्रवीत् ॥ ९ ॥

सञ्जय उवाच। युवराजे हते राजन् वृद्धक्षत्रे च पौरवे। इष्वस्त्रविधिसम्पन्ने मालवे च सुदर्शने ॥ १० ॥ धृष्टद्युम्ने सात्यकौ च भीमे चापि पराजिते। युधिष्ठिरस्य तैर्वाक्यैर्मर्मस्वपि च घट्टिते ॥ ११ ॥ अन्तर्भेदे च सञ्जाते दुःखं संस्मृत्य च प्रभो। अभूतपूर्वो बीभत्सोर्दुःखान्मन्युरजायत ॥ १२ ॥ तस्मादनर्हमश्लीलमप्रियं द्रौणिमब्रवीत्। मान्यमाचार्य्यतनयं रूक्षं कापुरुषो यथा ॥ १३ ॥ एवमुक्तश्च स क्रोधान्महेष्वासतमो नृप। पार्थेन परुषं वाक्यं सर्वमर्मघ्नया गिरा ॥ १४ ॥ द्रौणिश्चुकोप पार्थाय कृष्णाय च विशेषतः। स तु यत्तो रथे स्थित्वा वार्य्युपस्पृश्य वीर्य्यवान् ॥ १५ ॥ देवैरपि सुदुर्धर्षमस्त्रमाग्नेयमाददे। दृश्यादृश्यानरिगणानुद्दिश्याचार्य्यनन्दनः ॥ १६ ॥ सोऽभिमन्त्र्य शरं दीप्तं विधूम-

मिव पावकम् । सर्व्वतः क्रोधमाविश्य चिक्षेप परवीरहा ॥ १७ ॥
ततस्तुमुलमाकाशे शरवर्षमजायत । पावकार्च्चिः परीतं तत्
पार्थमेवाभिपुप्लुवे ॥ १८ ॥ उल्काश्च गगनात् पेतुर्दिशश्च न चका-
शिरे । तमश्च सहसा रौद्रं चमूमवततार ताम् ॥ १९ ॥ रक्षांसि
च पिशाचाश्च विनेदुरभिसङ्गताः । ववुश्चाप्यशिवा वाताः सूर्य्यो
नैव तताप च ॥ २० ॥ चक्रुशुर्व्वायसाश्चापि दिक्षु सर्व्वासु भैरवम् ।
रुधिरञ्चाभिवर्षन्तो विनेदुस्तोयदा दिवि ॥ २१ ॥ पक्षिणः पशवो
गावो मुनयश्चापि सुव्रताः । परमं प्रयतात्मानो न शान्तिमुप-
लेभिरे ॥ २२ ॥ भ्रान्तसर्व्वमहाभूतमावर्त्तितदिवाकरम् । त्रैलोक्य-
मभिसन्तप्तं ज्वराविष्टमिवाभवत् ॥ २३ ॥ अस्त्रतेजोभिसन्तप्ता
नागा भूमिशयास्तथा । निःश्वसन्त समुत्पेतुस्तेजो घोरं मुमु-
क्षवः ॥ २४ ॥ जलजानि च सत्त्वानि दह्यमानानि भारत । न
शान्तिमुपजग्मुर्हि तप्यमानैर्जलाशयैः ॥ २५ ॥ दिग्भ्यः प्रदिग्भ्यः
खाद्भूमेः सर्व्वतः शरवृष्टयः । उच्चावचानि पेतुर्वै गरुड़ानिल-
रंहसः ॥ २६ ॥ तैः शरैर्द्रोणपुत्रस्य वज्रवेगैः समाहता । प्रदग्धाः
शत्रवः पेतुरग्निदग्धा इव द्रुमाः ॥ २७ ॥ दह्यमाना महानागाः
पेतुरुर्व्व्यां समन्ततः । नदन्तो भैरवान्नादान् जलदोपमनिस्वनान्
॥ २८ ॥ अपरे प्रद्रुतास्तत्र दह्यमाना महागजाः । रेमस्तस्ता
यथा घोरा वने दावाग्निसंवृताः ॥ २९ ॥ द्रुमाणां शिखराणीव
दावदग्धानि मारिष । अश्ववृन्दान्यदृश्यन्त रथवृन्दानि वा विभो
॥ ३० ॥ अपतन्त रथौघाश्च तत्र तत्र सहस्रशः । तत्सैन्यं भग-
वानग्निर्द्ददाह युधि भारत ॥ ३१ ॥ युगान्ते सर्व्वभूतानि सम्व-
र्त्तक इवानलः । दृष्ट्वा तु पाण्डवीं सेनां दह्यमानां महाहवे ॥३२॥
प्रहृष्टास्तावका राजन् सिंहनादान् विनेदिरे । ततस्तूर्य्यसह-
स्राणि नानालिङ्गानि भारत ॥ ३३ ॥ तूर्य्यमाजघ्निरे हृष्टास्तावका
जितकाशिनः । कृत्स्ना ह्यक्षौहिणी राजन् सव्यसाची च पाण्डवः

॥ ३४ ॥ तमसा संवृते लोके नादृश्यन्त महाहवे । नैव तस्मादृशं राजन् दृष्टपूर्वं न च श्रुतम् ॥ ३५ ॥ यादृशं द्रोणपुत्रेण सृष्टमस्त्रममर्षिणा । अर्जुनस्तु महाराज ब्राह्ममस्त्र[illegible]रयत् ॥ ३६ ॥ सर्वास्त्रप्रतिघाताय विहितं पद्मयोनिना । ततो [illegible]र्त्तादिव तत्तमो व्युपशशाम ह ॥ ३७ ॥ प्रववौ चानिलः शी[illegible] दिशश्च विमला बभुः । तत्राद्भुतनपश्याम कृत्स्नामचौहिणीं हताम् ॥ ३८ ॥ अनभिज्ञेयरूपाञ्च प्रदग्धामस्त्रतेजसा । ततो वीरौ महेष्वासौ विमुक्तौ केशवार्जुनौ ॥ ३९ ॥ सहितौ समदृश्येतां नभसीव तमोनुदौ । ततो गाण्डीवधन्वा च केशवश्चाच्चतावुभौ ॥ ४० ॥ सपताकध्वजहयः सानुकर्षवरायुधः । प्रबभौ सरथो मुक्तस्तावकानाम्भयङ्करः ॥४१॥ ततः किलकिलाशब्दः शङ्खभेरीस्वनैः सह । पाण्डवानां प्रहृष्टानां क्षणेन समजायत ॥ ४२ ॥ हताविति तयोरासीत् सेनयोरुभयोर्मतिः । तरसाभ्यागतौ दृष्ट्वा विमुक्तौ केशवार्जुनौ ॥ ४३ ॥ तावव्यतौ प्रमुदितौ दध्मतुर्वारिजोत्तमौ । दृष्ट्वा प्रमुदितान् पार्थांस्त्वदीया व्यथिता भृशम् ॥ ४४ ॥ विमुक्तौ च महात्मानौ दृष्ट्वा द्रौणिः सुदुःखितः । मुहूर्[illegible] चिन्तयामास किन्त्वेतदिति मारिष ॥ ४५ ॥ चिन्तयित्वा तु र[illegible]न्द्र ध्यानशोकपरायणः । निःश्वसन् दीर्घमुष्णञ्च विमनश्चाभवत्ततः ॥ ४६ ॥ ततो द्रौणिर्धनुर्न्यस्य रथात् प्रस्कन्द्य वेगितः । धिग्धिक् सर्व्वमिदं मिथ्येत्युक्त्वा सम्प्राद्रवद्रणात् ॥ ४७ ॥ ततः स्निग्धाम्बुदाभासं वेदव्यासमकल्मषम् । वेदव्यासं सरस्वत्यावासं व्यासं ददर्श ह ॥ ४८ ॥ तं द्रौणिरग्रतो दृष्ट्वा स्थितं कुरुकुलोद्वह । सन्नकण्ठोऽब्रवीद्वाक्यमभिवाद्य स दीनवत् ॥ ४९ ॥ भो भो माया यदृच्छा वा न विद्मः किमिदम्भवेत् । अस्त्रन्त्विदं कथं मिथ्या मम कश्च व्यतिक्रमः ॥५०॥ अधरोत्तरमेतद्वा लोकानाञ्च पराभवः । यदिमौ जीवतः कृष्णौ कालो हि दुरतिक्रमः ॥ ५१ ॥ नासुरा न च

गन्धर्वा न पिशाचा न राक्षसाः । न सर्पयक्षपतगा न मनुष्याः कथञ्चन ॥ ५२ ॥ उत्सहन्ते तथा कर्त्तुमेतदस्त्रं मयेरितम् । तदिदं केवलं हत्वा शान्तमक्षौहिणीं ज्वलत् ॥ ५३ ॥ सर्वघाति मया मुक्तमस्त्रं परमदारुणम् । केन मानुषधर्माणौ नावधीत् केशवार्जुनौ ॥ ५४ ॥ एतन्मे ब्रूहि भगवन् मया पृष्टो यथातथम् । श्रोतुमिच्छामि तत्त्वेन सर्वमेतन्महामुने ॥ ५५ ॥

व्यास उवाच । महान्तमेतमर्थं मां यत्त्वं पृच्छसि विस्मयात् । तत्प्रवक्ष्यामि ते सर्वं समाधाय मनः शृणु ॥ ५६ ॥ योऽसौ नारायणो नाम पूर्व्वेषामपि पूर्व्वजः । अजायत च कार्य्यार्थं पुत्रो धर्म्मस्य विश्वकृत् ॥ ५७ ॥ स तपस्तीव्रमातस्थे शिशिरं गिरिमाश्रितः । ऊर्द्ध्वबाहुर्महातेजा ज्वलनादित्यसन्निभः ॥ ५८ ॥ षष्टिं वर्षसहस्राणि तावन्त्येव शतानि च । अशोषयत्तदात्मानं वायुभक्षोऽम्बुजेक्षणः ॥ ५९ ॥ तथा परं तपस्तप्त्वा द्विस्ततोऽन्यत् पुनर्महत् । द्यावापृथिव्योर्विवरं तेजसा समपूरयत् ॥ ६० ॥ स तेन तपसा तात ब्रह्मभूतो यदाभवत् । ततो विश्वेश्वरं योनिं विश्वस्य जगतः पतिम् ॥ ६१ ॥ ददर्श भृशदुर्द्दर्शं सर्व्वदेवेशमीश्वरम् । अणीयांसमणुभ्यश्च बृहद्भ्यश्च महत्तरम् ॥ ६२ ॥ रुद्रमीशानमृषभं हरं शम्भुं कपर्द्दिनम् । चेकितानं परं योनिं तिष्ठतो गच्छतश्च ह ॥ ६३ ॥ दुर्वारणं दुर्दृशं तिग्ममन्युं महात्मानं सर्व्वहरं प्रचेतसम् । दिव्यञ्चापमिषुधी चाददानं हिरण्यवर्माणमनन्तवीर्य्यम् ॥ ६४ ॥ पिनाकिनं वज्रिणं दीप्तशूलं परश्वधिनं गदिनं स्वायतासिम । शुभ्रं जटिलं मुषलिनं शूलपाणिं व्याघ्राजिनं परिधिणं दण्डपाणिम् ॥ ६५ ॥ शुभाङ्गदं नागयज्ञोपवीतं विश्वैर्गणैः शोभितं भूतसङ्घैः । एकीभूतं तपसां सन्निधानं वयोतिगैः सुष्टुतमिष्टवाग्भिः ॥ ६६ ॥ जलं दिवं खं क्षितिं सूर्य्यचन्द्रौ तथा वायग्नी प्रतिमानं जगच्च । नालं द्रष्टुं यमजं भिन्नवृत्ता ब्रह्म-

हिषद्ममस्तस्य योनिम् ॥ ६७ ॥ यं पश्यन्ति ब्राह्मणा साधुवृत्ताः क्षीणे पापे मनसा वीतशोकाः। तं निःसृतं तपसा धर्ममीड्यं तद्भक्तो वै विश्वरूपं ददर्श। दृष्ट्वा चैनं वाङ्मनोबुद्धिदेहैः संहृष्टात्मा मुमुदे वासुदेवः ॥ ६८ ॥ अक्षमालापरिक्षिप्तं ज्योतिषां परमं निधिम्। ततो नारायणो देवं ववन्दे विश्वसम्भवम् ॥ ६९ ॥ वरदं पृथुचार्वङ्ग्या पार्वत्या सहितं प्रभुम्। क्रीडमानं महात्मानं भूतसङ्घगणैर्वृतम् ॥ ७० ॥ अजमीशानमव्यक्तं कारणात्मानमच्युतम्। अभिवाद्याथ रुद्राय सद्योऽन्धकनिपातिने। पद्माक्षस्तं विरूपाक्षमभितुष्टाव भक्तिमान् ॥ ७१ ॥

नारायण उवाच। त्वत्सम्भूता भूतकृतो वरेण्य गोप्तारोऽस्य भुवनस्यादिदेव। आविश्येमां धरणीं येऽभ्यरक्षन् पुरा पुराणीं तव देव सृष्टिम् ॥७२॥ सुरासुरान्नागरक्षःपिशाचान्नरान् सुपर्णानथ गन्धर्वयक्षान्। पृथग्विधान् भूतसङ्घान् सविश्वांस्त्वत्सम्भूतान् विद्म सर्वांस्तथैव ॥ ७३ ॥ ऐन्द्रं याम्यं वारुणं वैत्तपाल्यं पैत्रं त्वाष्ट्रं कर्म सौम्यञ्च तुभ्यम्। रूपं ज्योतिः शब्द आकाशवायुः स्पर्शः स्वाद्यं सलिलं गन्ध उर्वी ॥ ७४ ॥ कालो ब्रह्मा ब्रह्म च ब्राह्मणाश्च त्वत् सम्भूतं स्थास्नु चरिष्णु चेदम्। अद्भ्यस्तोका यान्ति यथा पृथक् त्वं ताभिश्चैक्यं सङ्क्षये यान्ति भूयः ॥ ७५ ॥ एवं विद्वान् प्रभवञ्चाप्ययञ्च मत्वा भूतानां तव सायुज्यमेति। दिव्यावृत्तौ मानसौ द्वौ सुपर्णौ वाचा शाखाः पिप्पलाः सप्त गोपाः ॥ ७६ ॥ दश चान्ये ये पुरं धारयन्ति त्वया सृष्टास्त्वं हि तेभ्यः परश्च। भूतं भव्यं भविता चाप्यधृष्यं त्वत्सम्भूता भुवनानीह विश्वा ॥ ७७ ॥ भक्तञ्च मां भजमानं भजस्व मारीरिषो ममाहिताहितेन। आत्मानं त्वामात्मनानन्यबोधं विद्वानेवं गच्छति ब्रह्म शुक्रम् ॥७८॥ अस्तौषं त्वां तव सम्मानमिच्छन् विचिन्वन् वै सदृशं देववर्य। सुदुर्लभान् देहि वरान् ममेष्टानभिष्टुतः प्रविकार्षीश्च मायाम् ॥७९

व्यास उवाच। तस्मै वरानचिन्त्यात्मा नीलकण्ठः पिनाकधृक्। अर्हते वासुदेवाय प्रायच्छदृषिसंस्तुतः॥ ८०॥

श्रीभगवानुवाच। मत्प्रसादान्मनुष्येषु देवगन्धर्व्वयोनिषु। अप्रमेयबलात्मा त्वं नारायण भविष्यसि॥ ८१॥ न च त्वां प्रसहिष्यन्ति देवासुरमहोरगाः। न पिशाचा न गन्धर्व्वा न नरा न च राक्षसाः॥ ८२॥ न सुपर्णास्तथा नागा न च विश्वे वियोनिजाः। न कश्चित्त्वाञ्च देवोऽपि समरेषु विजेष्यति॥ ८३॥ न शस्त्रेण न वज्रेण नाग्निना न च वायुना। न चार्द्रेण न शुष्केण त्रसेन स्थावरेण च॥ ८४॥ कश्चित्तव रुजं कर्त्ता मत्प्रसादात् कथञ्चन। अपि चेत् समरं गत्वा भविष्यसि ममाधिकः॥ ८५॥ एवमेते वरा लब्धाः वरास्ते विद्धि शौरिणा। स एष देवश्चरति मायया मोहयन् जगत्॥ ८६॥ तस्यैव तपसो जातं नरं नाम महामुनिम्। तुल्यमेतेन देवेन त्वं जानीह्यर्जुनं सदा॥ ८७॥ तावेतौ पूर्व्वदेवानां परमौ पठितावृषी। लोकयात्राविधानार्थं सञ्जायेते युगे युगे॥ ८८॥ तत्रैव कर्म्मणः कृत्स्नं महतस्तपसोऽपि च। तेजोमन्युश्च विभस्त्वं जातो रौद्रो महामुने॥ ८९॥ स भवान् देववान् प्राज्ञो ज्ञात्वा भवमयं जगत्। अवाकर्षस्त्वमात्मानं नियमैस्तत् प्रियेप्सया॥ ९०॥ शुभ्रं स तु भवान् कृत्वा महापुरुषविग्रहम्। ईजिवांस्त्वं जपैर्होमैरुपहारैश्च मानद॥ ९१॥ स तथा पूज्यमानस्ते पूर्व्वदेहेष्वतूतुषत्। पुष्कलांश्च वरान् प्रादात्तव विद्वन् हृदि स्थितान्॥ ९२॥ जन्मकर्म्मतपो योगास्तयोस्तव च पुष्कलाः। ताभ्यां लिङ्गेऽर्च्चितो देवस्त्वयार्च्चायां युगे युगे॥ ९३॥ स एष रुद्रभक्तश्च केशवो रुद्रसम्भवः। सर्व्वरूपं भवं ज्ञात्वा लिङ्गमर्च्चयति प्रभुम्॥ ९४॥ आत्मयोगाश्च तस्मिन् वै शास्त्रयोगाश्च शाश्वताः। एनमेवायजन् देवाः सिद्धाश्च परमर्षयः॥९५॥ प्रार्थयन्ति परं लोके स्थाणुमेकं स सर्व्वकृत्। कृष्ण एव हि

यष्टव्यो यश्चैव सनातनः ॥ ८६ ॥ सर्वभूतमयं ज्ञात्वा लिङ्गमर्च्चति यः प्रभुः। तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः ॥ ८७ ॥

सञ्जय उवाच। तस्य तद्वचनं श्रुत्वा द्रोणपुत्रो महारथः। नमश्चकार रुद्राय बहु मेने च केशवम् ॥८८॥ हृष्टरोमा च वश्यात्मा नमस्कृत्य महर्षये। वरूथिनीमभिप्रेक्ष्य ह्यवहारमकारयत् ॥८९॥ ततः प्रत्यवहारोऽभूत् पाण्डवानां विशाम्पते। कौरवाणाञ्च दीनानां द्रोणे युधि निपातिते ॥१००॥ युद्धं कृत्वा दिनान् पञ्च द्रोणो हत्वा वरूथिनीम्। ब्रह्मलोके गतो राजन् ब्राह्मणो वेदपारग ॥१०१॥

इतिद्रोणपर्व्वणि नारायणास्त्रमोक्षपर्व्वणि व्यासवाक्ये द्व्यधिकद्विशततोऽध्यायः ॥ २०२ ॥

---

धृतराष्ट्र उवाच। तस्मिन्नतिरथे द्रोणे निहते पार्षतेन वै। मामकाः पाण्डवाश्चैव किमकुर्व्वंस्ततः परम् ॥ १ ॥

सञ्जय उवाच। तस्मिन्नतिरथे द्रोणे निहते पार्षतेन वै। कौरवेषु च भग्नेषु कुन्तीपुत्रो धनञ्जयः ॥ २ ॥ दृष्ट्वा सुमहदाश्चर्य्यमात्मनो विजयावहम्। यदृच्छया गतं व्यासं प्रपच्छ भरतर्षभ ॥३॥

अर्ज्जुन उवाच। सङ्ग्रामे न्यहनं शत्रून् शरैर्विमलैरहम्। अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम् ॥ ४ ॥ ज्वलन्तं शूलमुद्यम्य यां दिशं प्रतिपद्यते। तस्यां दिशि विशीर्य्यन्ते शत्रवो मे महामुने ॥ ५ ॥ तेन भग्नानरीन् सर्व्वान्मद्भग्नान्मन्यते जनः। तेन भग्नानि सैन्यानि पृष्ठतोऽनुव्रजाम्यहम् ॥ ६ ॥ भगवांस्तन्ममाचक्ष्व को वै स पुरुषोत्तमः। शूलपाणिर्मया दृष्टस्तेजसा सूर्य्यसन्निभः ॥ ७ ॥ न पद्भ्यां स्पृशते भूमिं न च शूलं विमुञ्चति। शूलाच्छूलसहस्राणि निष्पेतुस्तस्य तेजसा ॥ ८ ॥

व्यास उवाच। प्रजापतीनां प्रथमं तैजसं पुरुषं प्रभुम्। भुवनं भूर्भुवं देवं सर्व्वलोकेश्वरं प्रभुम् ॥ ९ ॥ ईशानं वरदं पार्थ

दृष्टवानसि शङ्करम् । तं गच्छ शरणं देवं वरदं भुवनेश्वरम्
॥ १० ॥ महादेवं महात्मानमीशानं जटिलं शिवम् । त्र्यक्षं
महाभुजं रुद्रं शिखिनं चीरवाससम् ॥ ११ ॥ महादेवं हरं
स्थाणुं वरदं भुवनेश्वरम् । जगत्प्रधानमधिकं जगत्प्रीतिमधी-
श्वरम् ॥ १२ ॥ जगद्योनिं जगद्द्वीपं जयिनं जगतो गतिम् ।
विश्वात्मानं विश्वसृजं विश्वमूर्त्तिं यशस्विनम् ॥ १३ ॥ विश्वे-
श्वरं विश्वनरं कर्म्मणामीश्वरं प्रभुम् । शम्भुं स्वयम्भुं भूतेशं भूत-
भव्यभवोद्भवम् ॥ १४ ॥ योगं योगेश्वरं सर्व्वं सर्व्वलोकेश्वरेश्वरम् ।
सर्व्वश्रेष्ठं जगच्छ्रेष्ठं वरिष्ठं परमेष्ठिनम् ॥ १५ ॥ लोकत्रयविधा-
तारमेकं लोकत्रयाश्रयम् । सुदुर्ज्जयं जगन्नाथं जन्ममृत्युजराति-
गम् ॥१६॥ ज्ञानात्मानं ज्ञानगम्यं ज्ञानश्रेष्ठं सुदुर्विदम् । दातार-
ञ्चैव भक्तानां प्रसादविहितान् वरान् ॥ १७ ॥ तस्य पारिषदा
दिव्या रूपैर्नानाविधैर्विभोः । वामना जटिला मुण्डा ह्रस्वग्रीवा
महोदराः ॥ १८ ॥ महाकाया महोत्साहा महाकर्णास्तथापरे ।
आननैर्विकृतैः पादैः पार्थ वेशैश्च वैकृतैः ॥ १९ ॥ ईदृशैः स महा-
देवः पूज्यमानो महेश्वर । स शिवस्तात तेजस्वी प्रसादाद्याति
तेऽग्रतः ॥ २० ॥ तस्मिन् घोरे सदा पार्थ संग्रामे लोमहर्षणे ।
द्रौणिकर्णकृपैर्गुप्तां महेष्वासैः प्रहारिभिः ॥ २१ ॥ कस्तां सेनां
तदा पार्थ मनसापि प्रधर्षयेत् । ऋते देवान्महेष्वासाद्बहुरूपा-
न्महेश्वरात् ॥ २२ ॥ स्थातुमुत्सहते कश्चिन्न तस्मिन्नग्रतः स्थिते ।
न हि भूतं समन्तेन त्रिषु लोकेषु विद्यते ॥ २३ ॥ गन्धेनापि हि
संग्रामे तस्य क्रुद्धस्य शत्रवः । विसंज्ञा हतभूयिष्ठा वेपन्ति च
पतन्ति च ॥ २४ ॥ तस्मै नमस्तु कुर्व्वन्तो देवास्तिष्ठन्ति वै दिवि ।
ये चान्ये मानवा लोके ये च स्वर्गजितो नराः ॥ २५ ॥ ये भक्ता
वरदं देवं शिवं रुद्रमुमापतिम् । इह लोके सुखं प्राप्य ते यान्ति
परमाङ्गतिम् ॥ २६ ॥ नमस्कुरुष्व कौन्तेय तस्मै शान्ताय वै सदा ।

रुद्राय शितिकण्ठाय कनिष्ठाय सुवर्च्चसे ॥ ॥ कपर्द्दिने करा-
लाय हर्य्यश्ववरदाय च। याम्यायारक्ताय महते शङ्कराय
च ॥ २८ ॥ काम्याय हरिनेत्राय स्थाणवे पुरुषाय च। हरि-
केशाय मुण्डाय कनिष्ठाय सुवर्च्चसे ॥ २९ ॥ भास्कराय सुतीर्थाय
देवदेवाय रंहसे। बहुरूपाय सर्वाय प्रियाय प्रियवाससे ॥ ३० ॥
उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढ़ुषे। गिरिशाय सुशान्ताय
पतये चीरवाससे ॥३१॥ हिरण्यबाहवे राजन्नुग्राय पतये दिशाम्।
पर्ज्जन्यपतये चैव भूतानां पतये नमः ॥ ३२ ॥ वृक्षाणाम्पतये चैव
गवाञ्च पतये तथा। वृक्षैरावृतकायाय सेनान्ये मध्यमाय च ॥३३॥
स्रुवहस्ताय देवाय धन्विने भार्गवाय च। बहुरूपाय विश्वस्य
पतये मुञ्जवाससे ॥ ३४ ॥ सहस्रशिरसे चैव सहस्रनयनाय च।
सहस्रबाहवे चैव सहस्रचरणाय च ॥ ३५ ॥ शरणं गच्छ कौन्तेय
वरदं भुवनेश्वरम्। उमापतिं विरूपाक्षं दक्षयज्ञनिवर्हणम् ॥३६॥
प्रजानाम्पतिमव्यग्रं भूतानां पतिमव्ययम्। कपर्द्दिनं वृषावर्त्तं
वृषनाभं वृषध्वजम् ॥ ३७ ॥ वृषदर्पं वृषपतिं वृषशृङ्गं वृषर्षभम्।
वृषाङ्कं वृषभोदारं वृषभं वृषभेक्षणम् ॥ ३८ ॥ वृषायुधं वृषशरं
वृषभूतं महेश्वरम्। महोदरं महाकायं द्वीपिचर्मनिवासिनम
॥ ३९ ॥ लोकेशं वरदं मुण्डं ब्रह्मण्यं ब्राह्मणप्रियम्। त्रिशूल-
पाणिं वरदं खड्गचर्म्मधरं शुभम् ॥ ४० ॥ पिनाकिनं खण्डपरशुं
लोकानां पतिमीश्वरम। प्रपद्ये देवमीशानं शरण्यं चीरवाससम्
॥ ४१ ॥ नमस्तस्मै सुरेशाय यस्य वैश्रवणः सखा। सुवाससे
नमो नित्यं सुव्रताय सुधन्विने ॥ ४२ ॥ धनुर्द्धराय देवाय प्रिय-
धन्वाय धन्विने। धन्वन्तराय धनुषे धन्वाचार्य्याय ते नमः ॥ ४३ ॥
उग्रायुधाय देवाय नमः सुरवराय च। नमोऽस्तु बहुरूपाय
नमस्ते बहुधन्विने ॥ ४४ ॥ नमोऽस्तु स्थाणवे नित्यं नमस्तस्मै
सुधन्विने। नमोऽस्तु त्रिपुरघ्नाय भगघ्नाय च वै नमः ॥ ४५ ॥

वनस्पतीनां पतये नराणां पतये नमः। मातृणाम्पतये चैव गणा-
नाम्पतये नमः ॥ ४६ ॥ गवाञ्च पतये नित्यं यज्ञानां पतये नमः।
अपाञ्च पतये नित्यं देवानां पतये नमः ॥ ४७ ॥ पूष्णो दन्त-
विनाशाय त्र्यक्षाय वरदाय च। हराय नीलकण्ठाय स्वर्ण-
केशाय वै नमः ॥ ४८ ॥ कर्माणि यानि दिव्यानि महादेवस्य
धीमतः। तानि ते कीर्त्तयिष्यामि यथाप्रज्ञं यथाश्रुतम् ॥ ४९ ॥
न सुरा नासुरा लोके न गन्धर्वा न राक्षसाः। सुखमेधन्ते कुपिते
तस्मिन्नपि गुहागताः ॥ ५० ॥ दक्षस्य यजमानस्य विधिवत्संभृतं
पुरा। विव्याध कुपितो यज्ञं निर्दयस्त्वभवत्तदा ॥५१॥ धनुषा
वाणमुत्सृज्य सघोषं विननाद च। ते न शर्म्म कुतः शान्तिं लेभिरे
स्म सुरास्तदा ॥ ५२ ॥ विद्रुते सहसा यज्ञे कुपिते च महेश्वरे।
तेन ज्यातलघोषेण सर्व्वे देवाः समाकुलाः ॥ ५३ ॥ बभूवुर्व्वशगाः
पार्थ निपेतुश्च सुरासुराः। आपश्चुक्षुभिरे सर्व्वाश्चकम्पे च वसु-
न्धरा ॥ ५४ ॥ पर्व्वताश्च व्यशीर्य्यन्त दिशो नागाश्च मोहिताः।
अन्धेन तमसा लोका न प्राकाशन्त संवृताः ॥ ५५ ॥ जघ्निवान्
सह सूर्य्येण सर्व्वेषां ज्योतिषां प्रभाम्। चुक्षुभुर्भयभीताश्च शान्ति-
ञ्चक्रुस्तथैव च ॥ ५६ ॥ ऋषयः सर्व्वभूतानामात्मनश्च सुखैषिणः।
पूषाणमभ्यद्रवत् शङ्करः प्रहसन्निव ॥ ५७ ॥ पुरोडाशं भक्षयतो
दशनान् वै व्यशातयत्। ततो निश्चक्रमुर्द्देवा वेपमाना नताः स्म
तम् ॥ ५८ ॥ पुनश्च सन्दधे दीप्तान् देवानां निशितान् शरान्।
सधूमान् सस्फुलिङ्गांश्च विद्युत्तोयदसन्निभान् ॥ ५९ ॥ तं दृष्ट्वा
तु सुराः सर्व्वे प्रणिपत्य महेश्वरम्। रुद्रस्य यज्ञभागञ्च विशिष्टं
तेऽन्वकल्पयन् ॥ ६० ॥ भयेन त्रिदशा राजन् शरणञ्च प्रपे-
दिरे। तेन चैवातिकोपेन स यज्ञः सन्धितस्तदा ॥ ६१ ॥ भग्ना-
श्चापि सुराश्चासन् भीताश्चाद्यापि तं प्रति। असुराणां पुराण्यासं-
स्त्रीणि वीर्य्यवतां दिवि ॥ ६२ ॥ आयसं राजतञ्चैव सौवर्ण्णं

परमं महत्। सौवर्णं कमलाक्षस्य तारकाक्षस्य राजतम् ॥ ६३ ॥
तृतीयन्तु परं तेषां विद्युन्मालिन आयसम्। न शक्तस्तानि
मघवा नेतुं सर्वायुधैरपि ॥ ६४ ॥ अथ सर्वे सुरा रुद्रं जग्मुः
शरणमर्द्दिताः। ते तमुचुर्महात्मानं सर्वे देवाः सवासवाः ॥ ६५ ॥
ब्रह्मदत्तवरा ह्येते घोरास्त्रिपुरवासिनः। पीड़यन्त्यधिकं लोकं
यस्मात्ते वरदर्पिताः ॥ ६६ ॥ त्वदृते देवदेवेश नान्यः शक्तः
कथञ्चन। हन्तुं दैत्यान्महादेव जहि [illegible]सुरद्विषः ॥ ६७ ॥
रुद्र रौद्रा भविष्यन्ति पशवः सर्वकर्मसु। [illegible]पातयिष्यसे चैता-
नसुरान् भुवनेश्वर ॥ ६८ ॥ स तथोक्तस्तथेत्युक्त्वा देवानां हित-
काम्यया। गन्धमादनविन्ध्यौ च कृत्वा वंशध्वजौ हरः ॥ ६९ ॥
पृथ्वीं ससागरवनां रथं कृत्वा च शङ्करः। अक्षं कृत्वा तु नागेन्द्रं
शेषं नाम त्रिलोचनः ॥ ७० ॥ चक्रे कृत्वा तु चन्द्रार्कौ देवदेवः
पिनाकधृक्। अणी कृत्वैलपत्रञ्च पुष्पदन्तञ्च त्र्यम्बकः ॥ ७१ ॥ यूपं
कृत्वा तु मलयमवनाहञ्च तक्षकम्। योक्त्राङ्गानि च सत्त्वानि कृत्वा
सर्वः प्रतापवान् ॥ ७२ ॥ वेदान् कृत्वाथ चतुरश्चतुरोऽश्वान् महे-
श्वरः। उपवेदान् खलीनांश्च कृत्वा लोकत्रयेश्वरः ॥ ७३ ॥
गायत्रीं प्रग्रहं कृत्वा सावित्रीञ्च महेश्वरः। [illegible]ङ्कारं प्रतोदञ्च
ब्रह्माणञ्चैव सारथिम् ॥ ७४ ॥ गाण्डीवं मन्दरं कृत्वा गुणं कृत्वा
च वासुकिम्। विष्णुं शरोत्तमं कृत्वा शल्यमग्निं तथैव च ॥ ७५ ॥
वायुं कृत्वाथ वाजाभ्यां पुङ्खे वैवस्वतं यमम्। विद्युत् कृत्वाथ
निश्वानं मेरुं कृत्वाथ वै ध्वजम् ॥ ७६ ॥ आरुह्य स रथं दिव्यं
सर्वदेवमयं शिवः। त्रिपुरस्य वधार्थाय स्थाणुः प्रहरताम्वरः ॥ ७७ ॥
असुराणामन्तकरः श्रीमानतुलविक्रमः। स्तूयमानः सुरैः पार्थ
ऋषिभिश्च तपोधनैः ॥ ७८ ॥ स्थानं माहेश्वरं कृत्वा दिव्यमप्रतिमं
प्रभुः। अतिष्ठत् स्थाणुभूतः स सहस्रं परिवत्सरान् ॥ ७९ ॥
यदा त्रीणि समेतानि अन्तरीक्षे पुराणि च। त्रिपर्वणा त्रि-

शक्रेण तदा तानि विभेदुः सः ॥ ८० ॥ पुराणि न च तं भेत्तुं-
दानवाः प्रतिवीचितुम् । शरं कालाग्निसंयुक्तं विष्णुसोमसमा-
युतम् ॥ ८१ ॥ पुराणि दग्धवन्तं तं देवी याता प्रवीचितुम् ।
बालमङ्कगतं कृत्वा स्वयं पञ्चशिखं पुनः ॥ ८२ ॥ उमा जिज्ञास-
माना वै कोऽयमित्यब्रवीत् सुरान् । असूयतश्च शक्रस्य वज्रेण
प्रहरिष्यतः ॥ ८३ ॥ बाहुं सवज्रं तं तस्य क्रुद्धस्यास्तम्भयत्
प्रभुः । प्रहस्य भगवांस्तूर्णं सर्व्वलोकेश्वरो विभुः ॥ ८४ ॥ ततः
संस्तम्भितभुजः शक्रो देवगणैर्वृतः । जगाम ससुरस्तूर्णं ब्रह्माणं
प्रभुमव्ययम् ॥ ८५ ॥ ते तं प्रणम्य शिरसा प्रोचुः प्राञ्जलयस्तदा ।
किमप्यङ्कगतं ब्रह्मन् पार्व्वत्या भूतमद्भुतम् ॥ ८६ ॥ बालरूपधरं
दृष्ट्वा नास्माभिरभिवादितः । तस्मात्त्वां प्रष्टुमिच्छामो निर्ज्जिता
येन वै वयम् ॥ ८७ ॥ अयुध्यता हि बालेन लीलया सपुरन्दराः ।
तेषां तद्वचनं श्रुत्वा ब्रह्मा ब्रह्मविदाम्वरः ॥ ८८ ॥ ध्यात्वा स
शम्भुं भगवान् बालञ्चामिततेजसम् । उवाच भगवान् ब्रह्मा
शक्रादींश्च सुरोत्तमान् ॥ ८९ ॥ चराचरस्य जगतः प्रभुः स भग-
वान् हरः । तस्मात् परतरं नान्यत् किञ्चिदस्ति महेश्वरात् ॥९०॥
यो दृष्टो ह्युमया सार्द्धं युष्माभिरमितद्युतिः । स पार्व्वत्याः कृते
देवः कृतवान् बालरूपताम् ॥ ९१ ॥ ते मया सहिता यूयं
प्रापयध्वं तमेव हि । स एव भगवान् देवः सर्व्वलोकेश्वरः प्रभुः
॥ ९२ ॥ न सम्बुबुधिरे चैनं देवास्तं भुवनेश्वरम् । सप्रजापतयः
सर्व्वे बालार्कसदृशप्रभम् ॥ ९३ ॥ अथाभ्येत्य ततो ब्रह्मा दृष्ट्वा च स
महेश्वरम् । अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तं पितामहः ॥ ९४ ॥

ब्रह्मोवाच । त्वं यज्ञो भुवनस्यास्य त्वं गतिस्त्वं परायणः ।
त्वम्भवस्त्वं महादेवस्त्वं धाम परमं पदम् ॥ ९५ ॥ त्वया सर्व्वमिदं
व्याप्तं जगत् स्थावरजङ्गमम् । भगवन् भूतभव्येश लोकनाथ जग-
त्पते । प्रसादं कुरु शक्रस्य त्वया क्रोधार्द्दितस्य वै ॥ ९६ ॥

व्यास उवाच। पद्मयोनेर्वचः श्रुत्वा ततः प्रीतो महेश्वरः। प्रसादाभिमुखो भूत्वा अट्टहासमथाकरोत्॥ ९७॥ ततः प्रसादयामासुरुमां रुद्रञ्च ते सुराः। अभवंश्च पुनर्बाहुः प्रकृतिस्थो हि वज्रिणः॥ ९८॥ तेषां प्रसन्नो भगवान् सपत्नीको वृषध्वजः। देवानां त्रिदशश्रेष्ठो दक्षयज्ञविनाशनः॥ ९९॥ स वै रुद्रः स च शिवः सोऽग्निः सर्वः स सर्ववित्। स चेन्द्रश्चैव वायुश्च सोऽश्विनौ स च विद्युतः॥ १००॥ स भवः स च पर्जन्यो महादेवः स चानघः। स चन्द्रमाः स चेशानः स सूर्यो वरुणश्च सः॥ १०१॥ स कालः सोऽन्तको मृत्युः स यमो रात्र्यहानि च। मासार्द्धमासा ऋतवः सन्ध्ये संवत्सराणि च॥ १०२॥ धाता च स विधाता च विश्वात्मा विश्वकर्म्मकृत्। सर्वासां देवतानाञ्च धारयत्यवपुर्वपुः॥ १०३॥ सर्वैर्देवैः स्तुतो देवः सैकधा बहुधा च सः। शतधा सहस्रधा चैव तथा शतसहस्रधा॥ १०४॥ द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः। घोरा चान्या शिवा चान्या ते तनू बहुधा पुनः॥ १०५॥ घोरा तु या तनुस्तस्य सोऽग्निर्विष्णुः स भास्करः। सौम्या तु पुनरेवास्य आपो ज्योतींषि चन्द्रमाः॥ १०६॥ वेदाङ्गाः सोपनिषदः पुराणाध्यात्मनिश्चयाः। यदत्र परमं गुह्यं स वै देवो महेश्वरः॥ १०७॥ ईदृशश्च महादेवो भूयांश्च भगवानजः। न हि सर्वे मया शक्या वक्तुं भगवतो गुणाः॥ १०८॥ अपि वर्षसहस्रेण सततं पाण्डुनन्दन। सर्वैर्ग्रहैर्गृहीतान् वै सर्वपापसमन्वितान्॥ १०९॥ स मोचयति सुप्रीतः शरण्यः शरणागतान्। आयुरारोग्यमैश्वर्य्यं वित्तं कामांश्च पुष्कलान्॥ ११०॥ स ददाति मनुष्येभ्यः स चैवाक्षिपते पुनः। सेन्द्रादिषु च देवेषु तस्य चैश्वर्य्यमुच्यते॥ १११॥ स चैव व्यापृतो लोके मनुष्याणां शुभाशुभे। ऐश्वर्य्याच्चैव कामानामीश्वरः पुनरुच्यते॥ ११२॥ महेश्वरश्च भूतानां महतामीश्वरश्च

तनुभिर्बहुभाच्चपि विश्वं व्याप्नोति वै जगत् ॥ ११३ ॥ तस्य देवस्य यहक्तं समुद्रे तदतिष्ठत । वड़वामुखेऽतिविख्यातं पिवत्तोयमयं हविः ॥ ११४ ॥ एष चैव श्मशानेषु देवो वसति नित्यशः । यजन्त्येनं जनास्तत्र वीरस्थान इतीश्वरम् ॥ ११५ ॥ अस्य दीप्तानि रूपाणि घोराणि च बहूनि च । लोके यान्यस्य पूज्यन्ते मनुष्याः प्रवदन्ति च ॥ ११६ ॥ नामधेयानि लोकेषु बहून्यस्य यथार्थवित् । निरुच्यते महत्त्वाच्च विभुत्वात् कर्मभिस्तथा ॥ ११७ ॥ वेदे चास्य समाम्नातं शतरुद्रियमुत्तमम् । नाम्ना चानन्तरुद्रेति उपस्थानं महात्मनः ॥ ११८ ॥ स कामानां प्रभुर्देवो ये दिव्या ये च मानुषाः । स विभुः स प्रभुर्देवो विश्वं व्याप्नोति वै महत् ॥ ११९ ॥ ज्येष्ठभूतं वदन्त्येनं ब्राह्मणा मुनयस्तथा । प्रथमो ह्येष देवानां मुखादस्यानिलोऽभवत् ॥ १२० ॥ सर्व्वथा यत् पशून् पाति तैश्च यद्रमते पुनः । तेषामधिपतिर्यच्च तस्मात् पशुपतिः स्मृतः ॥ १२१ ॥ नित्येन ब्रह्मचर्य्येण लिङ्गमस्य यदा स्थितम् । महयत्येष लोकांश्च महेश्वर इति स्मृतः ॥ १२२ ॥ ऋषयश्चैव देवाश्च गन्धर्व्वाप्सरसस्तथा । लिङ्गमस्यार्च्चयन्ति स्म तच्चाप्यूर्द्ध्वं समास्थितम् ॥ १२३ ॥ पूज्यमाने ततस्तस्मिन् मोदते च महेश्वरः । सुखी प्रीतश्च भवति प्रहृष्टश्चैव शङ्करः ॥ १२४ ॥ यदस्य बहुधा रूपं भूतभव्यभवत्स्थितम् । स्थावरं जङ्गमञ्चैव बहुरूपस्तत स्मृतः ॥ १२५ ॥ एकाक्षो जाज्वलन्नास्ते सर्व्वतोऽक्षिमयोऽपि वा । क्रोधाद्यश्चाविशल्लोकांस्तस्मात् सर्व्व इति स्मृतः ॥ १२६ ॥ धूम्ररूपञ्च यत्तस्य धूर्ज्जटिस्तेन चोच्यते । विश्वे देवाश्च यत्तस्मिन् विश्वरूपस्ततः स्मृतः ॥ १२७ ॥ तिस्रो देव्यो यदा चैनं भजन्ते भुवनेश्वरम् । द्यौरापः पृथिवी चैव त्र्यम्बकस्तु ततः स्मृतः ॥ १२८ ॥ समेधयति यन्नित्यं सर्व्वार्थान् सर्व्वकर्मसु । शिवमिच्छन् मनुष्याणां तस्मादेष शिव स्मृतः ॥ १२९ ॥ सहस्राक्षो-

ऽप्युताग्नो वा सर्वतोऽग्निमयोऽपि वा। यच्च विश्वं महत् पाति महादेवस्ततः स्मृतः ॥ १३० ॥ दहत्यूर्द्ध्वं स्थितो यच्च प्राणोत्पत्तिस्थितश्च यत्। स्थितलिङ्गश्च यन्नित्यं तस्मात् स्थाणुरिति स्मृतः ॥ १३१ ॥ सूर्य्याचन्द्रमसौ लोके प्रकाशन्ते रुचश्च याः। ते केशसंज्ञितास्त्र्यक्षे व्योमकेश इति स्मृतः ॥ १३२ ॥ ब्रह्माणमिन्द्रावरुणौ यमं धनदमेव च। निगृह्य हरते यस्मात्तस्माद्धर इति स्मृतः ॥ १३३ ॥ भूतं भव्यं भविष्यच्च यच्च सर्वमशेषतः। भव एव ततो यस्माद्भूतभव्यभवोद्भवः। १३४ ॥ विषमस्थः शरीरेषु समश्च प्राणिनामिह। स वायुर्विषमस्थेषु प्राणोऽपानः शरीरिषु ॥१३५॥ पूजयेद्विग्रहं यस्तु लिङ्गञ्चापि महात्मनः। लिङ्ग पूजयिता नित्यं महतीं श्रियमश्नुते ॥ १३६ ॥ ऊरुभ्यामर्द्धमाग्नेयं सोमार्द्धञ्च शिवा तनुः। आत्मनोऽर्द्धं तथा चाग्निः सोमार्द्धं पुनरुच्यते ॥ ४३७ ॥ तैजसी महतीदीप्ता देवेभ्योऽस्य शिवा तनुः। भास्वती मानुषेष्वस्य तनुर्घोराग्निरुच्यते ॥ १३८ ॥ ब्रह्मचर्य्यं चरत्येष शिवा यास्य तनुस्तथा। यस्य घोरतमा मूर्त्तिः सर्वानत्ति तयेश्वरः ॥ १३९ ॥ यन्निर्द्दहति यत्तीक्ष्णो यदुग्रो यत् प्रतापवान्। मांसशोणितमज्जादो उच्यते रुद्र उच्यते ॥ १४० ॥ कपिः श्रेष्ठ इति प्रोक्तो धर्मश्च वृष उच्यते। स देवदेवो भगवान् कीर्त्यतेऽतो वृषाकपिः ॥ १४१ ॥ उन्मीलिताभ्यां नेत्राभ्यां बलाद्देवो महेश्वरः। ललाटे नेत्रमसृजत्तेन त्र्यक्ष इति स्मृतः ॥ १४२ ॥ एष देवो महादेवो योऽसौ पार्थ तवाग्रतः। संग्रामे शात्रवान्निघ्नंस्त्वया दृष्टः पिनाकधृक् ॥ १४३ ॥ सिन्धुराजवधार्थाय प्रतिज्ञाय त्वयानघ। कृष्णेन दर्शितः स्वप्ने यस्तु शैलेन्द्रमूर्द्धनि ॥ १४४ ॥ एष वै भगवान्देवः संग्रामे याति तेऽग्रतः। येन दत्तानि तेऽस्त्राणि यैस्त्वया दानवा हताः ॥ १४५ ॥ धन्यं यशस्यमायुष्यं पुण्यं वेदैश्च सम्मितम्। देवदेवस्य ते पार्थ व्याख्यातं शतरुद्रियम्

॥ १४६ ॥ सर्वार्थसाधनं पुण्यं सर्वकिल्बिषनाशनम्। सर्वपाप-प्रशमनं सर्वदुःखभयापहम् ॥ १४७ ॥ चतुर्विधमिदं स्तोत्रं यः शृणोति नरः सदा। विजित्य शत्रून् सर्वान् स रुद्रलोके महीयते ॥ १४८ ॥ चरितं महात्मनो दिव्यं सांग्रामिकमिदं शुभम्। पठन् वै शतरुद्रीयं शृण्वंश्च सततोत्थितम् ॥ १४९ ॥ भक्तो विश्वेश्वरं देवं मानुषेषु तु यः सदा। वरान् कामान् स लभते प्रसन्ने त्र्यम्बके नरः ॥ १५० ॥ गच्छ युध्यस्व कौन्तेय न तवास्ति पराजयः। यस्य मन्त्री च गोप्ता च पार्श्वतस्ते जनार्द्दनः ॥ १५१ ॥

सञ्जय उवाच। एवमुक्त्वार्जुनं सङ्ख्ये पराशरसुतस्तदा। जगाम भरतश्रेष्ठ यथागतमरिन्दम ॥ १५२ ॥

इति द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि शतरुद्रिये त्र्यधिकद्विशततोऽध्यायः ॥ २०३ ॥

---

सञ्जय उवाच। युद्धं कृत्वा महाघोरं पञ्चाहानि महाबलः। ब्राह्मणो निहतो राजन् ब्रह्मलोकमवाप्तवान् ॥ १ ॥ अधीते यत् फलं वेदे तदस्मिन्नपि पर्वणि। क्षत्रियाणामभीरूणामुक्तमत्र महद्यशः ॥ २ ॥ य इदं पठते पर्व शृणुयाद्वापि नित्यशः। स मुच्यते महापापैः कृतैर्घोरैश्च कर्मभिः ॥ ३ ॥ यज्ञावाप्तिर्ब्राह्मणस्येह नित्यं घोरे युद्धे क्षत्रियाणां जयश्च। शेषा वर्णाः काममिष्टं लभन्ते पुत्रान् पौत्रान् नित्यमिष्टांस्तथैव ॥ ४ ॥

इति द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि द्रोणपर्वपाठफलश्रुतौ चतुरधिकद्विशततोऽध्यायः। समाप्तञ्च नारायणास्त्रमोक्षपर्व ॥ २०४ ॥

---

॥ समाप्तञ्च द्रोणपर्व ॥

# MAHABHARATAM

## DRONA PARVA

TEXT

PUBLISHED AND DISTRIBUTED GRATIS

BY

PRATAP CHANDRA ROY, C. I. E.

# श्रीमहाभारतम् ।

श्रीमन्महर्षिवेदव्यासविरचितम् ।

द्रोणपर्व्व ।

सि, आइ, इ, उपाधिधारिणा

रायश्रीप्रतापचन्द्रेण

प्रकाशितम्

मूल्यं विना वितीर्णञ्च ।

"स्वतपादादिपाप्मा यूयं क्षिमवबोदय"

---

तृतीयसंस्करणम् ।

कलिकाता बीडन् ष्ट्रीटान्तर्गत

१ नं राजा गुरुदास ष्ट्रीट् भारतयन्त्रे

श्रीकालिदास सेनेन मुद्रितम् ।

शकाब्दाः १८११ ।

# श्रीमहाभारतम्।



## कर्णपर्व।

---

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत्॥

वैशम्पायन उवाच। ततो द्रोणे हते राजन् दुर्य्योधनमुखा नृपाः। भृशमुद्विग्नमनसो द्रोणपुत्रमुपागमन्॥ १॥ ते द्रोणमनुशोचन्तः कश्मलाभिहतौजसः। पर्य्युपासन्त शोकार्त्तास्ततः शारद्वतीसुतम्॥ २॥ ते मुहूर्त्तं समाश्वास्य हेतुभिः शास्त्रसम्मितैः। रात्र्यागमे महीपालाः स्वानि वेश्मानि भेजिरे॥३॥ तेषु वेश्मसु कौरव्य पृथ्वीशा नाप्नुवन् सुखम्। चिन्तयन्तः क्षयं तीव्रं न निद्राञ्चोपलेभिरे॥ ४॥ विशेषतः सूतपुत्रो राजा चैव सुयोधनः। दुःशासनश्च शकुनिर्न निद्रामुपलेभिरे॥ ५॥ सहितास्तां निशान्ते तु दुर्य्योधननिवेशने। चिन्तयन्तः परिक्लेशान् पाण्डवानां महात्मनाम्॥ ६॥ यत्ते द्यूतपरिक्लिष्टाः कृष्णाचानायिता सभाम्। तत् स्मरन्तोऽन्वतप्यन्त भृशमुद्विग्नचेतसः॥७॥ तथा तेषां चिन्तयतां तान् क्लेशान् द्यूतकारितान्। दुःखेन क्षणदा राजन् जगामाब्दशतोपमा॥ ८॥ ततः प्रभातसमये स्थिता दिष्टस्य शासने। चक्रुरावश्यकं सर्वं विधिदृष्टेन कर्मणा॥ ९॥

ते कृत्वावश्यकार्य्याणि समाश्वस्य च भारत। योगमाज्ञापयामासुर्युद्धाय च विनिर्ययुः॥ १०॥ कर्णं सेनापतिं कृत्वा कृतकौतुकमङ्गलाः। वाचयित्वा द्विजश्रेष्ठान् दधिपात्रघृताक्षतैः॥११॥ निष्कैर्गोभिर्हिरण्यैश्च वासोभिश्च महाधनैः। वन्द्यमाना जयाशीर्भिः सूतमागधवन्दिभि ॥ १२॥ तथैव पाण्डवा राजन् कृतपूर्वाह्णिकक्रियाः। शिबिरान्निर्ययू राजन् युद्धाय कृतनिश्चयाः॥ १३॥ ततः प्रववृते युद्धं तुमुलं लोमहर्षणम्। कुरूणां पाण्डवानाञ्च परस्परजयैषिणाम् ॥१४॥ तयोर्द्विदिवसं युद्धं कुरुपाण्डवसेनयोः। कर्णे सेनापतौ राजन् बभूवातीव दारुणम् ॥१५ ततः शत्रुक्षयं कृत्वा सुमहान्तं रणे वृषः। पश्यतां धार्त्तराष्ट्राणां फाल्गुनेन निपातितः॥ १६॥ ततस्तत् सञ्जयः सर्वं गत्वा नागपुरं प्रति। आचष्ट धृतराष्ट्राय यद्वृत्तं कुरुजाङ्गले॥ १७॥

जनमेजय उवाच। आपगेयं हतं श्रुत्वा द्रोणञ्चापि महारथम्। जगाम परमामार्त्तिं वृद्धो राजाम्बिकासुतः॥ १८॥ स श्रुत्वा निहतं कर्णं दुर्य्योधनहितैषिणम्। कथं द्विजवर प्राणानधारयत दुःखितः॥ १९॥ यस्मिन् जयाशां पुत्राणाममन्यत स पार्थिवः। तस्मिन् हते स कौरव्यः कथं प्राणानधारयत्॥ २०॥ दुर्मरं बत मन्येऽहं नृणां कृच्छ्रेऽपि वर्त्तताम्। यत्र कर्णं हतं श्रुत्वा नात्यजज्जीवितं नृपः॥ २१॥ तथा शान्तनवं वृद्धं ब्रह्मन् वाह्लीकमेव च। द्रोणञ्च सोमदत्तञ्च भूरिश्रवसमेव च॥ २२॥ तथैव चान्यान् सुहृदः पुत्रान् पौत्रांश्च पातितान्। श्रुत्वा यन्नाजहात् प्राणांस्तन्मन्ये दुष्करं द्विज॥ २३॥ एतानि सर्वाण्याचक्ष्व विस्तरेण यथातथम्। न हि तृप्यामि पूर्व्वेषां शृण्वानश्चरितं महत्॥ २४॥

इति कर्णपर्वणि जनमेजयवाक्ये प्रथमोऽध्यायः॥ १॥

---

वैशम्पायन उवाच। हते कर्णे महाराज निशि गावल्गणिस्तदा। दीनो ययौ नागपुरमश्वैर्वातसमैर्जवे ॥ १ ॥ स हास्तिनपुरं प्राप्तो भृशमुद्विग्नमानसः। जगाम धृतराष्ट्रस्य क्षयं प्रक्षीणबान्धवम् ॥ २ ॥ समुद्वीक्ष्य स राजानं कश्मलाभिहतौजसम्। ववन्दे प्राञ्जलिर्भूत्वा मूर्ध्ना पादौ नृपस्य ह ॥ ३ ॥ सम्पूज्य च यथान्यायं धृतराष्ट्रं महीपतिम्। हा कष्टमिति चोक्त्वा स ततो वचनमाददे ॥ ४ ॥ सञ्जयोऽहं क्षितिपते कच्चिदास्ते सुखं भवान्। स्वदोषैरापदं प्राप्य कच्चिन्नाद्य विमुह्यसि ॥ ५ ॥ हितान्युक्तानि विदुरद्रोणगाङ्गेयकेशवैः। न गृहीतान्यनुस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ६ ॥ रामनारदकण्वाद्यैर्हितमुक्तं सभातले। न गृहीतमनुस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ७ ॥ सुहृदस्त्वद्धिते युक्तान् भीष्मद्रोणमुखान् परैः। निहतान् युधि संस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ८ ॥ तमेवंवादिनं राजा सूतपुत्रं कृताञ्जलिम्। सुदीर्घमुष्णं निश्वस्य दुःखार्त्त इदमब्रवीत् ॥ ९ ॥

धृतराष्ट्र उवाच। आपगेये हते शूरे दिव्यास्त्रवति सञ्जय। द्रोणे च परमेष्वासे भृशं मे व्यथितं मनः ॥ १० ॥ यो रथानां सहस्राणि दंशितानां दशैव ह। अहन्यहनि तेजस्वी निजघ्ने वसुसम्भवः ॥ ११ ॥ स हतो यज्ञसेनस्य पुत्रेणेह शिखण्डिना। पाण्डवेयाभिगुप्तेन भृशं मे व्यथितं मनः ॥ १२ ॥ भार्गव प्रददौ यस्मै परमास्त्रं महात्मने। साक्षाद्रामेण यो बाल्ये धनुर्वेद उपाकृतः ॥ १३ ॥ यस्य प्रसादात् कौन्तेया राजपुत्रा महारथाः। महारथत्वं संप्राप्तास्तथान्ये वसुधाधिपाः ॥ १४ ॥ तं द्रोणं निहतं श्रुत्वा धृष्टद्युम्नेन संयुगे। सत्यसन्धं महेष्वासं भृशं मे व्यथितं मनः ॥ १५ ॥ ययोर्लोके पुमानस्त्रे न समोऽस्ति चतुर्विधे। तौ द्रोणभीष्मौ श्रुत्वा तु हतौ मे व्यथितं मनः ॥ १६ ॥ त्रैलोक्ये यस्य चास्त्रेषु न पुमान् विद्यते समः। तं द्रोणं निहतं श्रुत्वा

किमकुर्वत मामकाः ॥ १७ ॥ संशप्तकानाञ्च बलं पाण्डवेन महात्मना । धनञ्जयेन विक्रम्य गमितं यमसादनम् ॥ १८ ॥ नारायणास्त्रे च हते द्रोणपुत्रस्य धीमतः । विप्रद्रुतेष्वनीकेषु किमकुर्वत मामकाः ॥ १९ ॥ विप्रद्रुतानहं मन्ये निमग्नान् शोकसागरे । प्लवमानान् हते द्रोणे भिन्ननौकानिवार्णवे ॥ २० ॥ दुर्य्योधनस्य कर्णस्य भोजस्य कृतवर्मणः । मद्रराजस्य शल्यस्य द्रौणेश्चैव कृपस्य च ॥ २१ ॥ मत्स्यपुत्रस्य शेषस्य तथान्येषाञ्च सञ्जय । विप्रद्रुतेष्वनीकेषु मुखवर्णोऽभवत् कथम् ॥ २२ ॥ एतत् सर्वं यथा वृत्तं तत्त्वं गावल्गणे रणे । आचक्ष्व पाण्डवेयानां मामकानाञ्च विक्रमम् ॥ २३ ॥

सञ्जय उवाच । तवापराधाद्यद्वृत्तं कौरवेयेषु मारिष । तच्छ्रुत्वा मा व्यथां कार्षीर्दिष्टे न व्यथते बुधः ॥ २४ ॥ तस्मादभावी भावी वा भवेदर्थो नरं प्रति । अप्राप्तौ तस्य वा प्राप्तौ न बुधः कुरुते व्यथाम् ॥ २५ ॥

धृतराष्ट्र उवाच । न व्यथाभ्यधिका काचिद्विद्यते मम सञ्जय । दिष्टमेतत्परं मन्ये कथयस्व यथेच्छकम् ॥ २६ ॥

इति कर्णपर्वणि सञ्जयधृतराष्ट्रसंवादे
द्वितीयोऽध्यायः ॥ २ ॥

---

सञ्जय उवाच । हते द्रोणे महेष्वासे तव पुत्रा महारथाः । बभूवुरस्वस्थमुखा विषण्णा गतचेतसः ॥ १ ॥ अवाङ्मुखाः शस्त्रभृतः सर्व एव विशाम्पते । अप्रेक्षमाणाः शोकार्त्ता नाभ्यभाषन् परस्परम् ॥ २ ॥ तान् दृष्ट्वा व्यथिताकारान् सैन्यानि तव भारत । ऊर्द्ध्वमेव निरैक्षन्त दुःखत्रस्तान्यनेकशः ॥ ३ ॥ शस्त्राण्येषान्तु राजेन्द्र शोणितान्यन्यनेकशः । प्राभ्रश्यन्त कराग्रेभ्यो दृष्ट्वा द्रोणं

हतं युधि ॥ ४ ॥ तानि वह्नान्यनेकानि लभ्यमानानि भारत। प्रदृश्यन्त महाराज नक्षत्राणि यथा दिवि ॥ ५ ॥ तथा तव स्तिमितं दृष्ट्वा गतसत्त्वमवस्थितम्। बलं तव महाराज राजा दुर्य्योधनोऽब्रवीत् ॥ ६ ॥ भवतां बाहुवीर्य्यं हि समाश्रित्य मया युधि। पाण्डवेयाः समाहूता युद्धञ्चेदं प्रवर्त्तितम् ॥ ७ ॥ तदिदं निहते द्रोणे विषण्णमिव लक्ष्यते। युध्यमानाश्च समरे योधा वध्यन्ति सर्व्वशः ॥ ८ ॥ जयो वापि वधो वापि युध्यमानस्य संयुगे। भवेत् किमत्र चित्रं वै युध्यध्वं सर्व्वतोमुखाः ॥ ९ ॥ पश्यध्वञ्च महात्मानं कर्णं वैकर्त्तनं युधि। प्रचरन्तं महेष्वासं दिव्यैरस्त्रैर्महाबलम् ॥ १० ॥ यस्य वै युधि सन्त्रासात् कुन्तीपुत्रो धनञ्जयः। निवर्त्तते सदा मन्दः सिंहात् क्षुद्रमृगो यथा ॥ ११ ॥ येन नागायुतप्राणो भीमसेनो महाबलः। मानुषेणैव युद्धेन तामवस्थां प्रवेशितः ॥ १२ ॥ येन दिव्यास्त्रवित् शूरो मायावी स घटोत्कचः। अमोघया रणे शक्त्या निहतो भैरवं नदन् ॥ १३ ॥ तस्य दुष्पारवीर्य्यस्य सत्यसन्धस्य धीमतः। बाह्वोर्द्रविणमक्षय्यमद्य द्रक्ष्यथ संयुगे ॥ १४ ॥ द्रोणपुत्रस्य विक्रान्तं राधेयस्यैव चोभयोः। पाण्डुपाञ्चालसैन्येषु द्रक्ष्यथाद्य महात्मनोः ॥ १५ ॥ सर्व्व एव भवन्तश्च शक्ताः प्रत्येकशोऽपि वा। पाण्डुपुत्रान् रणे हन्तुं ससैन्यान् किमु संहताः। वीर्य्यवन्तः कृतास्त्राश्च द्रक्ष्यथाद्य परस्परम् ॥ १६ ॥

सञ्जय उवाच। एवमुक्त्वा ततः कर्णं चक्रे सेनापतिं तदा। तव पुत्रो महावीर्य्यो भ्रातृभिः सहितोऽनघ ॥ १७ ॥ सैनापत्यमवाप्याथ कर्णो राजन् महारथः। सिंहनादं विनद्योच्चैः प्रायुध्यत रणोत्कटः ॥ १८ ॥ स सृञ्जयानां सर्व्वेषां पाञ्चालानाञ्च पश्यताम्। केकयानां विदेहानामकरोत् कदनं महत् ॥ १९ ॥ तस्येषुधाराः शतशः प्रादुरासन् शरासनात्। अग्रे पुङ्खेषु संसक्ता

यथा भ्रमरपङ्क्तयः ॥ २० ॥ स पीड़यित्वा पाञ्चालान् पाण्डवांश्च तरस्विनः । हत्वा सहस्रशो योधानर्जुनेन निपातितः ॥ २१ ॥

इति कर्णपर्वणि सञ्जयवाक्ये तृतीयोऽध्यायः ॥ ३ ॥

---

वैशम्पायन उवाच । एतत् श्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः । शोकस्यान्तमपश्यन् वै हतं मेने सुयोधनम् । विह्वलः पतितो भूमौ नष्टचेता इव द्विपः ॥ १ ॥ तस्मिन्निपतिते भूमौ विह्वले राजसत्तमे । आर्त्तनादो महानासीत् स्त्रीणां भरतसत्तम । स शब्दः पृथिवीं कृत्स्नां पूरयामास सर्वशः ॥ २ ॥ शोकार्णवे महाघोरे निमग्ना भरतस्त्रियः । रुरुदुर्भृशसन्तप्ता अतीवोद्विग्नमानसाः ॥ ३ ॥ राजानञ्च समासाद्य गान्धारी भरतर्षभ । निःसंज्ञा पतिता भूमौ सर्वाण्यन्तःपुराणि च ॥ ४ ॥ ततस्ताः सञ्जयो राजन् समाश्वासयदातुराः । मुह्यमानाः सुबहुशो मुञ्चन्तीर्वारि नेत्रजम् ॥ ५ ॥ समाश्वस्ताः स्त्रियस्तास्तु वेपमाना मुहुर्मुहुः । कदल्य इव वातेन धूयमानाः समन्ततः ॥ ६ ॥ राजानं विदुरश्चापि प्रज्ञाचक्षुषमीश्वरम् । आश्वासयामास तदा सिञ्चंस्तोयेन कौरवम् ॥ ७ ॥ स लब्ध्वा शनकैः संज्ञां ताश्च विज्ञाय योषितः । उन्मत्त इव राजा तु स्थितस्तूष्णीं विशाम्पते ॥ ८ ॥ ततो ध्यात्वा चिरं कालं निश्वसंश्च पुनः पुनः । स्वान् पुत्रान् गर्हयामास बहु मेने च पाण्डवान् ॥ ९ ॥ गर्हयंश्चात्मनो बुद्धिं शकुनेः सौवलस्य च । ध्यात्वा च सुचिरं कालं वेपमानो मुहुर्मुहुः ॥ १० ॥ संस्तभ्य च मनो भूयो राजा धैर्य्यसमन्वितः । पुनर्गावल्गणिं सूतं पर्य्यपृच्छत सञ्जयम् ॥ ११ ॥

धृतराष्ट्र उवाच । त्वया यत् कथितं वाक्यं श्रुतं सञ्जय तन्मया । कच्चिद्दुर्य्योधनः सूत न गतो वै यमक्षयम् ॥ १२ ॥

जये निराशः पुत्रो मे सततं जयकामुकः । ब्रूहि सञ्जय तत्त्वेन पुनरुक्तां कथामिमाम् ॥ १३ ॥

वैशम्पायन उवाच । एवमुक्तोऽब्रवीत् सूतो राजानं जनमेजयः । हतो वैकर्त्तनो राजन् सह पुत्रैर्महारथः । भ्रातृभिश्च महेष्वासैः सूतपुत्रैस्तनुत्यजैः ॥ १४ ॥ दुःशासनश्च निहतः पाण्डवेन यशस्विना । पीतञ्च रुधिरं कोपात् भीमसेनेन संयुगे ॥ १५ ॥

इति कर्णपर्व्वणि धृतराष्ट्रशोके चतुर्थोऽध्यायः ॥ ४ ॥

---

वैशम्पायन उवाच । एतत् श्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः । अब्रवीत् सञ्जयं सूतं शोकव्याकुलचेतनः ॥ १ ॥ दुष्प्रणीतेन मे तात पुत्रस्यादीर्घदर्शिनः । हतं वैकर्त्तनं श्रुत्वा तन्मे मर्म्माणि कृन्तति ॥२॥ तत्र मे संशयं छिन्धि दुःखपारं तितीर्षतः । कुरूणां पाण्डवानाञ्च के नु जीवन्ति के मृताः ॥ ३ ॥

सञ्जय उवाच । हतः शान्तनवो राजन् दुराधर्षः प्रतापवान् । हत्वा सञ्जयपाञ्चालान् भीष्मोऽथ दशभिर्दिनैः ॥ ४ ॥ ततो द्रोणो महेष्वासः पाञ्चालानामनीकिनीम् । निहत्य युधि दुर्द्धर्षः पश्चाद्रुक्मरथो हतः ॥ ५ ॥ हतशिष्टस्य भीष्मेन द्रोणेन च महात्मना । अर्द्धं निहत्य सैन्यस्य कर्णो वैकर्त्तनो हतः ॥ ६ ॥ विविंशतिर्महाराज राजपुत्रो महाबलः । आनर्त्तयोधान् शतशो निहत्य निहतो युधि ॥ ७ ॥ अथ पुत्रो विकर्णस्ते क्षत्रधर्ममनुस्मरन् । क्षीणवाहायुधः शूरः स्थितो ह्यभिमुखः परान् ॥ ८ ॥ घोररूपान् परिक्लेशान् दुर्य्योधनकृतान् बहून् । प्रतिज्ञां स्मरता चैव भीमसेनेन पातितः ॥ ९ ॥ विन्दानुविन्दावावन्त्यौ राजपुत्रौ महाबलौ । कृत्वा नसुकरं कर्म्म गतौ वैवस्वतक्षयम् ॥ १० ॥ सिन्धुराष्ट्रमुखानीह दशराष्ट्राणि यस्य वै । वशे तिष्ठन्ति वीरस्य

यः स्थितस्तव शासने ॥ ११ ॥ अक्षौहिणीर्दशैकाञ्च निर्जित्य निशितैः शरैः । अर्जुनेन हतो राजन् महावीर्य्यो जयद्रथः ॥१२॥ तथा दुर्य्योधनसुतस्तरस्वी युद्धदुर्मदः । वर्त्तमानः पितुः शास्त्रे सौभद्रेण निपातितः ॥ १३ ॥ तथा दौःशासनि शूरो बाहुशाली रणोत्कटः । द्रौपदेयेन विक्रम्य गमितो यमसादनम् ॥ १४ ॥ किरातानामधिपतिः सागरानूपवासिनाम् । देवराजस्य धर्मात्मा प्रियो बहुमतः सखा ॥ १५ ॥ भगदत्तो महीपालः क्षत्रधर्मरतः सदा । धनञ्जयेन विक्रम्य गमितो यमसादनम् ॥ १६ ॥ तथा कौरवदायादः सौमदत्तिर्महायशाः । हतो भूरिश्रवा राजन् शूरः सात्यकिना युधि ॥ १७ ॥ श्रुतायुरपि चाम्बष्ठः क्षत्रियाणां धुरन्धरः । चरन्नभीतवत् सङ्ख्ये निहतः सव्यसाचिना ॥ १८ ॥ तव पुत्रः सदामर्षी कृतास्त्रो युद्धदुर्मदः । दुःशासनो महाराज भीमसेनेन पातितः ॥ १९ ॥ यस्य राजन् गजानीकं बहुसाहस्रमद्भुतम् । सुदक्षिणः स सङ्ग्रामे निहतः सव्यसाचिना ॥ २० ॥ कोशलानामधिपतिर्हत्वा बहुशतान् परान् । सौभद्रेणेह विक्रम्य गमितो यमसादनम् ॥ २१ ॥ बहुशो योधयित्वा च भीमसेनं महारथम् । चित्रसेनस्तव सुतो भीमसेनेन पातितः २२ ॥ मद्रराजानुजः शूरः परेषां भयवर्द्धनः । असिचर्म॰॰ श्रीमान् सौभद्रेण निपातितः ॥ २३ ॥ समः कर्णस्य समरे यः स कर्णस्य पश्यतः । वृषसेनो महातेजाः शीघ्रास्त्रो दृढविक्रमः ॥ २४ ॥ अभिमन्योर्वधं स्मृत्वा प्रतिज्ञामपि चात्मनः । धनञ्जयेन विक्रम्य गमितो यमसादनम् ॥ २५ ॥ नित्यं प्रसक्तवैरो यः पाण्डवैः पृथिवीपतिः । विश्राव्य वैरं पार्थेन श्रुतायुः स निपातितः ॥२६॥ शल्यपुत्रस्तु विक्रान्तः सहदेवेन मारिष । हतो रुक्मरथो राजन् भ्राता मातुलजो युधि ॥ २७ ॥ राजा भगीरथो वृद्धो बृहत्क्षत्रश्च कैकयः । पराक्रमन्तौ विक्रान्तौ निहतौ वीर्य्यवत्तरौ ॥२८॥

भगदत्तसुतो राजन् कृतप्रज्ञो महाबलः । श्येनवच्चरता सङ्ख्ये नकुलेन निपातितः ॥ २९ ॥ पितामहसमस्तव तथा बाह्लिकः सह बाह्लिकैः । निहतो भीमसेनेन महाबलपराक्रमः ॥ ३० ॥ जयत्सेनस्तथा राजन् जारासन्धिर्महाबलः । मागधो निहतः सङ्ख्ये सौभद्रेण महात्मना ॥ ३१ ॥ पुत्रस्ते दुर्मुखो राजन् दुःसहश्च महारथः । गदया भीमसेनेन निहतौ शूरमानिनौ ॥ ३२ ॥ दुर्मर्षणो दुर्विषहो दुर्ज्जयश्च महारथः । कृत्वा नसुकरं कर्म गता वैवस्वतक्षयम् ॥ ३३ ॥ उभौ कलिङ्गवृषभौ भ्रातरौ युद्धदुर्मदौ । कृत्वा नसुकरं कर्म गतौ वैवस्वतक्षयम् ॥ ३४ ॥ सचिवो वृषवर्मा ते सूतः परमवीर्य्यवान् । भीमसेनेन विक्रम्य गमितो यमसादनम् ॥ ३५ ॥ तथैव पौरवो राजा नागायुतबलो महान् । सगणः पाण्डुपुत्रेण निहतः सव्यसाचिना ॥ ३६ ॥ वसातयो महाराज द्विसाहस्राः प्रहारिणः । शूरसेनाश्च विक्रान्ताः सर्व्वे युधि निपातिताः ॥ ३७ ॥ अभीषाहाः कवचिनः प्रहरन्तो रणोत्कटाः । शिवयश्च रथोदाराः कलिङ्गसहिता हताः ॥ ३८ ॥ गोकुले नित्यसंवृद्धा युद्धे परमकोपनाः । तेऽपावृत्तकवीराश्च निहताः सव्यसाचिना ॥ ३९ ॥ श्रेणयो बहुसाहस्राः संशप्तकगणाश्च ये । ते सर्व्वे पार्थमासाद्य गता वैवस्वतक्षयम् ॥ ४० ॥ स्यालौ तव महाराज राजानौ वृषकाचलौ । त्वदर्थमतिविक्रान्तौ निहतौ सव्यसाचिना ॥ ४१ ॥ उग्रकर्म्मा महेष्वासो नामतः कर्म्मतस्तथा । शाल्वराजो महाबाहुर्भीमसेनेन पातितः ॥ ४२ ॥ ओघवांश्च महाराज बृहन्तः सहितौ रणे । पराक्रमन्तौ मित्रार्थे गतौ वैवस्वतक्षयम् ॥ ४३ ॥ तथैव रथिनां श्रेष्ठः क्षेमधूर्त्तिर्विशाम्पते । निहतो गदया राजन् भीमसेनेन संयुगे ॥ ४४ ॥ तथा राजा महेष्वासो जलसन्धो महाबलः । सुमहत् कदनं कृत्वा हतः सात्यकिना रणे ॥ ४५ ॥ अलायुधो राक्षसेन्द्रः खरबन्धुरयानवान् । घटोत्कचेन

विक्रम्य गमितो यमसादनम् ॥ ४६ ॥ राधेयाः सूतपुत्राश्च भ्रातरश्च महारथाः। कैकेयाः सर्वशश्चापि निहताः सव्यसाचिना ॥ ४७ ॥ मालवा मद्रकाश्चैव द्रविडाश्चोग्रविक्रमाः। यौधेयाश्च ललित्थाश्च क्षुद्रकाश्चाप्युशीनराः ॥ ४८ ॥ मावेल्लकास्तुण्डिकेराः सावित्रीपुत्रकाश्च ये। प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च मारिष ॥ ४९ ॥ पत्तीनां निहताः सङ्घा हयानां प्रयुतानि च। रथव्रजाश्च निहता हताश्च वरवारणाः ॥ ५० ॥ सध्वजाः सायुधाः शूराः सवर्माम्बरभूषणाः। कालेन महता यत्ताः कुलशीलविवर्द्धिताः ॥ ५१ ॥ ते हताः समरे सर्वे पार्थेनाक्लिष्टकर्मणा। अन्ये तथामितबलाः परस्परवधैषिणः ॥ ५२ ॥ एते चान्ये च बहवो राजानः सगणा रणे। हताः सहस्रशो राजन् यन्मां त्वं परिपृच्छसि ॥ ५३ ॥ एवमेष क्षयो वृत्तः कर्णार्ज्जुनसमागमे। महेन्द्रेण यथा वृत्रो यथा रामेण रावणः ॥ ५४ ॥ यथा कृष्णेन नरको मुरश्च निहतो रणे। कार्त्तवीर्य्यश्च रामेण भार्गवेण बलोयसा ॥ ५५ ॥ सज्ञातिबान्धवः शूरः समरे युद्धदुर्मदः। रणे कृत्वा महद्युद्धं घोरं त्रैलोक्यविश्रुतम् ॥ ५६ ॥ यथा स्कन्देन महिषो यथा रुद्रेण चान्धकः। तथार्ज्जुनेन निहतो द्वैरथे युद्धदुर्मदः ॥ ५७ ॥ सामात्यबान्धवो राजन् कर्णः प्रहरतां वरः। जयाशा धार्त्तराष्ट्राणां वैरस्य च मुखं यतः ॥ ५८ ॥ तीर्णं तत् पाण्डवैरद्य यत् पुरा नावबुध्यसे। उच्यमानो महाराज बन्धुभिर्हितवादिभिः। तदिदं समनुप्राप्तं व्यसनं सुमहात्ययम् ॥ ५९ ॥ पुत्राणां राज्यकामानां त्वया राजन् हितैषिणा। अहितान्येव चीर्णानि तेषां तत्फलमागतम् ॥ ६० ॥

इति कर्णपर्वणि सञ्जयवाक्ये पञ्चमोऽध्यायः ॥ ५ ॥

---

धृतराष्ट्र उवाच। आख्याता मामकास्तात निहता युधि पाण्डवैः। निहतान् पाण्डवेयानां मामकैर्ब्रूहि सञ्जय ॥ १ ॥

सञ्जय उवाच। कुन्तयो युधि विक्रान्ता महासत्त्वा महाबलाः। सानुबन्धाः सहामात्या भीष्मेण युधि पातिताः ॥ २ ॥ नारायणा बलवाश्च रामाश्च शतशो रणे। अनुरक्ताश्च विजयि भीष्मेण युधि पातिताः ॥ ३ ॥ समः किरीटिना सङ्ख्ये वीर्य्येण च बलेन च। सत्यजित् सत्यसन्धेन द्रोणेन निहतो युधि ॥ ४ ॥ पाञ्चालानां महेष्वासाः सर्व्वे युद्धविशारदाः। द्रोणेन सह सङ्गम्य गता वैवस्वतक्षयम् ॥ ५ ॥ तथा विराटद्रुपदौ वृद्धौ सहसुतौ नृपौ। पराक्रमन्तौ मित्रार्थे द्रोणेन निहतौ रणे ॥ ६ ॥ यो बाल एव समरे सम्मितः सव्यसाचिना। केशवेन च दुर्द्धर्षो बलदेवेन वा विभो ॥ ७ ॥ परेषां कदनं कृत्वा महद्रणविशारदः। परिवार्य्य महामात्रैः षड्भिः परमकैः रथैः ॥ ८ ॥ अशक्नुवद्भिर्बीभत्सुमभिमन्युर्निपातितः। तं कृतं विरथं वीरं क्षत्रधर्म्मे व्यवस्थितम्। दौःशासनिर्महाराज सौभद्रं हतवान्रणे ॥ ९ ॥ पटच्चरनिहन्ता च महत्या सेनया वृतः। अम्बष्ठस्य सुतः श्रीमान् मित्रहेतोः पराक्रमन् ॥ १० ॥ आसाद्य लक्ष्मणं वीरं दुर्य्योधनसुतं रणे। सुमहत् कदनं कृत्वा गतो वैवस्वतक्षयम् ॥ ११ ॥ बृहन्तस्तु महेष्वासः कृतास्त्रो युद्धदुर्मदः। दुःशासनेन विक्रम्य गमितो यमसादनम् ॥ १२ ॥ मणिमान् दण्डधारश्च राजानौ युद्धदुर्मदौ। पराक्रमन्तौ मित्रार्थे द्रोणेन विनिपातितौ ॥ १३ ॥ अंशुमान् भोजराजश्च सहसैन्यो महारथः। भारद्वाजेन विक्रम्य गमितो यमसादनम् ॥ १४ ॥ सामुद्रश्चित्रसेनश्च सह पुत्रेण भारत। समुद्रसेनेन बलात् गमितो यमसादनम् ॥ १५ ॥ अनूपवासी नीलश्च व्याघ्रदत्तश्च वीर्य्यवान्। अश्वत्थाम्ना महाराज गमितो यमसादनम् ॥ १६ ॥ चित्रायुधश्चित्रयोधी कृत्वा तौ कदनं महत्।

चित्रमार्गेण विक्रम्य विकर्णेन हतो युधि ॥ १७ ॥ वृकोदरसमो युद्धे वृतः कैकेययोधिभिः। कैकेयेन च विक्रम्य भ्राता भ्राता निपातित ॥ १८ ॥ जनमेजयो गदायोधी पार्वतीयः प्रतापवान्। दुर्मुखेन महाराज तव पुत्रेण पातितः ॥ १९ ॥ रोचमानौ नरश्रेष्ठौ रोचमानौ ग्रहाविव। द्रोणेन युगपद्राजन् दिवं संप्रापितौ शरैः ॥ २० ॥ नृपाश्चान्ये प्रयुध्यन्तः पराक्रान्ता विशाम्पते। कृत्वा नसुकरं कर्म गता वैवस्वतक्षयम् ॥ २१ ॥ पुरुजित् कुन्तिभोजश्च मातुलः सव्यसाचिनः। संग्रामे निर्जितांल्लोकान् गमितो द्रोणसायकैः ॥ २२ ॥ अभिभूः काशिराजश्च बहुभिः काशिभिर्वृतः। वसुदानस्य पुत्रेण न्यासितो देहमाहवे ॥ २३ ॥ अमितौजा युधामन्युरुत्तमौजाश्च वीर्यवान्। निहत्य शतशः शूरानस्मदीयैर्निपातिताः ॥ २४ ॥ मित्रवर्मा च पाञ्चालाः चत्रधर्मा च भारत। द्रोणेन परमेष्वासौ गमितौ यमसादनम् ॥ २५ ॥ शिखण्डितनयो वीरः चत्रदेवो युधाम्पतिः। लक्ष्मणेन हतो राजंस्तव पौत्रेण मारिष ॥ २६ ॥ सुचित्रचित्रवर्मा च पितापुत्रौ महाबलौ। प्रचरन्तौ रणे वीरौ द्रोणेन विनिपातितौ ॥ २७ ॥ वार्द्धक्षेमिर्महाराज समुद्र इव पर्वणि। आयुधक्षयमासाद्य प्र न्तिं परमां गतः ॥ २८ ॥ सेनाबिन्दुः कुरुश्रेष्ठः शस्त्रवान् दृहन् युधि। बाह्लिकेन महाराज कौरवेण निपातितः ॥ २९ ॥ धृष्टकेतुर्महाराज चेदीनां प्रवरो रथः। कृत्वा नदुकरं कर्म गतो वैवस्वतक्षयम् ॥ ३० ॥ तथा सत्यधृतिर्वीरः कृत्वा कदनमाहवे। पाण्डवार्थे पराक्रान्तो गमितो यमसादनम् ॥ ३१ ॥ पुत्रस्तु शिशुपालस्य सुकेतुः पृथिवीपतिः। निहत्य शात्रवान् सङ्ख्ये द्रोणेन निहतो युधि ॥ ३२ ॥ विराटपुत्रः शङ्खस्तु उत्तरश्च महाबलः। कुर्वन्तो दुष्करं कर्म गतो वैवस्वतक्षयम् ॥ ३३ ॥ तथा सत्यधृतिर्मातृस्यो मदिराश्वश्च वीर्यवान्। सूर्यदत्तश्च विक्रान्तो निहतो द्रोण-

सायकैः ॥ ३४ ॥ श्रेणिमांस्तु महाराज युध्यमानः पराक्रमी ।
कृत्वा नसुकरं कर्म गतो वैवस्वतक्षयम् ॥ ३५ ॥ तथैव युधि-
विक्रान्तो मागधः परमास्त्रवित् । भीष्मेण निहतो राजन् शेते
ऽद्य परवीरहा ॥ ३६ ॥ वसुदानश्च कदनं कुर्वाणोऽतीव संयुगे ।
भारद्वाजेन विक्रम्य गमितो यमसादनम् ॥ ३७ ॥ एते चान्ये च
बहवः पाण्डवानां महारथाः । हता द्रोणेन विक्रम्य यन्मां त्वं
परिपृच्छसि ॥ ३८ ॥

इति कर्णपर्वणि सञ्जयवाक्ये षष्ठोऽध्यायः ॥ ६ ॥

---

धृतराष्ट्र उवाच । मामकस्यास्य सैन्यस्य हतशेषस्य सञ्जय ।
अवशेषं न पश्यामि ककुदे मृदिते सति ॥ १ ॥ तौ हि वीरौ
महेष्वासौ मदर्थं कुरुसत्तमौ । भीष्मद्रोणौ हतौ श्रुत्वा को न्वर्थो
जीविते मम ॥ २ ॥ न मृष्यामि च राधेयं हतमाहवशोभिनम् ।
यस्य बाह्वोर्बलं तुल्यं कुञ्जराणां शतं शतम् ॥ ३ ॥ हतप्रवीरे
सैन्येऽस्मिन्मामके वदतां वर । अहतान् शंस मे सूत येऽत्र
जीवन्ति केचन ॥ ४ ॥ एतेषु निहतेष्वद्य ये त्वया परिकीर्त्तिताः ।
येऽपि जीवन्ति ते सर्वे मृता एवेति मे मतिः ॥ ५ ॥

सञ्जय उवाच । यस्मिन्महास्त्राणि समर्पितानि चित्राणि
शुभ्राणि चतुर्विधानि । दिव्यानि राजन्निहितानि चैव द्रोणेन
वीरे द्विजसत्तमेन ॥ ६ ॥ महारथः कृतिमान् क्षिप्रहस्तो दृढा-
युधो दृढमुष्टिर्दृढेषुः । स दूरपाती द्रोणपुत्रो महात्मा व्यवस्थितो
योद्धुकामस्त्वदर्थे ॥ ७ ॥ आनर्त्तवासी हृदिकात्मजोऽसौ महा-
रथः सात्वतानां वरिष्ठः । स्वयं भोजः कृतवर्मा त्वदर्थे व्यवस्थितो
योद्धुकामः कृतास्त्रः ॥ ८ ॥ आर्त्तायनिः समरे दुष्प्रकम्प्यः सेना-
ग्रणीः प्रथमस्तावकानाम् । यः स्वस्रीयान् पाण्डवेयान् विसृज्य

सत्यां वाचं तां चिकीर्षुस्तरस्वी॥ ९॥ तेजोवधं सूतपुत्त्रस्य सङ्ख्ये प्रतिश्रुत्याजातशत्रोः पुरस्तात्। दुराधर्षः शक्रसमानवीर्य्यः शल्यः स्थितो योद्धकामस्त्वदर्थे॥ १०॥ आजानेयैः सैन्धवैः पार्वतीयैर्नदीजकाम्बोजवनायुवाह्लिकैः। गान्धारराजः सुबलेन युक्तो व्यवस्थितो योद्धुकामस्त्वदर्थे॥ ११॥ शारद्वतो गौतमश्चापि राजन्महाबलो बहुचित्रास्त्रयोधी। धनुश्चित्रं सुमहद्भारसाहं व्यवस्थितो योद्धुकामः प्रगृह्य॥ १२॥ महार[illegible] केकयराजपुत्त्रः समश्वयुक्तञ्च पताकिनञ्च। रथाग्रमारु[illegible] प्रवीरो व्यवस्थितो योद्धुकामस्त्वदर्थे॥ १३॥ तथा सुतस्ते ज्व[illegible]ार्कतुल्यं रथं समास्थाय कुरुप्रवीरः। व्यवस्थितः पुरुमित्र [illegible]रेन्द्र व्यभ्रे सूर्य्यो भ्राजमानो यथा खे॥ १४॥ दुर्य्योधनो न[illegible]लस्य मध्ये महावीर्य्यः सह सैन्यप्रवीरैः। रथेन जाम्बूनद[illegible]येन व्यवस्थितः समरे योत्स्यमानः॥ १५॥ स राजमध्ये पु[illegible]प्रवीरो रराज जाम्बूनदचित्रवर्मा। पद्मप्रभो वह्निरिवाल्पधू[illegible] मेघान्तरे सूर्य्य इव प्रकाशः॥ १६॥ तथा सुषेणोऽप्यसि[illegible]ाणिस्तवात्मजः सत्यसेनश्च वीरः। व्यवस्थितौ चित्रसेनेन सार्द्धं हृष्टात्मानौ समरे योद्धुकामौ॥ १७॥ ह्रीनिषेवा भारतराज[illegible]ुआश्चित्रायुधः श्रुतवर्म्मा जयश्च। शलश्च सत्यव्रतदुःशलौ च व्यवस्थिता बलिनो योद्धुकामाः॥ १८॥ कैतव्यानामधिपः शूरमानी रणे चरन् शकुनी राजपुत्त्रः। पत्ती हयी नागरथप्रयायी व्यवस्थितो योद्धुकामस्त्वदर्थे॥ १९॥ वीरः श्रुतायुश्च श्रुतायुधश्च चित्राङ्गदश्चित्रवर्म्मा तथैव। व्यवस्थिता योद्धुकामा नराग्र्याः प्रहारिणो मानिनः सत्यसन्धाः॥ २०॥ कर्णात्मजः सत्यसन्धो महात्मा व्यवस्थितः समरे योद्धुकामः। अथापरौ कर्णसुतौ वरास्त्रौ व्यवस्थितौ लघुहस्तौ नरेन्द्र। बलं महद्दुर्भिदमल्पवीर्य्यैः समाश्रितौ यात्स्यमानौ त्वदर्थे॥ २१॥ एतैश्च मुख्यैरपरैश्च राजन् योधप्रवीरै-

रमितप्रभावैः । व्यवस्थितो नागकुलस्य मध्ये यथा महेन्द्रः कुरु-
राजो जयाय ॥ २२ ॥

धृतराष्ट्र उवाच । आख्याता जीवमाना ये परेभ्योऽपि यथा-
तथम् । इतीदमवगच्छामि व्यक्तमर्थाभिपत्तितः ॥ २३ ॥

वैशम्पायन उवाच । एवं ब्रुवन्नेव तदा धृतराष्ट्रोऽम्बिकासुतः ।
हतप्रवीरभूयिष्ठं किञ्चिच्छेषं बलं स्वकम् ॥ २४ ॥ श्रुत्वा तु मोह-
मगमच्छोकव्याकुलचेतनः । मुह्यमानोऽब्रवीच्चापि मुहूर्त्तं तिष्ठ
सञ्जय ॥ २५ ॥

धृतराष्ट्र उवाच । व्याकुलं मे मनस्तात श्रुत्वा सुमहदप्रियम् ।
मनो मुह्यति चाङ्गानि न च शक्नोमि धारितुम् ॥ २६ ॥ इत्येव-
मुक्त्वा वचनं धृतराष्ट्रोऽम्बिकासुतः । नष्टचित्तस्तथा सोऽथ पपात
जगतीपतिः ॥ २७ ॥

इति कर्णपर्वणि सञ्जयवाक्ये सप्तमोऽध्यायः ॥ ७ ॥

---

जनमेजय उवाच । श्रुत्वा कर्णं हतं युद्धे पुत्रांश्चैव निपा-
तितम् । नरेन्द्रः किञ्चिदाश्वस्तो द्विजश्रेष्ठ किमब्रवीत् ॥ १ ॥
प्राप्तवान् परमं दुःखं पुत्रव्यसनजं महत् । तस्मिन् यदुक्तवान्
काले तन्ममाचक्ष्व पृच्छतः ॥ २ ॥

वैशम्पायन उवाच । श्रुत्वा कर्णस्य निधनमश्रद्धेयमिवा-
द्भुतम् । भूतसम्मोहनं भीमं मेरोः प्रपतनं यथा ॥ ३ ॥ चित्त-
मोहमिवायुक्तं भार्गवस्य महामतेः । पराजयमिवेन्द्रस्य द्विषद्भ्यो
भीमकर्मणः ॥ ४ ॥ दिवः प्रपतनं भानोरुर्व्यामिव महाद्युतेः ।
संशोषणमिवाचिन्त्यं समुद्रस्याक्षयाम्भसः ॥ ५ ॥ महीवियद्दिग-
म्बूनां सर्वनाशमिवाद्भुतम् । कर्मणोरिव वैफल्यमुभयोः पुण्य-
पापयोः ॥ ६ ॥ सञ्चिन्त्य निपुणं बुद्ध्या धृतराष्ट्रो जनेश्वरः ।

नेदमस्तीति सञ्चिन्त्य कर्णस्य समरे वधम्॥ ७॥ प्राणिनामेव मन्येषां स्यादपीति विचार्य्य सः। शोकाग्निना दह्यमानो दह्य-मान इवोरगः॥ ८॥ विस्रस्ताङ्गः श्वसन् दीनो हाहेत्युक्त्वा सुदुः-खितः। विललाप महाराज धृतराष्ट्रोऽम्बिकासुतः॥ ९॥

धृतराष्ट्र उवाच। सञ्जयाधिरथिर्वीरः सिंहद्विरदविक्रमः। ऋषभप्रतिमस्कन्धो वृषभाक्षगतिस्वनः॥ १०॥ ऋषभो वृषभस्येव यो युद्धे न निवर्त्तते। शत्रोरपि महेन्द्रस्य वज्रसंहननो युवा ॥ ११॥ यस्य ज्यातलशब्देन शरवृष्टिरवेण च। नराश्वरथ-मातङ्गा नाधितिष्ठन्ति संयुगे॥ १२॥ यमाश्रित्य महाबाहुं द्विषत्-सङ्घघ्नमच्युतम्। दुर्य्योधनोऽकरोद्वैरं पाण्डुपुत्रैर्महारथैः॥ १३॥ स कथं रथिनां श्रेष्ठः कर्णः पार्थेन संयुगे। निहतः पुरुषव्याघ्रः प्रसह्यासह्यविक्रमः॥ १४॥ यो नामन्यत वै नित्यमच्युतञ्च धन-ञ्जयम्। न वृष्णीन्नाहितानन्यान् स्वबाहुबलमाश्रितः॥ १५॥ शार्ङ्गगाण्डीवधन्वानौ सहितावपराजितौ। अहं दिव्याद्रथादेकः पातयिष्यामि संयुगे॥ १६॥ इति यः सततं मन्दमवोचल्लोभ-मोहितम्। दुर्य्योधनमवाचीनं राज्यकामुकमातुरम्॥ १७॥ यश्चाजैषीदतिबलानमित्रानतिदुर्ज्जयान्। गान्धारान्मद्रकान् मत्-स्यांस्त्रिगर्त्तांस्तङ्गणान् खशान्॥ १८॥ पाञ्चालांश्च विदेहांश्च कुलिन्दान् काशिकोशलान्। सुह्मानङ्गांश्च वङ्गांश्च निषधान् पुण्ड्रकीचकान्॥ १९॥ वत्सान् कलिङ्गांस्तरलानश्मकानृषिका-नपि। यो जित्वा समरे वीरांश्चक्रे बलिभृतः पुरा॥ २०॥ शर-व्रातैः सुनिशितैः सुतीक्ष्णैः कङ्कपत्रिभिः। दुर्य्योधनस्य वृद्ध्यर्थं वर्त्तते यो जयाय च॥ २१॥ सेनागोपश्च स कथं शत्रुभिः पर-मास्त्रवित्। घातितः पाण्डवैः शूरैः समरे बलशालिभिः॥ २२॥ वृषो महेन्द्रो देवेषु वृषः कर्णो नरेष्वपि। तृतीयमन्यं लोके-ऽस्मिन् वृषं नैवानुशुश्रुम॥ २३॥ उच्चैःश्रवा वरोऽश्वानां राज्ञां

वरुणो वरः । वरो महेन्द्रो देवानां कर्णः प्रहरतां वरः ॥२४॥ योऽजितः पार्थिवैः शूरैः समग्रैर्जयकाङ्क्षिभिः । दुर्य्योधनस्य वृद्ध्यर्थं कृत्स्नामुर्वीमथाजयत् ॥ २५ ॥ यं लब्ध्वा मागधो राजा सान्त्वमानार्थगौरवैः । अरौत्सीत् पार्थिवं क्षत्रमृते कौरवयादवान् ॥ २६ ॥ तं श्रुत्वा निहतं कर्णं द्वैरथे सव्यसाचिना । शोकार्णवे निमग्नोऽस्मि समुद्रे भिन्ननौरिव ॥ २७ ॥ ईदृशं निहतं श्रुत्वा द्वैरथे रथिनां वरम् । शोकार्णवे निमग्नोऽहमप्लवः सागरे यथा ॥ २८ ॥ ईदृशैर्यद्यहं दुःखैर्न विनश्यामि सञ्जय । वज्रादृढ़तरं मन्ये हृदयं मम दुर्भिदम् ॥ २९ ॥ ज्ञातिसम्बन्धिमित्राणामिमं श्रुत्वा पराभवम् । को मदन्यः पुमान् लोके न जह्यात् सूत जीवितम् ॥ ३० ॥ विषमग्निं प्रपातं वा पर्वताग्रादहं वृणे । न हि शक्यामि दुःखानि सोढुं कष्टानि सञ्जय ॥ ३१ ॥

इति कर्णपर्वणि धृतराष्ट्रवाक्ये अष्टमोऽध्यायः ॥ ८ ॥

---

सञ्जय उवाच । श्रिया कुलेन यशसा तपसा च श्रुतेन च । त्वामद्य सन्तो मन्यन्ते ययातिमिव नाहुषम् ॥ १ ॥ श्रुते महर्षिप्रतिमः कृतकृत्योऽसि पार्थिव । पर्य्यवस्थापयात्मानं मा विषादे मनः कृथाः ॥ २ ॥

धृतराष्ट्र उवाच । दैवमेव परं मन्ये पौरुषन्तु निरर्थकम् । यत्र शालप्रतीकाशः कर्णोऽवध्यत संयुगे ॥ ३ ॥ हत्वा युधिष्ठिरानीकं पाञ्चालानां रथव्रजान् । प्रताप्य शरवर्षेण दिशः सर्वा महारथः ॥ ४ ॥ मोहयित्वा रणे पार्थान् वज्रहस्त इवासुरान् । कथं स निहतः शेते वातरुग्ण इव द्रुमः ॥ ५ ॥ शोकस्यान्तं न पश्यामि समुद्रस्येव विप्लुतः । चिन्ता मे वर्द्धते तीव्रा मुमूर्षा चापि जायते ॥ ६ ॥ कर्णस्य निधनं श्रुत्वा विजयं फाल्गुनस्य च ।

अश्वद्धेयमहं मन्ये वधं कर्णस्य सञ्जय ॥ ७ ॥ वज्रसारमयं नूनं हृदयं सुदृढ़ं मम। यत् श्रुत्वा निहतं कर्णं न दीर्य्यति सहस्रधा ॥ ८ ॥ आयुर्नूनं सुदीर्घं मे विहितं दैवतैः पुरा। यत्र कर्णं हतं श्रुत्वा जीवाम्यद्य सुदुःखितः। धिग्जीवितमिदञ्चैव सुहृद्धीनस्य सञ्जय ॥ ९ ॥ अद्य चाहं दशामेतां गतः सञ्जय गर्हिताम्। कृपणं वर्त्तयिष्यामि शोच्यः सर्वस्य मन्दधीः ॥ १० ॥ अहमेव पुरा भूत्वा सर्वलोकस्य सत्कृतः। परिभूतः कथं सूत परैः शक्ष्यामि जीवितुम् ॥ ११ ॥ दुःखात् सुदुःखं व्यसनं प्राप्तवानस्मि सञ्जय। भीष्मद्रोणवधेनैव कर्णस्य च महात्मनः ॥ १२ ॥ नात्र शेषं प्रपश्यामि सूतपुत्रे हते युधि। स हि पारं महानासीत् पुत्राणां मम सञ्जय ॥ १३ ॥ युद्धे विनिहतः शूरो विसृजन् सायकान् बहून्। को हि मे जीवितेनार्थस्तमृते पुरुषर्षभम् ॥१४॥ रथादाधिरथिर्नूनं न्यपतत् सायकार्द्दितः। पर्वतस्येव शिखरं वज्रपाताद्विदारितम् ॥ १५ ॥ स शेते पृथिवीं नूनं शोभयन् रुधिरोक्षितः। मातङ्ग इव मत्तेन हिपेन्द्रेण निपातितः ॥ १६ ॥ यद्बलं धार्त्तराष्ट्राणां पाण्डवानां यतो भयम्। सोऽर्ज्जुनेन हतः कर्णः प्रतिमानं धनुष्मताम् ॥ १७ ॥ स हि वीरो म[illegible]वासः पुत्राणां मेऽभयङ्करः। शेते विनिहतो वीरो देवेन्द्रेण इवाचलः ॥ १८ ॥ पङ्गोरिवाध्वगमनं दरिद्रस्येव कामितम्। दुर्य्योधनस्य चाकूतं तृषितस्येव विप्रुषः ॥ १९ ॥ अन्यथा चिन्तितं कार्य्यमन्यथा तत्तु जायते। अहो नु बलवद्दैवं कालश्च दुरतिक्रमः ॥ २० ॥ पलायमानः कृपणो दीनात्मा दीनपौरुषः। कच्चिद्विनिहतः सूत पुत्रो दुःशासनो मम ॥ २१ ॥ कच्चिन्न दीनाचरितं कृतवांस्तात सञ्जय। कच्चिन्न निहतः शूरो यथान्ये क्षत्रिया हताः ॥ २२ ॥ युधिष्ठिरस्य वचनं मा युध्यस्वेति सर्वदा। दुर्य्योधनो नाभ्यगृह्णान्मूढ़ः पथ्यमिवौषधम् ॥ २३ ॥ शरतल्पे शयानेन भीष्मेण सुमहायशाः।

पानीयं याचितः पार्थः सोऽविध्यन्मेदिनीतलम् ॥ २४ ॥ जलस्य धारां जनितां दृष्ट्वा पाण्डुसुतेन च । अब्रवीत् स महाबाहुस्तात संशाम्य पाण्डवैः ॥ २५ ॥ प्रशमाद्धि भवेच्छान्तिर्मदन्तं युद्धमस्तु वः । भ्रातृभावेन पृथिवीं भुङ्क्ष्व पाण्डुसुतैः सह ॥ २६ ॥ अकुर्वन् वचनं तस्य नूनं शोचति पुत्रकः । तदिदं समनुप्राप्तं वचनं दीर्घदर्शिनः ॥ २७ ॥ अहन्तु निहतामात्यो हतपुत्रस्तु सञ्जय । द्यूततः कृच्छ्रमापन्नो लूनपक्ष इव द्विजः ॥ २८ ॥ यथाहि शकुनिं गृह्य छित्त्वा पक्षौ च सञ्जय । विसर्जयन्ति संहृष्टाः क्रीडमानाः कुमारकाः ॥ २९ ॥ लूनपक्षतया तस्य गमनं नोपपद्यते । तथाहमपि संप्राप्तो लूनपक्ष इव द्विजः ॥ ३० ॥ क्षीणः सर्वार्थहीनश्च निर्ज्ञातिर्बन्धुवर्जितः । कां दिशं प्रतिपत्स्यामि दीनः शत्रुवशं गतः ॥ ३१ ॥ योऽजयत् सर्वकाम्बोजानम्बष्ठान् केकयैः सह । गान्धारांश्च विदेहांश्च जित्वा कार्य्यार्थमाहवे ॥ ३२ ॥ दुर्य्योधनस्य वृद्ध्यर्थं पृथिवीं योऽजयत् प्रभुः । स जितः पाण्डवैः शूरैः समर्थैर्बाहुशालिभिः ॥ ३३ ॥ तस्मिन् हते महेष्वासे कर्णे युधि किरीटिना । के वीराः पर्य्यतिष्ठन्त तन्ममाचक्ष्व सञ्जय ॥ ३४ ॥ कच्चिन्नैकः परित्यक्तः पाण्डवैर्निहतो रणे । उक्तं त्वया पुरा तात यथा वीरा निपातिताः ॥ ३५ ॥ भीष्ममप्रतियुध्यन्तं शिखण्डी सायकोत्तमैः । पातयामास समरे सर्वशस्त्रभृतां वरम् ॥ ३६ ॥ तथा द्रौपदिना द्रोणो न्यस्तसर्वायुधो युधि । युक्तयोगो महेष्वासः शरैर्बहुभिराचितः । निहतः खड्गमुद्यम्य धृष्टद्युम्नेन सञ्जय ॥ ३७ ॥ अन्तरेण हतावेतौ छलेन च विशेषतः । अश्रौषमहमेतद्वै भीष्मद्रोणौ निपातितौ ॥ ३८ ॥ भीष्मद्रोणौ हि समरे न हन्यादब्रवीत् स्वयम् । न्यायेन युध्यमानौ हि तद्वै सत्यं ब्रवीमि ते ॥ ३९ ॥ कर्णस्त्वस्यन्नस्त्राणि दिव्यानि च बहूनि च । कथमिन्द्रोपमं वीरं मृत्युर्युद्धे समस्पृशत् ॥ ४० ॥ यस्य विद्युत्प्रभां

शक्तिं दिव्यां कनकभूषणाम्। प्रायच्छत् द्विपतां हन्त्रीं कुण्डलाभ्यां पुरन्दरः॥ ४१॥ यस्य सर्पमुखो दिव्यः शरः काञ्चनभूषणः। शेते निहितः पत्री चन्दनेष्वरिसूदनः॥ ४२॥ भीष्मद्रोणमुखान् वीरान् योऽवमन्य महारथान्। जामदग्न्यान्महाराज ब्राह्ममस्त्रमशिक्षत॥ ४३॥ यश्च द्रोणमुखान् दृष्ट्वा विमुखानर्दितान् शरैः। सौभद्रस्य महाबाहुर्व्यधमत् कार्मुकं शितैः॥४४॥ यश्च नागायुतप्राणं वातरंहसमच्युतम्। विरथं सहसा कृत्वा भीमसेनमथाहसत्॥ ४५॥ सहदेवञ्च निर्जित्य शरैः सन्नतपर्वभिः। कृपया विरथं कृत्वा नाहनद्धर्मचिन्तया॥ ४६॥ यश्च मायासहस्राणि विकुर्वाणं जयैषिणम्। घटोत्कचं राक्षसेन्द्रं शक्रशक्त्या निजघ्निवान्॥ ४७॥ एतांश्च दिवसान् यस्य युद्धे भीतो धनञ्जयः। नागमद्द्वैरथं वीरः स कथं निहतो रणे॥४८॥ रथभङ्गो न चेत्तस्य धनुर्वा न व्यशीर्य्यत। न चेदस्त्राणि निर्णेशुः स कथं निहतः परैः॥ ४९॥ को हि शक्तो रणे कर्णं विधून्वानं महद्धनुः। विसृजन्तं शरान् घोरान् दिव्यान्यस्त्राणि चाहवे। जेतुं पुरुषशार्दूलं शार्दूलमिव वेगितम्॥ ५०॥ ध्रुवं तस्य धनुश्छिन्नं रथो वापि महीं गतः। अस्त्राणि वा नष्टानि यथा शंससि मे हतम्। न ह्यन्यदपि पश्यामि कारणं तस्य नाशने॥ ५१॥ न हन्मि फाल्गुनं यावत् तावत् पादौ न धावये। इति यस्य महाघोरं व्रतमासीन्महात्मनः॥ ५२॥ यस्य भीतो वने निद्रां धर्मराजो युधिष्ठिरः। त्रयोदशसमा नित्यं नालभत् पुरुषर्षभः॥ ५३॥ यस्य वीर्य्यवतो वीर्य्यं समाश्रित्य महात्मनः। मम पुत्त्रः सभां भार्य्यां पाण्डूनां नीतवान् बलात्॥ ५४॥ तत्रापि च सभामध्ये पाण्डवानाञ्च पश्यताम्। दासभार्य्येति पाञ्चालीमब्रवीत् कुरुसन्निधौ॥ ५५॥ न सन्ति पतयः कृष्णे सर्वे षण्ढतिलैः समाः। उपतिष्ठस्व भर्त्तारमन्यं वा वरवर्णिनी॥ ५६॥ इत्येवं

यः पुमान् वाचो दुःशासनः संश्रावयन् पृषा । सभायां सूतजः कृष्णां स कथं निहतः परैः ॥ ५७ ॥ यस्य गाण्डीवमुक्तानां शराणामुग्रमचिन्तयन् । अपतिस्त्वमसि कृष्णेति ब्रुवन् पार्थानवैक्षत ॥ ५८ ॥ यस्य नासीद्भयं पार्थैः सपुत्रैः सजनार्द्दनैः । स्ववाहुबलमाश्रित्य मुहूर्त्तमपि सञ्जय ॥ ५९ ॥ तस्य नाहं वधं मन्ये देवैरपि सवासवैः । प्रतीपमभिधावद्भिः किं पुनस्तात पाण्डवैः ॥ ६० ॥ न हि ज्यां संस्पृशानस्य तलत्रे चापि गृह्णतः । पुमानाधिरथेः स्थातुं कश्चित् प्रमुखतोऽर्हति ॥ ६१ ॥ अपि स्यान्मेदिनी हीना सोमसूर्य्यप्रभांशुभिः । न वधः पुरुषेन्द्रस्य संयुगेष्वपलायिनः ॥ ६२ ॥ येन मन्दः सहायेन भ्रात्रा दुःशासनेन च । वासुदेवस्य दुर्बुद्धिः प्रत्याख्यानमरोचत ॥ ६३ ॥ स ननं वृषभस्कन्धं कर्णं दृष्ट्वा निपातितम् । दुःशासनञ्च निहतं मन्ये शोचति पुत्रकः ॥ ६४ ॥ हतं वैकर्त्तनं दृष्ट्वा द्वैरथे सव्यसाचिना । जयतः पाण्डवांश्चापि किंस्वित् दुर्य्योधनोऽब्रवीत् ॥ ६५ ॥ दुर्मर्षणं हतं दृष्ट्वा वृषसेनञ्च संयुगे । प्रभग्नञ्च बलं दृष्ट्वा वध्यमानं महारथैः ॥ ६६ ॥ पराङ्मुखांश्च राज्ञस्तु पलायनपरायणान् । विद्रुतान् रथिनो दृष्ट्वा मन्ये शोचति पुत्रकः ॥ ६७ ॥ अनेयश्चाभिमानी च दुर्बुद्धिरजितेन्द्रियः । हतोत्साहं बलं दृष्ट्वा किंस्विद्दुर्य्योधनोऽब्रवीत् ॥ ६८ ॥ स्वयं वैरं महत् कृत्वा वार्य्यमाणः सुहृद्गणैः । प्रधने हतभूयिष्ठः किंस्विद्दुर्य्योधनोऽब्रवीत् ॥ ६९ ॥ भ्रातरं निहतं दृष्ट्वा भीमसेनेन संयुगे । रुधिरे पीयमाने च किंस्विद्दुर्य्योधनोऽब्रवीत् ॥ ७० ॥ सह गान्धारराजेन सभायां यदभाषत । कर्णोऽर्जुनं रणे हन्ता हते तस्मिन् किमब्रवीत् ॥ ७१ ॥ द्यूतं कृत्वा पुरा हृष्टो वञ्चयित्वा च पाण्डवम् । शकुनिः सौबलस्तात हते कर्णे किमब्रवीत् ॥ ७२ ॥ कृतवर्म्मा महेष्वासः सात्वतानां महारथः । हतं वैकर्त्तनं दृष्ट्वा हार्द्दिक्यः किमभाषत ॥ ७३ ॥ ब्राह्मणाः क्षत्रिया वैश्या यस्य

श्विद्यामुपासते। धनुर्वेदं चिकीर्षन्तो द्रोणपुत्रस्य धीमतः ॥७४॥
युवा रूपेण सम्पन्नो दर्शनीयो महायशाः। अश्वत्थामा हते
कर्णे किमभाषत सञ्जय ॥ ७५ ॥ आचार्यो यो धनुर्वेदे गौतमो
रथसत्तमः। कृपः शारद्वतस्तात हते कर्णे किमब्रवीत् ॥ ७६ ॥
मद्रराजो महेष्वासः शल्यः समितिशोभनः। दृष्ट्वा विनिहतं कर्णं
सारथ्ये रथिनां वरः ॥ ७७ ॥ किमभाषत सौवीरो मद्राणा-
मधिपो बली। दृष्ट्वा विनिहतं सर्वे योधा वा रणदुर्जयाः ॥७८॥
ये च केचन राजानः पृथिव्यां योद्धुमागताः। वैकर्त्तनं हतं दृष्ट्वा
कान्यभाषन्त सञ्जय ॥ ७९ ॥ द्रोणे तु निहते वीरे रथव्याघ्रे
नरर्षभे। के वा मुखमनीकानामासन् सञ्जय भागशः ॥ ८० ॥
मद्रराजः कथं शल्यो नियुक्तो रथिनां वरः। वैकर्त्तनस्य सारथ्ये
तन्ममाचक्ष्व सञ्जय ॥ ८१ ॥ केऽरक्षन् दक्षिणं चक्रं सूतपुत्रस्य
युध्यतः। वामं चक्रं ररक्षुर्वा के वा वीरस्य पृष्ठतः ॥ ८२ ॥ के
कर्णं न जहुः शूराः के क्षुद्राः प्राद्रवंस्ततः। कथञ्च वः समेतानां
हतः कर्णो महारथः ॥ ८३ ॥ पाण्डवांश्च कथं शूराः प्रत्युद्ययु-
र्महारथाः। सृजन्तः शरवर्षाणि वारिधारा इवाम्बुदाः ॥ ८४ ॥
स च सर्पमुखो दिव्यो महेषुप्रवरस्तदा। व्यर्थः कथं समभवत्त-
न्ममाचक्ष्व सञ्जय ॥ ८५ ॥ मामकस्यास्य सैन्यस्य हतोत्साहस्य
सञ्जय। अवशेषं न पश्यामि ककुदे मृदिते सति ॥ ८६ ॥ तौ हि
वीरौ महेष्वासौ मदर्थे त्यक्तजीवितौ। भीष्मद्रोणौ हतौ श्रुत्वा
को न्वर्थो जीवितेन मे ॥ ८७ ॥ पुनः पुनर्न मृष्यामि हतं कर्णञ्च
पाण्डवैः। यस्य बाह्वोर्बलं तुल्यं कुञ्जराणां शतं शतम् ॥ ८८ ॥
द्रोणे हते च यद्वृत्तं कौरवाणां परैः सह। संग्रामे नरवीराणां
तन्ममाचक्ष्व सञ्जय ॥ ८९ ॥ यथा कर्णेन कौन्तेयाः सह युद्धमयो-
जयन्। यथा च द्विषतां हन्ता रणे शान्तस्तदुच्यताम् ॥ ९० ॥

इति कर्णपर्वणि धृतराष्ट्रानुतापे नवमोऽध्यायः ॥ ९ ॥

सञ्जय उवाच । हते द्रोणे महेष्वासे तस्मिन्नहनि भारत । कृते च मोघसङ्कल्पे द्रोणपुत्रे महारथे ॥ १ ॥ द्रवमाणे महाराज कौरवाणां बलार्णवे । व्यूह्य पार्थः स्वकं सैन्यमतिष्ठद्भ्रातृभिः सह ॥ २ ॥ तमवस्थितमाज्ञाय पुत्रस्ते भरतर्षभ । विद्रुतं स्वबलं दृष्ट्वा पौरुषेण न्यवारयत् ॥ ३ ॥ स्वमनीकमवस्थाप्य बाहुवीर्य्यमुपाश्रितः । युद्धा च सुचिरं कालं पाण्डवैः सह भारत ॥ ४ ॥ लब्धलक्ष्यैः परैर्हृष्टैर्व्यायच्छद्भिश्चिरं तदा । सन्ध्याकालं समासाद्य प्रत्याहारमकारयत् ॥ ५ ॥ कृत्वावहारं सैन्यानां प्रविश्य शिविरं स्वकम् । कुरवः स्वहितं मन्त्रं मन्त्रयाञ्चक्रिरे मिथः ॥ ६ ॥ पर्य्यङ्केषु परार्द्ध्येषु स्पर्द्ध्यास्तरणवत्सु च । वरासनेषूपविष्टाः सुखशय्यास्विवामराः ॥ ७ ॥ ततो दुर्य्योधनो राजा साम्ना परमवल्गुना । तानाभाष्य महेष्वासान् प्राप्तकालमभाषत ॥ ८ ॥

दुर्य्योधन उवाच । मतं मतिमतां श्रेष्ठाः सर्व्वे प्रब्रूत मा चिरम् । एवं गते तु किं कार्य्यं किञ्चकार्य्यतरं नृपाः ॥ ९ ॥

सञ्जय उवाच । एवमुक्ते नरेन्द्रेण नरसिंहा युयुत्सवः । चक्रुर्नानाविधाश्चेष्टाः सिंहासनगतास्तदा ॥ १० ॥ तेषां निशम्येङ्गितानि युद्धे प्राणान् जुहूषताम् । समुद्वीक्ष्य मुखं राज्ञो बालार्कसमवर्च्चसम ॥ ११ ॥ आचार्य्यपुत्रो मेधावी वाक्यज्ञो वाक्यमाददे । रागो योगस्तथा दाक्ष्यं नयश्चेत्यर्थसाधकाः । उपायाः पण्डितैः प्रोक्तास्ते तु दैवमुपाश्रिताः ॥ १२ ॥ लोकप्रवीरा येऽस्माकं देवकल्पा महारथाः । नीतिमन्तस्तथा युक्ता दक्षा रक्ताश्च ते हताः ॥ १३ ॥ न त्वेव कार्य्यं नैराश्यमस्माभिर्विजयं प्रति । सुनीतैरिह सर्व्वार्थैर्दैवमप्यनुलोम्यते ॥ १४ ॥ ते वयं प्रवरं नृणां सर्व्वगुणगणैर्युतम् । कर्णमेवाभिषेक्ष्यामः सैन्यापत्येन भारत ॥ १५ ॥ कर्णं सेनापतिं कृत्वा प्रमथिष्यामहे रिपून् । एषो ह्यतिबलः शूरः कृतास्त्रो युद्धदुर्म्मदः । वैवस्वत इवासह्यः शक्तो जेतुं रणे रिपून्

॥ १६ ॥ एतदाचार्य्यतनयात् श्रुत्वा राजंस्तवात्मजः। आशाञ्च
महतीञ्चक्रे कर्णं प्रति स वै तदा ॥ १७ ॥ हते भीष्मे च द्रोणे च
कर्णो जेष्यति पाण्डवान्। तामाशां हृदये कृत्वा समाश्वास्य च
भारत ॥ १८ ॥ ततो दुर्य्योधनः प्रीतः प्रियं श्रुत्वास्य तद्वचः।
प्रीतिसत्कारसंयुक्तं तथ्यमात्महितं शुभम् ॥ १९ ॥ स्वं मनः समव-
स्थाप्य बाहुवीर्य्यमुपाश्रितः। दुर्य्योधनो महाराज राधेयमिद-
मब्रवीत् ॥ २० ॥ कर्ण जानामि ते वीर्य्यं सौहृदञ्च परं मयि।
तथापि त्वां महाबाहो प्रवक्ष्यामि हितं वचः ॥ २१ ॥ श्रुत्वा
यथेष्टञ्च कुरु वीर यत्तव रोचते। भवान् प्राज्ञतमो नित्यं मम
चैव परा गतिः ॥ २२ ॥ भीष्म द्रोणावतिरथौ हतौ सेनापती
मम। सेनापतिर्भवानस्तु ताभ्यां द्रविणवत्तरः ॥ २३ ॥ वृद्धौ
हि तौ महेष्वासौ सापेक्षौ च धनञ्जये। मानितौ च मया वीरौ
राधेय वचनात्तव ॥ २४ ॥ पितामहत्वं संप्रेक्ष्य पाण्डुपुत्रा महा-
रणे। रक्षितास्तात भीष्मेण दिवसानि दशैव च ॥ २५ ॥
न्यस्तशस्त्रे च भवति हतो भीष्मः प्रतापवान्। शिखण्डिनं पुर-
स्कृत्य फाल्गुनेन महाहवे ॥ २६ ॥ हते तस्मिन् महेष्वासे शर-
तल्पगते तदा। त्वयोक्ते पुरुषव्याघ्र द्रोणो ह्यासीत् पुरःसरः
॥ २७ ॥ तेनापि रक्षिताः पार्थाः शिष्यत्वादिति मे मतिः।
स चापि निहतो वृद्धो धृष्टद्युम्नेन सत्वरम् ॥ २८ ॥ निहताभ्यां
प्रधानाभ्यां ताभ्याममितविक्रमम्। त्वत्समं समरे योधं नान्यं
पश्यामि चिन्तयन् ॥ २९ ॥ भवानेवाद्य नः शक्तो विजयाय न
संशयः। पूर्वं मध्ये च पश्चाच्च तथैव विहितं हितम् ॥ ३० ॥ स
भवान् धुर्य्यवत् सङ्ख्ये धुरमुद्वोढुमर्हति। अभिषेचय सेनान्ये
स्वयमात्मानमात्मना ॥ ३१ ॥ देवतानां यथा स्कन्दः सेनानीः
प्रभुरव्ययः। तथा भवानिमां सेनां धार्त्तराष्ट्रीं बिभर्त्तु वै। जहि
शत्रुगणान् सर्वान् महेन्द्रो दानवानिव ॥ ३२ ॥ अवस्थितं रणे

# MAHABHARATAM

## KARNA PARVA

TEXT

PUBLISHED AND DISTRIBUTED GRATIS

BY

PRATAP CHANDRA ROY, C. I. E.

# श्रीमहाभारतम्।

श्रीमन्महर्षिवेदव्यासविरचितम्।

कर्णपर्व्व।

सि, आइ, इ, उपाधिधारिणा

रायश्रीप्रतापचन्द्रेण

प्रकाशितम्

मूल्यं विना वितीर्णञ्च।

“[illegible]”

---

तृतीयसंस्करणम्।

कलिकाता बीडन् ष्ट्रीटान्तर्गत

१ नं राजा गुरुदास ष्ट्रीट् भारतयन्त्रे

श्रीकालिदास सेनेन मुद्रितम्।

शकाब्दाः १८११।

दृष्ट्वा पाण्डवास्त्वां महारथाः । द्रविष्यन्ति सपाञ्चाला विष्णुं
दृष्ट्वेव दानवाः । तस्मात्त्वं पुरुषव्याघ्र प्रकर्षैतां महाचमूम् ॥३३॥
भवत्यवस्थिते यत्ते पाण्डवा मन्दचेतसः । द्रविष्यन्ति सहामात्याः
पाञ्चाला सृञ्जयाश्च ह ॥ ३४ ॥ यथा ह्यभ्युदितः सूर्य्यः प्रतपन्
स्वेन तेजसा । व्यपोहति तमस्तीव्रं तथा शत्रून् प्रतापय ॥ ३५ ॥

सञ्जय उवाच । आशा बलवती राजन् पुत्रस्य तव याऽभवत् ।
हते भीष्मे च द्रोणे च कर्णो जेष्यति पाण्डवान् ॥ ३६ ॥ तामाशां
हृदये कृत्वा कर्णमेवं तदाब्रवीत् । सूतपुत्र न ते पार्थः स्थित्वाग्रे
संयुयुत्सति ॥ ३७ ॥

कर्ण उवाच । उक्तमेतन्मया पूर्वं गान्धारे तव सन्निधौ ।
जेष्यामि पाण्डवान् सर्वान् सपुत्रान् सजनार्द्दनान् ॥ ३८ ॥ सेना-
पतिर्भविष्यामि तवाहं नात्र संशयः । स्थिरो भव महाराज जितान्
विद्धि च पाण्डवान् ॥ ३९ ॥

सञ्जय उवाच । एवमुक्तो महाराज ततो दुर्य्योधनो नृपः ।
उत्तस्थौ राजभिः सार्द्धं देवैरिव शतक्रतुः । सैनापत्येन सत्कर्त्तुं
कर्णं स्कन्दमिवामराः ॥ ४० ॥ ततोऽभिषिषिचुः कर्णं विधि-
दृष्टेन कर्म्मणा । दुर्य्योधनमुखा राजन् राजानो विजयैषिणः
॥ ४१ ॥ शातकुम्भमयैः कुम्भैर्माहेयैश्चैवानुमन्त्रितैः । तोयपूर्णै-
र्विषाणैश्च द्विपखड्गमहर्षभैः ॥ ४२ ॥ मणिमुक्तायुतैश्चान्यैः पुण्य-
गन्धैस्तथौषधैः । औडुम्बरे सुखासीनमासने क्षौमसंवृते ॥ ४३ ॥
शास्त्रदृष्टेन विधिना सम्भारैश्च सुसंभृतैः । ब्राह्मणाः क्षत्रिया
वैश्यास्तथा शूद्राश्च सम्मताः । तुष्टुवुस्तं महात्मानमभिषिक्तं वरा-
सने ॥४४॥ ततोऽभिषिक्तो राजेन्द्र निष्कैर्गोभिर्धनेन च । वाचया-
मास विप्राग्र्यान् राधेयः परवीरहा ॥ ४५ ॥ जय पार्थान् सगो-
विन्दान् सानुगांस्तान्महाहवे । इति ते वन्दिनः प्राहुर्द्विजाश्च
पुरुषर्षभ ॥ ४६ ॥ जहि पार्थान् सपाञ्चालान् राधेय विजयाय

नः उदयन्निव सदा भानुस्तमांसाग्रैर्गभस्तिभिः ॥ ४७ ॥ न स्थूलं
त्वदिसृष्टानां शराणां वै सकेशवाः । कृतघ्नाः सूर्यरश्मीनां ज्वलता-
मिव दर्शने ॥ ४८ ॥ न च पार्थाः सपाञ्चालाः स्थातुं शक्तास्तवा-
ग्रतः । आत्तशस्त्रस्य समरे महेन्द्रस्येव दानवाः ॥ ४९ ॥ अभि-
षिक्तस्तु राधेयः प्रभया सोऽमितप्रभः । अत्यरिच्यत रूपेण दिवा-
कर इवापरः ॥ ५० ॥ सैन्यापत्ये तु राधेयमभिषिच्य सुतस्तव ।
अमन्यत तदात्मानं कृतार्थं कालचोदितः ॥ ५१ ॥ कर्णोऽपि राजन
संप्राप्य सैनापत्यमरिन्दम । योगमाज्ञापयामास सूर्यस्योदयन
प्रति ॥ ५२ ॥ तव पुत्रैर्वृतः कर्णः शुशुभे तत्र भारत । देवैरि
यथा स्कन्दः संग्रामे तारकामये ॥२५ ॥

इति कर्णपर्वणि कर्णाभिषेके दशमोऽध्यायः ॥ १० ॥

---

धृतराष्ट्र उवाच । सैनापत्यन्तु संप्राप्य कर्णो वैकर्तनस्तदा
तथोक्तश्च स्वयं राज्ञा स्निग्धं भ्रातृसमं वचः ॥ १ ॥ योगमाज्ञा
सेनानामादित्येऽभ्युदिते तदा । अकरोत् किं महाप्राज्ञस्तन्ममाच
सञ्जय ॥ २ ॥

सञ्जय उवाच । कर्णस्य मतमाज्ञाय पुत्रास्ते भरतर्षभ
योगमाज्ञापयामासुर्नन्दितूर्यपुरःसरम् ॥ ३ ॥ महत्यपररात्रे
तव सैन्यस्य पार्थिव । योग योगेति सहसा प्रादुरासीन्महास्व
॥ ४ ॥ कल्पतां नागमुख्यानां रथानाञ्च वरूथिनाम् । सन्नह्य
पदातीनां वाजिनाञ्च विशाम्पते ॥ ५ ॥ क्रोशताञ्चापि योधान
त्वरितानां परस्परम् । बभूव तुमुलः शब्दो दिवस्पृक् सुमहांस्त
॥ ६ ॥ ततः श्वेतपताकेन बलाकावर्णवाजिना । हेमपृष्ठेन धनुष
नागकक्षेण केतुना ॥ ७ ॥ तूणीरशतपूर्णेन साङ्गदेन वरूथिना
शतघ्नीकिङ्किणीशक्तिशूलतोमरधारिणा ॥ ८ ॥ कार्मुकैरुपपन्ने

विमलादित्यवर्च्चसा । रथेनातिपताकेन सूतपुत्त्रोऽभ्यदृश्यत ॥ ९ ॥
ध्मापयन् वारिजं राजन् हेमजालविभूषितम् । विधुन्वानो महद्-
चापं कार्त्तस्वरविभूषितम् ॥ १० ॥ दृष्ट्वा कर्णं महेष्वासं रथस्थं
रथिनां वरम् । भानुमन्तमिवोद्यन्तं तमोघ्नन्तं दुरासदम् ॥११॥
न भीष्मव्यसनं केचिन्नापि द्रोणस्य मारिष । नान्येषां पुरुषव्याघ्र
मेनिरे तत्र कौरवाः ॥ १२ ॥ ततस्तु त्वरयन् योधान् शङ्खशब्देन
मारिष । कर्णो निष्कर्षयामास कौरवाणां महद्बलम् ॥ १३ ॥
व्यूह्य व्यूहं महेष्वासो मकरं शत्रुतापनः । प्रत्युद्ययौ तदा कर्णः
पाण्डवान् विजिगीषया ॥ १४ ॥ मकरस्य तु तुण्डे वै कर्णो राजन्
व्यवस्थितः । नेत्राभ्यां शकुनिः शूर उलूकश्च महारथः ॥ १५ ॥
द्रोणपुत्त्रस्तु शिरसि ग्रीवायां सर्व्वसोदराः । मध्ये दुर्य्योधनो राजा
बलेन महतावृतः ॥ १६ ॥ वामे पादे तु राजेन्द्र कृतवर्म्मा व्यव-
स्थितः । नारायणबलैर्युक्तो गोपालैर्युद्धदुर्म्मदैः ॥ १७ ॥ पादे
तु दक्षिणे राजन् गौतमः सत्यविक्रमः । त्रिगर्त्तैश्च महेष्वासै-
र्दाक्षिणात्यैश्च संवृतः ॥ १८ ॥ अनुपादस्तु यो वामस्तत्र शल्यो
व्यवस्थितः । महत्या सेनया सार्द्धं मद्रदेशसमुत्थया ॥ १९ ॥
दक्षिणे तु महाराज सुषेणः सत्यसङ्गरः । वृतो रथसहस्रेण
दन्तिनाञ्च त्रिभिः शतैः ॥ २० ॥ पुच्छेऽप्यास्तां महावीर्य्यौ भ्रातरौ
पार्थिवौ तदा । चित्रश्च चित्रसेनश्च महत्या सेनया वृतौ ॥ २१ ॥
तथा प्रयाते राजेन्द्र कर्णे नरवरोत्तमे । धनञ्जयमभिप्रेक्ष्य धर्म्म-
राजोऽब्रवीदिदम् ॥ २२ ॥ पश्य पार्थ यथा सेना धार्त्तराष्ट्रीह
संयुगे । कर्णेन विहिता वीर गुप्ता वीरैर्महारथैः ॥ २३ ॥ हत-
वीरतमा ह्येषा धार्त्तराष्ट्री महाचमूः । फल्गुशेषा महाबाहो
तृणैस्तुल्या मता मम । एको ह्यत्र महेष्वासः सूतपुत्त्रो विराजते
॥ २४ ॥ सदेवासुरगन्धर्व्वैः सकिन्नरमहोरगैः । चराचरैस्त्रिभि-
र्लोकैर्योऽजय्यो रथिनां वरः ॥२५॥ तं हत्वाद्य महाबाहो विजय-

रूव फाल्गुनः। तदृ तव भवेच्छ्रेयो मम द्वादशवार्षिक। एवं श्रुत्वा महाबाहो व्यूहं व्यूह्य यथेच्छसि ॥ २६ ॥ भ्रातुरेतद्वचः श्रुत्वा पाण्डवः श्वेतवाहनः। अर्द्धचन्द्रेण व्यूहेन प्रत्यव्यूहत तां चमूम् ॥ २७ ॥ वामपार्श्वे तु तस्याथ भीमसेनो व्यवस्थितः। दक्षिणे च महेष्वासो धृष्टद्युम्नो व्यवस्थितः ॥ २८ ॥ मध्ये व्यूहस्य राजा तु पाण्डवश्च धनञ्जयः। नकुलः सहदेवश्च धर्मराजस्य पृष्ठतः ॥ २९ ॥ चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ। नार्जुनं जहतु युद्धे पाल्यमानौ किरीटिना ॥ ३० ॥ शेषा नृपतयो वीराः स्थिताः व्यूहस्य दंशिताः। यथाभागं यथोत्साहं यायतन्त भारत ॥३१॥ एवमेतन्महाव्यूहं व्यूह्य भारत पाण्डवाः तावकाश्च महेष्वासा युद्धायैव मनो दधुः ॥ ३२ ॥ दृष्ट्वा व्यूढां तु चमूं सूतपुत्रेण संयुगे। निहतान् पाण्डवान् मेने धार्त्तराष्ट्रः सबान्धवः ॥ ३३ ॥ तथैव पाण्डवीं सेनां व्यूढां दृष्ट्वा युधिष्ठिरः। धार्त्तराष्ट्रान् हतान् मेने सकर्णान् वै जनाधिप ॥ ३४ ॥ ततः शङ्खाश्च भेर्यश्च पणवा नकदुन्दुभीः। डिण्डिमाश्चाप्यहन्यन्त भर्य्यः सर्वन्ततः ॥ ३५ ॥ सेनयोरुभयो राजन् प्रावाद्यन्त महास्वना। सिंहनादश्च संजज्ञे शूराणां जयगृद्धिनाम् ॥ ३६ ॥ हयहेषितशब्दाश्च वारणानाञ्च बृंहताम्। रथनेमिस्वनाश्चोग्राः संबभूवुर्जनाधिप ॥ ३७ ॥ न द्रोणव्यसनं कश्चिज्जानीते तत्र भारत। दृष्ट्वा कर्णं महेष्वासं मुखे व्यूहस्य दंशितम् ॥ ३८ ॥ उभे सैन्ये महाराज प्रहृष्टनरसङ्कुले। योद्धुकामे स्थिते राजन् हन्तुमन्योऽन्यमञ्जसा ॥ ३९ ॥ तत्र यत्तौ सुसंरब्धौ दृष्ट्वान्योन्यं व्यवस्थितौ। अनीकमध्ये राजेन्द्र चेरतुः कर्णपाण्डवौ ॥४०॥ नृत्यमेव च ते सेने समेयातां परस्परम्। तेषां पक्षैः प्रपक्षैश्च निर्जग्मुस्ते युयुत्सवः ॥४१॥ ततः प्रववृते युद्धं नरवारणवाजिनाम्। रथानाञ्च महाराज अन्योऽन्यमभिनिघ्नताम् ॥ ४२ ॥

इति कर्णपर्वणि युद्धारम्भे एकादशोऽध्यायः ॥ ११ ॥

सञ्जय उवाच। ते सेनेऽन्योऽन्यमासाद्य प्रहृष्टाश्वनरद्विपे।
बृहत्यौ संप्रजह्राते देवासुरसमप्रभे ॥ १ ॥ ततो नररथाश्वेभाः
पत्तयश्चोग्रविक्रमाः। संप्रहारान् भृशञ्चक्रुर्देहपाप्मप्रणाशनान् ॥२॥
पूर्णचन्द्रार्कपद्मानां कान्तिभिर्गन्धतः समैः। उत्तमाङ्गैर्नृसिंहानां
नृसिंहास्तस्तरुर्महीम् ॥ ३ ॥ अर्द्धचन्द्रैस्तथा भल्लैः क्षुरप्रैरसि-
पट्टिशैः। परश्वधैश्चाप्यकृन्तन्नुत्तमाङ्गानि युध्यताम् ॥ ४ ॥ व्याय-
तायतबाहूनां व्यायतायतबाहुभिः। बाहवः पातिता रेजुर्धरण्यां
सायुधाङ्गदाः ॥ ५ ॥ तैः स्फुरद्भिर्मही भाति रक्ताङ्गुलितलैस्-
तथा। गरुड़प्रहतैःरुग्रैः पञ्चास्यैरुरगैरिव ॥ ६ ॥ द्विरदस्यन्द-
नाश्वेभ्यः पेतुर्वीरा द्विषद्धताः। विमानेभ्यो यथा क्षीणे पुण्य
स्वर्गसदस्तथा ॥ ७ ॥ गदाभिरन्ये गुर्वीभिः परिघैर्मुषलैरपि।
पोथिताः शतशः पेतुर्वीरा वीरतरै रणे ॥ ८ ॥ रथा रथैर्विम-
थिता मत्ता मत्तैर्द्विपैर्द्विपाः। सादिनः सादिभिश्चैव तस्मिन् परम-
संकुले ॥ ९ ॥ रथैर्नरा रथा नागैरश्वारोहाश्च पत्तिभिः।
अश्वारोहैः पदाताश्च निहता युधि शेरते ॥ १० ॥ रथाश्वपत्तयो
नागै रथाश्वेभाश्च पत्तिभिः। रथपत्तिद्विपाश्चाश्वै रथैश्चापि नर-
द्विपाः ॥ ११ ॥ रथाश्वेभनराणान्तु नराश्वेभरथैः कृतम्। पाणि-
पादैश्च शस्त्रैश्च रथैश्च कदनं महत् ॥ १२ ॥ तथा तस्मिन् बले
शूरैर्वध्यमाने हतेऽपि च। अस्मानभ्याययुः पार्था वृकोदरपुरो-
गमाः ॥ १३ ॥ धृष्टद्युम्नः शिखण्डी च द्रौपदेयाः प्रभद्रकाः।
सात्यकिश्चेकितानश्च द्राविड़ैः सैनिकैः सह ॥ १४ ॥ हता व्यूहेन
महता पाण्ड्याश्चोलाः सकेरलाः। व्यूढोरस्का दीर्घभुजाः प्रांशवः
पृथुलोचनाः ॥ १५ ॥ आपीड़िनो रक्तदन्ता मत्तमातङ्गविक्रमाः।
नानाविरागवसना गन्धचूर्णावचूर्णिताः ॥ १६ ॥ बद्धासयः पाश-
हस्ता वारणप्रतिवारणाः। समानमृत्यवो राजन् नात्यजन्त पर-
स्परम् ॥ १७ ॥ कलापिनश्चापहस्ता दीर्घकेशाः प्रियम्वदाः।

पत्तयः सात्यकेरग्र्या घोररूपपराक्रमाः ॥ १८ ॥ अथापरे पुनः
शूराश्चेदिपाञ्चालकैकयाः । कारूषा कोशलाः काश्या मागधा-
श्चाभिदुद्रुवुः ॥ १९ ॥ तेषां रथाश्वनागाश्च प्रवराश्चोग्रपत्तय ।
नानावाद्यरवैर्हृष्टा नृत्यन्ति च हसन्ति च ॥ २० ॥ तस्य सैन्यस्य
महतो महामात्रवरैर्वृतः । मध्ये वृकोदरोऽभ्यायात्त्वदीयान्नाग-
धूर्गतः ॥ २१ ॥ स नागप्रवरोऽत्युग्रो विधिवत्कल्पितो बभौ ।
उदयाग्र्याद्रिभवनं यथाभ्युदितभास्करम् ॥ २२ ॥ तस्यायसं वर्म-
वरं वररत्नविभूषितम । ताराव्याप्तस्य नभसः शारदस्य समत्विषम्
॥ २३ ॥ स तोमरव्यग्रकरश्चारुमौलिः स्वलंकृतः । शरन्मध्य-
न्दिनार्काभस्तेजसा व्यदहद्रिपून् ॥ २४ ॥ तं दृष्ट्वा द्विरदं दूरात्
क्षेमधूर्तिर्द्विपस्थितः । आह्वयन्नभिदुद्राव प्रमनाः प्रमनस्तरम् ॥२५
तयो समभवद्युद्धं द्विपयोरुग्ररूपयोः । यदृच्छया द्रुमवतोर्महा-
पर्वतयोरिव ॥ २६ ॥ संसक्तनागौ तौ वीरौ तोमरैरितरेतरम् ।
बलवत् सूर्यरश्म्याभैर्भित्त्वान्योऽन्यं विनेदतुः ॥ २७ ॥ व्यपसृत्य
तु नागाभ्यां मण्डलानि विचेरतुः । प्रगृह्य चोभौ धनुषी जघ्नतुर्वै
परस्परम् ॥ २८ ॥ क्ष्वेडितास्फोटितरवैर्बाणशब्दैश्च सर्वतः । तौ
जनं हर्षयन्तौ च सिंहनादं प्रचक्रतुः ॥ २९ ॥ समुद्यतकराभ्यां तौ
द्विपाभ्यां कृतिनावुभौ । वातोद्धूतपताकाभ्यां युयुधाते महाबलौ
॥ ३० ॥ तावन्योऽन्यस्य धनुषी छित्त्वान्योऽन्यं विनेदतुः । शक्ति-
तोमरवर्षेण प्रावृण्मेघाविवाम्बुभिः ॥ ३१ ॥ क्षेमधूर्तिस्तदा भीमं
तोमरेण स्तनान्तरे । निर्बिभेदातिवेगेन षड्भिश्चाप्यपरैर्नदन्
॥ ३२ ॥ स भीमसेनः शुशुभे तोमरैरङ्गमाश्रितैः । क्रोधदीप्तवपु-
र्मेघैः सप्तसप्तिरिवांशुमान् ॥ ३३ ॥ ततो भास्करवर्णाभमञ्जोगति-
मयस्मयम् । ससर्ज तोमरं भीमः प्रत्यमित्राय यत्नवान् ॥ ३४ ॥
ततः कुलूताधिपतिश्चापमायम्य सायकैः । दशभिस्तोमरं छित्त्वा
षष्ट्या विव्याध पाण्डवम् ॥ ३५ ॥ अथ कार्मुकमादाय भीमो

जलदनिस्वनम्। रिपोरभ्यर्द्दयन्नागमुदन्वन् पाण्डवं शरैः ॥ ३६ ॥ स शरैराहितो नागो भीमसेनेन संयुगे। रुध्यमाणोऽपि नातिष्ठ-द्वातोद्धूत इवाम्बुदः ॥ ३७ ॥ तमभ्यधावद्द्विरदं भीमो भीमस्य नागराट्। महावातेरितं मेघं वातोद्धूत इवाम्बुदः ॥ ३८ ॥ सं-निवर्त्त्यात्मनो नागं क्षेमधूर्त्तिः प्रतापवान्। विव्याधाभिद्रुतं बाणै-र्भीमसेनस्य कुञ्जरम् ॥ ३९ ॥ ततः साधुविसृष्टेन क्षुरेणानत-पर्वणा। छित्त्वा शरासनं शत्रोर्नागमामित्रमार्द्दयत् ॥ ४० ॥ ततः क्रुद्धो रणे भीमं क्षेमधूर्त्तिः पराभिनत्। जघान चास्य द्विरदं नाराचैः सर्वमर्म्मसु। स पपात महानागो भीमसेनस्य भारत ॥ ४१ ॥ पुरा नागस्य पतनादवप्लुत्य स्थितो महीम्। तस्य भीमोऽपि द्विरदं गदया समपोथयत् ॥ ४२ ॥ तस्मात् प्रमथिता-न्नागात् क्षेमधूर्त्तिमवप्लुतम्। उद्यतायुधमायान्तं गदयाहन् वृको-दरः ॥ ४३ ॥ स पपात हतः सासिर्व्यसुस्तमभितो द्विपम्। वज्र-प्रभग्नमचलं सिंहो वज्रहतो यथा ॥ ४४ ॥ तं हतं नृपतिं दृष्ट्वा कुलूतानां यशस्करम्। प्राद्रवद्व्यथिता सेना त्वदीया भरतर्षभ ॥४५

इति कर्णपर्वणि क्षेमधूर्त्तिवधे द्वादशोऽध्यायः ॥ १२ ॥

---

सञ्जय उवाच। ततः कर्णो महेष्वासः पाण्डवानामनीकिनीम्। जघान समरे शूरः शरैः सन्नतपर्वभिः ॥ १ ॥ तथैव पाण्डवा राजं-स्तव पुत्रस्य वाहिनीम्। कर्णस्य प्रमुखे क्रुद्धा निजघ्नुस्ते महा-रथाः ॥ २ ॥ कर्णोऽपि राजन् समरे व्यहनत् पाण्डवीं चमूम्। नाराचैरर्करश्म्याभैः कर्मारपरिमार्ज्जितैः ॥ ३ ॥ तत्र भारत कर्णेन नाराचैस्ताड़िता गजाः। नेदुः सेदुश्च मम्लुश्च बभ्रमुश्च दिशो दश ॥ ४ ॥ बध्यमाने बले तस्मिन् सूतपुत्रेण मारिष। नकुलो-ऽभ्यद्रवत्तूर्णं सूतपुत्रं महारथम् ॥ ५ ॥ भीमसेनस्तथा द्रौणिं

कुर्वाणं कर्म दुष्करम् । विन्दानुविन्दौ कैकेयौ सात्यकिः समवारयत् ॥ ६ ॥ श्रुतकर्माणमायान्तं चित्रसेनो महीपतिः । प्रतिविन्ध्यस्तथा चित्रं चित्रकेतनकार्मुकम् ॥ ७ ॥ दुर्य्योधनस्तु राजानं धर्मपुत्रं युधिष्ठिरम् । संशप्तकगणान् क्रुद्धानभ्यधावद्धनञ्जयः ॥८॥ धृष्टद्युम्नः कृपं प्रायात् तस्मिन् वीरवरक्षये । शिखण्डी कृतवर्माणं समासादयदच्युतः ॥ ९ ॥ श्रुतकीर्त्तिस्तथा शल्यं माद्रीपुत्रः सुतं तव । दुःशासनं महाराज सहदेवः प्रतापवान् ॥ १० ॥ कैकेयौ सात्यकिं युद्धे शरवर्षेण भास्वता । सात्यकिः कैकयौ चापि छादयामास भारत ॥११॥ तावेनं भ्रातरौ वीरौ जघ्नतुर्हृदये भृशम् । विषाणाभ्यां यथा नागौ प्रतिनागं महारणे ॥ १२ ॥ शरसंभिन्नमर्माणौ तावुभौ भ्रातरौ रणे । सात्यकिं सत्यकर्माणं राजन् विभिदतुः शरैः ॥ १३ ॥ तौ सात्यकिर्महाराज प्रहसन् सर्वतो दिशः । छादयन् शरवर्षेण वारयामास भारत ॥ १४ ॥ वार्य्यमाणौ ततस्तौ हि शैनेयशरवृष्टिभिः । शैनेयस्य रथं तूर्णं छादयामासतुः शरैः ॥ १५ ॥ तयोस्तु धनुषी चित्रे छित्त्वा शौरिर्महारथः । अथ तौ सायकैस्तीक्ष्णैर्वारयामास संयुगे ॥ १६ ॥ अथान्ये धनुषी चित्रे प्रगृह्य च महाशरान् । सात्यकिं छादयन्तौ तौ चेरतुर्लघु सुष्ठु च ॥ १७ ॥ ताभ्यां मुक्ता महावाणा कङ्कबर्हिणवाससः । द्योतयन्तो दिशः सर्वाः संपेतुः स्वर्णभूषणाः ॥ १८ ॥ वाणान्धकारमभवत् तयो राजन्महामृधे । अन्योऽन्यस्य धनुश्चैव चिच्छिदुस्ते महारथा ॥ १९ ॥ तत क्रुद्धो महाराज सात्त्वतो युद्धदुर्मदः । धनुरन्यत् समादाय सज्यं कृत्वा च संयुगे । क्षुरप्रेण सुतीक्ष्णेन अनुविन्दशिरोऽहरत् ॥ २० ॥ अपतत्तच्छिरो राजन् कुण्डलोपचितं महत् । शम्बरस्य शिरो यद्वन्निहतस्य महारणे । शोचयन् कैकयान् सर्वान् जगामाशु वसुन्धराम् ॥२१॥ तं दृष्ट्वा निहतं शूरं भ्राता तस्य महारथः । सज्यमन्यद्धनु कृत्वा

शैनेयं पर्य्यवारयत् ॥ २२ ॥ स शष्ट्या सात्यकिं विद्धा स्वर्णपुङ्खैः शिलाशितैः । ननाद बलवन्नादं तिष्ठ तिष्ठेति चाब्रवीत् ॥ २३ ॥ सात्यकिञ्च ततस्तूर्णं कैकेयानां महारथः । शरैरनेकसाहस्रै- र्बाह्वोरुरसि चार्पयत् ॥ २४ ॥ स शरैः क्षतसर्वाङ्गः सात्यकिः सत्यविक्रमः । रराज समरे राजन् सपुष्प इव किंशुकः ॥ २५ ॥ सात्यकिः समरे विद्धः कैकेयेन महात्मना । कैकेयं पञ्चविंशत्या विव्याध प्रहसन्निव ॥ २६ ॥ तावन्योऽन्यस्य समरे सञ्छिद्य धनुषी शुभे । हत्वा च सारथिं तूर्णं हयांश्च रथिनां वरौ । विरथा- वसियुद्धाय समाजग्मतुराहवे ॥ २७ ॥ शतचन्द्रचिते गृह्य चर्मणी सुभुजौ तथा । व्यरोचेतां महारङ्गे निस्त्रिंशवरधारिणौ । यथा देवासुरे युद्धे जम्भशक्रौ महाबलौ ॥ २८ ॥ मण्डलानि ततस्तौ तु विचरन्तौ महारणे । अन्योऽन्यमभितस्तूर्णं समाजग्मतुराहवे । अन्योऽन्यस्य वधे चैव चक्रतुर्यत्नमुत्तमम् ॥ २९ ॥ कैकेयस्य द्विधा चर्म्म ततश्चिच्छेद सात्वतः । सात्यकेस्तु तथैवासौ चर्म्म चिच्छेद पार्थिवः ॥ ३० ॥ चर्म्म छित्त्वा तु कैकेयस्तारागणशतैर्वृतम् । चचार मण्डलान्येव गतप्रत्यागतान्यपि ॥ ३१ ॥ तं चरन्तं महा- रङ्गे निस्त्रिंशवरधारिणम् । अपहस्तेन चिच्छेद शैनेयस्त्वरया- न्वितः ॥ ३२ ॥ सवर्म्मा कैकयो राजन् द्विधा छिन्नो महारणे । निपपात महेष्वासो वज्राहत इवाचलः ॥ ३३ ॥ तं निहत्य रणे शूरः शैनेयो रथसत्तमः । युधामन्युरथं तूर्णमारुरोह परन्तपः ॥ ३४ ॥ ततोऽन्यं रथमास्थाय विधिवत् कल्पितं पुनः । कैके- यानां महत् सैन्यं व्यधमत् सात्यकिः शरैः ॥ ३५ ॥ सा वध्यमाना समरे कैकेयानां महाचमूः । तमुत्सृज्य रणे शत्रुं प्रदुद्राव दिशो दश ॥ ३६ ॥

इति कर्णपर्व्वणि विन्दानुविन्दवधे त्रयोदशोऽध्यायः ॥ १३ ॥

---

सञ्जय उवाच। श्रुतकर्मा ततो राजंश्चित्रसेनं महीपतिम्।
आजघ्ने समरे क्रुद्धः पञ्चाशद्भिः शिलीमुखैः ॥ १ ॥ अभिसारस्तु
तं राजन्नवभिर्नतपर्वभिः। श्रुतकर्माणमाहत्य सूतं विव्याध पञ्चभिः
॥ २ ॥ श्रुतकर्मापि तं क्रुद्धश्चित्रसेनं चमूमुखे। नाराचेन सुती-
क्ष्णेन मर्मदेशे समार्पयत् ॥ ३ ॥ सोऽतिविद्धो महाराज नाराचेन
महात्मना। मूर्च्छामभिययौ वीरः कश्मलञ्च विवेश ह ॥ ४ ॥
एतस्मिन्नन्तरे चैनं श्रुतकीर्त्तिर्महायशाः। नवत्या जगतीपालं
छादयामास पत्रिभिः ॥ ५ ॥ प्रतिलभ्य ततः संज्ञां चित्रसेनो
महारथः। धनुश्चिच्छेद भल्लेन तञ्च विव्याध सप्तभिः ॥ ६ ॥
सोऽन्यत् कार्मुकमादाय वेगघ्नं रुक्मभूषणम्। चित्ररूपधरं चक्रे
चित्रसेनं शरोर्म्मिभिः ॥ ७ ॥ स शरैश्चित्रितो राजा चित्रमाला
धरो युवा। युवेव समरेऽशोभद्गोष्ठीमध्ये स्वलङ्कृतः ॥ ८ ॥ श्रुत-
कर्माणमथ वै नाराचेन स्तनान्तरे। विभेद तरसा राजंस्तिष्ठ
तिष्ठेति चाब्रवीत् ॥ ९ ॥ श्रुतकर्मापि समरे नाराचेन समर्पितः।
सुस्राव रुधिरं तत्र गैरिकाम्भ इवाचलः ॥ १० ॥ ततः स रुधिरा-
क्ताङ्गो रुधिरेण कृतच्छविः। रराज समरे वीरः सपुष्प इव
किंशुकः ॥ ११ ॥ श्रुतकर्मा तदा राजन् शत्रुणा समभिद्रुतः।
शत्रुसंवारणं क्रुद्धो द्विधा चिच्छेद कार्मुकम् ॥ १२ ॥ अथैनं
छिन्नधन्वानं नाराचानां शतैस्त्रिभिः। छादयन् समरे राजन्
विव्याध च सुपत्रिभिः ॥ १३ ॥ ततोऽपरेण भल्लेन तीक्ष्णेन
निशितेन च। जहार सशिरस्त्राणं शिरस्तस्य महात्मनः ॥ १४ ॥
तच्छिरो न्यपतद्भूमौ चित्रसेनस्य दीप्तिमत्। यदृच्छया यथा
चन्द्रश्च्युतः स्वर्गान्महीतलम् ॥ १५ ॥ राजानं निहतं दृष्ट्वा ते-
ऽभिसारन्तु मारिष। अभ्यद्रवन्त वेगेन चित्रसेनस्य सैनिकाः
॥ १६ ॥ ततः क्रुद्धो महेष्वासस्तत् सैन्यं प्राद्रवच्छरैः। अन्त-
काले यथा क्रुद्धः सर्व्वभूतानि प्रेतराट् ॥ १७ ॥ ते बध्यमानाः

समरे तव पौत्रेण धन्विना। अद्रवन्त दिशस्तूर्णं दावदग्धा इव
द्विपाः ॥ १८ ॥ तांस्तु विद्रवतो दृष्ट्वा निरुत्साहान् द्विषज्जये।
द्रावयन्निषुभिस्तीक्ष्णैः श्रुतकर्मा व्यरोचत ॥ १९ ॥ प्रतिविन्ध्य-
स्ततश्चित्रं भित्त्वा पञ्चभिराशुगैः। सारथिञ्च त्रिभिर्विद्ध्वा ध्वज-
मेकेषुणापि च ॥ २० ॥ तं छित्त्वा नवभिर्भल्लैर्बाह्वोरुरसि चार्प-
यत्। स्वर्णपुङ्खैः प्रसन्नाग्रैः कङ्कबर्हिणवाजितैः ॥ २१ ॥ प्रति-
विन्ध्यो धनुश्छित्त्वा तस्य भारत सायकैः। पञ्चभिर्निशितैर्बाणै-
रथैनं समुपाजघ्निवान् ॥ २२ ॥ ततः शक्तिं महाराज स्वर्णघण्टां
दुरासदाम्। प्राहिणोत्तव पौत्राय घोरामग्निशिखामिव ॥२३॥
तामापतन्तीं सहसा महोल्काप्रतिमां तदा। त्रिधा चिच्छेद
समरे प्रतिविन्ध्यो हसन्निव ॥ २४ ॥ सा पपात त्रिधा छिन्ना
प्रतिविन्ध्यशरैः शितैः। युगान्ते सर्वभूतानि त्रासयन्ती यथाशनिः
॥ २५ ॥ शक्तिं तां प्रहतां दृष्ट्वा चित्रो गृह्य महागदाम्। प्रति-
विन्ध्याय चिक्षेप रुक्मजालविभूषिताम् ॥ २६ ॥ सा जघान
हयांस्तस्य सारथिञ्च महारणे। रथं प्रमृद्य वेगेन धरणीमन्व-
पद्यत ॥ २७ ॥ एतस्मिन्नेव काले तु रथादाप्लुत्य भारत। शक्तिं
चिक्षेप चित्राय स्वर्णघण्टामलङ्कृताम ॥ २८ ॥ तामापतन्तीं
जग्राह चित्रो राजा महामनाः। ततस्तामेव चिक्षेप प्रतिविन्ध्याय
भारत ॥ २९ ॥ समासाद्य रणे शूरं प्रतिविन्ध्यं महाप्रभा।
निर्भिद्य दक्षिणं बाहुं निपपात महीतले। पतिताभासयच्चैव
तं देशमशनिर्यथा ॥ ३० ॥ प्रतिविन्ध्यस्ततो राजंस्तोमरं हेम-
भूषितम्। प्रेषयामास संक्रुद्धश्चित्रस्य वधकाम्यया ॥ ३१ ॥ स
तस्य वर्मावरणं भित्त्वा हृदयमेव च। जगाम धरणीं तूर्णं
महोरग इवाशयम् ॥ ३२ ॥ स पपात तदा राजा तोमरेण समा-
हतः। प्रसार्य्य विपुलौ बाहू पीनौ परिघसन्निभौ ॥ ३३ ॥ चित्रं
संप्रेक्ष्य निहतं तावका रणशोभिनः। अभ्यद्रवन्त वेगेन प्रति-

दिग्भ्यः समन्ततः ॥ ३५ ॥ सृजन्तो विविधान् बाणान् शतघ्नीश्च सकिङ्किणीः। तमवच्छादयामासुः सूर्य्यमभ्रगणा इव ॥ ३६ ॥ तान् विधम्य महाबाहुः शरजालेन संयुगे। व्यद्रावयत्तव चमूं वज्रहस्त इवासुरीम् ॥३७॥ ते वध्यमानाः समरे तावकाः पाण्डवर्षभ। विप्राकीर्य्यन्त सहसा वातनुन्ना घना इव ॥ ३७ ॥ विप्रद्रुते बले तस्मिन् वध्यमाने समन्ततः। द्रौ[illegible]कोऽभ्ययात्तूर्णं भीमसेनं महाबलम् ॥ ३८ ॥ ततः समागमो [illegible] बभूव सहसा तयोः। यथा देवासुरे युद्धे वृत्रवासवयोरभूत् ॥ ३९ ॥

इति कर्णपर्वणि चित्रवधे चतुर्द्दशोऽध्यायः ॥ १४ ॥

---

सञ्जय उवाच। भीमसेनं ततो द्रौणी राजन् विव्याध पत्रिणा। परया त्वरया युक्तो दर्शयन्नस्त्रलाघवम् ॥ १ ॥ तथैव पुनराजघ्ने नवत्या निशितैः शरैः। सर्वमर्माणि संप्रेक्ष्य मर्मज्ञो लघुहस्तवत् ॥ २ ॥ भीमसेनः समाकीर्णो द्रौणिना निशितैः शरैः। रराज समरे राजन्रश्मिमानिव भास्करः ॥ ३ ॥ ततः शरसहस्रेण सुप्रयुक्तेन पाण्डवः। द्रोणपुत्रमवच्छाद्य सिंहनादममुञ्चत ॥ ४ ॥ शरैः शरांस्ततो द्रौणिः संवार्य्य युधि पाण्डवम्। ललाटेऽभ्यहनद्राजन् नाराचेन स्मयन्निव ॥ ५ ॥ ललाटस्थं ततो बाणं धारयामास पाण्डवः। यथा शृङ्गं वने दृप्तः खड्गी धारयते नृप ॥ ६ ॥ ततो द्रौणिं रणे भीमो यतमानं पराक्रमी। त्रिभिर्विव्याध नाराचैर्ललाटे विस्मयन्निव ॥ ७ ॥ ललाटस्थैस्ततो बाणैर्ब्राह्मणोऽसौ व्यशोभत। प्रावृषीव यथा सिक्तस्त्रिशृङ्गः पर्वतोत्तमः ॥ ८ ॥ ततः शरशतैर्द्रौणिरर्द्दयामास पाण्डवम्। न चैनं कम्पयामास मातरिश्वेव पर्वतम ॥ ९ ॥ तथैव पाण्डवो युद्धे द्रौणिं शरशतैः शितैः। नाकम्पयत संहृष्टो वार्य्योघ इव पर्व-

तम् ॥ १० ॥ तावन्योन्यं शरैर्घोरैश्छादयानौ महारथौ । रथ-
वर्य्यंगतौ वीरौ शुशुभाते बलोत्कटौ ॥ ११ ॥ आदित्याविव सं-
दीप्तौ लोकक्षयकरावुभौ । स्वरश्मिभिरिवान्योऽन्यं तापयन्तौ
शरोत्तमैः ॥ १२ ॥ ततः प्रतिकृते यत्नं कुर्व्वाणौ तौ महारणे ।
कृतप्रतिकृते यत्तौ शरसंघैरभीतवत् ॥ १३ ॥ व्याघ्राविव च संग्रामे
चेरतुस्तौ नरोत्तमौ । शरदंष्ट्रौ दुराधर्षौ चापवक्त्रौ भयङ्करौ
॥ १४ ॥ अभूतां तावदृश्यौ च शरजालैः समन्ततः । मेघजालै-
रिवच्छन्नौ गगणे चन्द्रभास्करौ ॥ १५ ॥ चकाशेते मुहूर्त्तेन
ततस्तावप्यरिन्दमौ । विमुक्तावभ्रजालेन अङ्गारकबुधाविव ॥१६॥
अथ तत्रैव संग्रामे वर्त्तमाने सुदारुणे । अपसव्यं ततश्चक्रे द्रौणि-
स्तत्र वृकोदरम् ॥ १७ ॥ किरञ्छरशतैरुग्रैर्धाराभिरिव पर्व्वतम् ।
न तु तम्ममृषे भीमः शत्रोर्विजयलक्षणम् ॥ १८ ॥ प्रतिचक्रे ततो
राजन् पाण्डवोऽप्यपसव्यतः । मण्डलानां विभागेषु गतप्रत्यागतेषु
च ॥ १९ ॥ बभूव तुमुलं युद्धं तयोः पुरुषसिंहयोः । चरित्वा
विविधान् मार्गान् मण्डलस्थानमेव च ॥ २० ॥ शरैः पूर्णायतोत्-
सृष्टैरन्योऽन्यमभिजघ्नतुः । अन्योऽन्यस्य वधे चैव चक्रतुर्यत्नमुत्तमम् ।
ईषतुर्विरथञ्चैव कर्त्तुमन्योऽन्यमाहवे ॥ २१ ॥ ततो द्रौणिर्महा-
स्त्राणि प्रादुश्चक्रे महारथः । तान्यस्त्रैरेव समरे प्रतिजघ्नेऽस्य
पाण्डवः ॥ २२ ॥ ततो घोरं महाराज अस्त्रयुद्धमवर्त्तत । ग्रहयुद्धं
यथा घोरं प्रजासंहरणे ह्यभूत् ॥ २३ ॥ ते वाणाः समसज्जन्त
मुक्तास्ताभ्यान्तु भारत । द्योतयन्तो दिशः सर्व्वास्तव सैन्यं सम-
न्ततः ॥ २४ ॥ वाणसंघैर्वृतं तं घोरमाकाशं समपद्यत । उल्का-
पातावृतं यद्वत् प्रजानां सङ्क्षये नृप ॥ २५ ॥ वाणाभिघातात्
सञ्जज्ञे तत्र भारत पावकः । सविस्फुलिङ्गो दीप्तार्च्चिर्योऽदह-
द्वाहिनीद्वयम् ॥ २६ ॥ तत्र सिद्धा महाराज संप्रतन्तोऽब्रुवन् वचः ।
युद्धानामति सर्व्वेषां युद्धमेतदिति प्रभो ॥ २७ ॥ सर्व्वयुद्धानि

दुन्दुभयो नेदुः पुष्पवर्षाणि चापतन् । केशवार्जुनयोर्मूर्द्ध्नि प्राह वागशरीरिणी ॥ १५ ॥ चन्द्राग्न्यनिलसूर्य्याणां कान्तिदीप्तिबलद्युतीः । यौ सदा बिभ्रतौ वीराविमौ तौ केशवार्जुनौ ॥ १६ ॥ ब्रह्मेशानाविवाजेयौ वीरावेकरथे स्थितौ । सर्वभूतवरौ वीरौ नरनारायणाविमौ ॥ १७ ॥ इत्येतन्महदाश्चर्य्यं दृष्ट्वा श्रुत्वा च भारत । अश्वत्थामा सुसंयत्तः कृष्णावभ्यद्रवद्रणे ॥ १८ ॥ अथ पाण्डवमस्यन्तममित्रघ्नकरान् शरान् । सेषुणा पाणिनाहूय प्रहसन् द्रौणिरब्रवीत् ॥१९॥ यदि मां मन्यसे वीर प्राप्तमर्हमिवातिथिम् । ततः सर्वात्मनाद्य त्वं युद्धातिथ्यं प्रयच्छ मे ॥ २० ॥ एवमाचार्य्यपुत्रेण समाहूतो युयुत्सया । बहु मेनेऽर्जुनोत्मानमिदञ्चाह जनार्द्दनम् ॥ २१ ॥ संशप्तकाश्च मे वध्या द्रौणिराह्वयते च माम् । यदत्रानन्तरं प्राप्तं शंस मे तद्धि माधव । आतिथ्यकर्माभ्युत्थाय दीयतां यदि मन्यसे ॥ २२ ॥ एवमुक्तोऽवहत् पार्थं कृष्णो द्रोणात्मजान्तिकम् । जैत्रेण विधिनाहूतं वायुरिन्द्रमिवाध्वरे ॥ २३ ॥ तमामन्त्र्यैकमनसं केशवो द्रौणिमब्रवीत् । अश्वत्थामन् स्थिरो भूत्वा प्रहराशु सहस्व च ॥ २४ ॥ निर्वेष्टुं भर्त्तृपिण्डं हि कालोऽयमुपजीविनाम् । सूक्ष्मो विवादो विप्राणां स्थूलौ चात्रौ जयाजयौ ॥ २५ ॥ यामभ्यर्थयसे मत्ताद्दिव्यां पार्थस्य सत्क्रियाम् । तामाप्तुमिच्छन् युध्यस्व स्थिरो भूत्वाद्य पाण्डवम् ॥ २६ ॥ इत्युक्तो वासुदेवेन तथेत्युक्त्वा द्विजोत्तमः । विव्याध केशवं षष्ट्या नाराचैरर्जुनं त्रिभिः ॥ २७ ॥ तस्यार्जुनः सुसंक्रुद्धस्त्रिभिर्बाणैः शरासनम् । चिच्छेद चान्यदादत्त द्रौणिर्घोरतरं धनुः ॥ २८ ॥ सज्यं कृत्वा निमेषाच्च विव्याधार्जुनकेशवौ । त्रिभिः शतैर्वासुदेवं सहस्रेण च पाण्डवम् ॥ २९ ॥ ततः शरसहस्राणि प्रयुतान्यर्बुदानि च । ससृजे द्रौणिरायस्तः संस्तभ्य च रणेऽर्जुनम् ॥ ३० ॥ इषुधेर्धनुषो ज्याया अङ्गुलिभ्यश्च मारिष । बाह्वोः कराभ्यामुरसो

वरुनघ्राणनेत्रतः ॥ ३१ ॥ कर्णाभ्यां शिरसोऽङ्गेभ्यो लोमवर्त्मभ्य एव च । रथध्वजेभ्यश्च शरा निष्पेतुर्ब्रह्मवादिनः ॥ ३२ ॥ शरजालेन महता विद्धा माधवपाण्डवौ । ननाद मुदितो द्रौणिर्महामेघौघनिस्वनम् ॥३३॥ तस्य तं निनदं श्रुत्वा पाण्डवोऽच्युतमब्रवीत् । पश्य माधव दौरात्म्यं गुरुपुत्रस्य मां प्रति ॥ ३४ ॥ वधं प्राप्तौ मन्यते नौ प्रवेश्य शरवेश्मनि । एषोऽस्मि हन्मि सङ्कल्पं शिक्षया च बलेन च ॥ ३५ ॥ अश्वत्थाम्नः शरानस्तांश्छित्त्वैकैकं त्रिभिस्त्रिभिः । व्यधमद्भरतश्रेष्ठो नीहारमिव भास्करः ॥ ३६ ॥ ततः संशप्तकान् भूयः साश्वसूतरथद्विपान् । ध्वजपत्तिरथानुग्रैर्बाणैर्विव्याध पाण्डवः ॥ ३७ ॥ ये ये ददृशिरे तत्र यद्यद्रूपास्तदा जनाः । ते ते तत्र शरै र्व्याप्तं मेनिरेऽत्मानमात्मना ॥३८॥ ते गाण्डीवप्रमुक्तास्तु नानारूपाः पतत्रिणः । क्रोशे समग्रे स्थितान् घ्नन्ति द्विपाश्वपुरुषान्रणे ॥ ३९ ॥ भल्लैश्छिन्नाः कराः पेतुः करिणां मदवर्षिणाम् । यथा वने परशुभिर्निकृत्ताः सुमहाद्रुमाः ॥ ४० ॥ पश्चात्तु शैलवत् पेतुस्ते गजाः सहसादिभिः । वज्रिवज्रप्रमथिता यथैवाद्रिचयास्तथा ॥४१॥ गन्धर्वनगराकारान्रथांश्चापि सुकल्पितान् । विनीतैर्जवनैर्युक्तानास्थितान् युद्धदुर्मदैः ॥ ४२ ॥ शरैर्विशकलीकुर्वन्नमित्रानभ्यवीवृषत् । स्वलंकृतानश्वसादीन् पत्तींश्चाहन् धनञ्जयः ॥ ४३ ॥ धनञ्जययुगान्तार्कः संशप्तकमहार्णवम् । व्यशोषयत दुःशोषं तीक्ष्णैः शरगभस्तिभिः ॥४४॥ पुनर्द्रौणिं महाशैलं नाराचैः सूर्य्यसन्निभैः । निर्बिभेद महावेगैस्त्वरन् वज्रीव पर्वतम् ॥४५॥ तमाचार्य्यसुतः क्रुद्धः साश्वयन्तारमाशुगैः । युयुत्सुरागमद्योद्धुं पार्थस्तानच्छिनच्छरान् ॥४६॥ ततः परमसंक्रुद्धः काण्डकोशानवासृजत् । अश्वत्थामाभिरूपाय गृहानतिथये यथा ॥४७॥ अथ संशप्तकांस्त्यक्त्वा पाण्डवो द्रौणिमभ्ययात् । अपाङ्क्तेयानिव त्यक्त्वा दाता पाङ्क्तेयमर्थिनम् ॥ ४८ ॥

इति कर्णपर्वणि अश्वत्थामार्जुनयुद्धे षोड़शोऽध्यायः ॥ १६ ॥

सञ्जय उवाच । ततः समभवद्युद्धं शुक्राङ्गिरसवर्चसोः ।
नक्षत्रमभितो व्योम्नि शुक्राङ्गिरसयोरिव ॥ १ ॥ सन्तापयन्ता-
वन्योऽन्यं दीप्तैः शरगभस्तिभिः । लोकत्रासकरावास्तां विमार्गस्थौ
ग्रहाविव ॥ २ ॥ ततोऽविध्यत् भ्रुवोर्मध्ये नाराचेनार्जुनो भृशम् ।
स तेन विबभौ द्रौणिरूर्द्ध्वरश्मिर्यथा रविः ॥ ३ ॥ अथ कृष्णौ
शरशतैरश्वत्थाम्नार्दितौ भृशम् स्वरश्मिजालविकचौ युगा-
न्तार्काविवासतुः ॥ ४ ॥ ततोऽर्जुनः सर्वतोधारमस्त्रमवासृजद्वासु-
देवेऽभिभूते । द्रौणायनिं चाभ्यहनत् पृषत्कैर्वज्राग्निवैवस्वतदण्ड-
कल्पैः ॥ ५ ॥ स केशवञ्चार्जुनञ्चातितेजा विव्याध मर्मस्वतिरौद्र-
कर्मा । बाणैः सुमुक्तैरतितीव्रवेगैर्यैराहतो मृत्युरपि व्यथेत ॥६॥
द्रौणेरिषूनर्जुनः संनिवार्य्य व्यायच्छतस्तद्द्विगुणैः सुपुङ्खैः । तं
साश्वसूतध्वजमेकवीरमावृत्य संशप्तकसैन्यमार्च्छत् ॥ ७ ॥ धनूंषि
बाणानिषुधीर्धनुर्ज्याः पाणीन् भुजान् पाणिगतञ्च शस्त्रम् । छत्राणि
केतूंस्तुरगानथेषां वस्त्राणि माल्यानि च भूषणानि ॥ ८ ॥ वर्माणि
चर्माणि मनोरमाणि प्रियाणि सर्वाणि शिरांसि चैव । चिच्छेद
पार्थो द्विषतां सुमुक्तैर्बाणैः स्थितानामपराङ्मुखानाम् ॥ ९ ॥ सुक-
ल्पिताः स्यन्दनवाजिनागाः समास्थिता यत्नकृतैर्नृवीरैः । पार्थे-
रितैर्बाणशतैर्निरस्तास्तैरेव सार्द्धं नृवरा निपेतुः ॥ १० ॥ पद्मार्क-
पूर्णेन्दुनिभाननानि किरीटमालामुकुटोत्कटानि । भल्लार्द्धचन्द्र-
क्षुरहिंसितानि प्रपेतुरुर्व्यां नृशिरांस्यजस्रम् ॥ ११ ॥ अथ द्विपै-
र्देवरिपुद्विपाभैर्देवारिदर्पापहमत्युदग्रम् । कलिङ्गवङ्गाङ्गनिषाद-
वीरा जिघांसवः पाण्डवमभ्यधावन् ॥ १२ ॥ तेषां द्विपानां निचकर्त्त
पार्थो वर्माणि मर्माणि करान् नियन्तॄन् । ध्वजाः पताकाश्च तत
प्रपेतुर्वज्राहतानीव गिरेः शिरांसि ॥ १३ ॥ तेषु प्ररुग्णेषु गुरो
स्तनूजं बाणैः किरीटी नवसूर्य्यवर्णैः । प्रच्छादयामास महाभ्र
जालैर्वायुः समुद्यन्तमिवांशुमन्तम् ॥ १४ ॥ ततोऽर्जुनेषूनिषुभि

निरस्य द्रौणिः शरैरर्जुनवासुदेवौ । प्रच्छादयित्वा दिवि चन्द्र-सूर्य्यौ ननाद सोऽम्भोद इवातपान्ते ॥ १५ ॥ तमर्जुनस्तांश्च पुन-स्त्वदीयानभ्यर्द्दितस्तैरभिसृत्य शस्त्रैः । वाणान्धकारं सहसैव कृत्वा विव्याध सर्वानिषुभिः सुपुङ्खैः ॥ १६ ॥ नाप्याददत् सन्दधन्नैव मुञ्चन् वाणानृणेऽदृश्यत सव्यसाची । हतांश्च नागांस्तुरगान् पदा-तीन् संस्यूतदेहान् ददृशू रथांश्च ॥ १७ ॥ सन्धाय नाराचवरान् दशाशु द्रौणिस्त्वरन्नेकमिवोत्ससर्ज्ज । तेषान्तु पञ्चार्जुनमभ्यविध्यन् पञ्चाच्युतं निर्विभिदुः समुक्ताः ॥ १८ ॥ तैराहतौ सर्वमनुष्य-मुख्यावसृक् क्षरन्तौ धनदेन्द्रकल्पौ । समाप्तविद्येन तथाभिभूतौ हतौ रणे ताविति मेनिरेऽन्ये ॥ १९ ॥ अथार्जुनं प्राह दशार्हनाथः प्रमाद्यसे किं जहि योधमेतम् । कुर्य्याद्धि दोषं समुपेक्षितोऽयं कष्टो भवेद्व्याधिरिवाक्रियावान् । तथेति चोक्ताच्युतमप्रमादी द्रौणिं प्रयत्नादिषुभिस्ततक्ष ॥ २० ॥ भुजौ वरौ चन्दनसारदिग्धौ वक्षः शिरोऽथाप्रतिमौ तथोरू । गाण्डीवमुक्तैः कुपितो विकर्णै-द्रौणिं शरैः संयति निर्बिभेद । छित्त्वा तु रश्मींस्तुरगानविध्यन्ते तं रणाद्दूरमहरतीव दूरम् ॥ २१ ॥ स तैर्हृतो वातजवैस्तुरङ्गैर्द्रौणि-र्दृढं पार्थशराभिभूतः । इयेष नावृत्य पुनस्तु योद्धुं पार्थेन सार्द्धं मतिमान् विमृश्य ॥ २२ ॥ जानन् जयं नियतं वृष्णिवीरे धनञ्जये चाङ्गिरसां वरिष्ठः । विविश कर्णस्य बलं तरस्वी क्षीणोत्साहः क्षीणवाणास्त्रयोगः ॥ २३ ॥ नियम्य तु हयान् द्रौणिः समाश्वस्य च मारिष । रथाश्वनरसंबाधं कर्णस्य प्राविशद्बलम् ॥ २४ ॥ प्रतीपकामे तु रणादश्वत्थाम्नि हृते हयैः । मन्त्रौषधिक्रियायोगै-र्व्याधौ देहादिवाहृते ॥ २५ ॥ संशप्तकानभिमुखौ प्रयातौ केशवा-र्जुनौ । वातोद्धूतपताकेन स्यन्दनेनौघनादिना ॥ २६ ॥

इति कर्णपर्वणि अश्वत्थामपराजये सप्तदशोऽध्यायः ॥ १७ ॥

---

सञ्जय उवाच । प्रत्यागत्य पुनर्जिष्णुर्जघ्ने संशप्तकान् बहून् ।
वक्रातिवक्रगमनादङ्गारक इव ग्रहः ॥ १ ॥ पार्थबाणहता राजन्
नराश्वरथकुञ्जराः । विचेलुर्बभ्रमुर्नेशुः पेतुर्मम्लुश्च भारत ॥ २ ॥
धुर्य्यान् धुर्य्यगतान् सूतान् ध्वजांश्चापानि सायकान् । पाणीन्
पाणिगतं शस्त्रं बाहूनपि शिरांसि च ॥ ३ ॥ भल्लैः क्षुरैरर्द्धचन्द्रै-
र्वत्सदन्तैश्च पाण्डवः । चिच्छेदामित्रवीराणां समरे प्रतियुध्यताम्
॥ ४ ॥ वाशितार्थे युयुत्सन्तो वृषभा वृषभं यथा । निपतन्त्यर्ज्जुनं
शूराः शतशोऽथ सहस्रशः ॥ ५ ॥ तेषां तस्य च तद्युद्धमभवल्लोम
हर्षणम् । त्रैलोक्यविजये यादृग्दैत्यानां सह वज्रिणा ॥ ६ ॥
तमविध्यत् त्रिभिर्बाणैर्दन्दशूकैरिवाहिभिः । उग्रायुधसुतस्तस्य
शिरः कायादपाहरत् ॥ ७ ॥ तेऽर्ज्जुनं सर्वतः क्रुद्धा नानाशस्त्रै-
रवीवृषन् । मरुद्भिः प्रेषिता मेघा हिमवन्तमिवोष्णगे ॥ ८ ॥
अस्त्रैरस्त्राणि संवार्य्य द्विषतां सर्वतोऽर्ज्जुनः । सम्यगस्तैः शरैः
सर्वानहितानहनद्बहून् ॥ ९ ॥ छिन्नत्रिवेणुसङ्घातान् हताश्व-
पार्ष्णिसारथीन् । विध्वस्तायुधतूणीरान् विचक्ररथकेतनान् ॥१०॥
संछिन्नरश्मियोक्त्राक्षान् व्यनुकर्षयुगाग्रथान् । विध्वस्तसर्वसन्नाहान्
बाणैश्चक्रेऽर्ज्जुनस्तदा ॥ ११ ॥ ते रथास्तत्र विध्वस्ताः परार्द्ध्या
भान्त्यनेकशः । धनिनामिव वेश्मानि हतान्यग्न्यनिलाम्बुभिः ॥१२॥
द्विपाः सम्भिन्नवर्म्माणो वज्राशनिसमैः शरैः । पेतुर्गिर्य्यग्रवेश्मानि
वज्रपाताग्निभिर्यथा ॥ १३ ॥ सारोहास्तुरगाः पेतुर्बहवोऽर्ज्जुन-
ताड़िताः । निर्ज्जिह्वान्त्राः क्षितौ क्षीणाः रुधिरार्द्राः सुदुर्दृशः
॥ १४ ॥ नराश्वनागा नाराचैः संस्यूताः सव्यसाचिना । बभ्रमु-
श्चस्खलुः पेतुर्नेदुर्मम्लुश्च मारिष ॥ १५ ॥ अनेकैश्च शिलाधौतै-
र्वज्राशनिविषोपमैः । शरैर्निजघ्निवान् पार्थो महेन्द्र इव दानवान्
॥ १६ ॥ महार्हवर्माभरणा नानारूपा वरायुधाः । सरथाः
सध्वजा वीरा हताः पार्थेन शेरते ॥ १७ ॥ विजिताः पुण्यकर्माणो

विशिष्टाभिजनश्रुताः । गताः शरीरैर्वसुधामूर्ज्जितैः कर्म्मभिर्द्दिवम्
॥ १८ ॥ अथार्ज्जुनं रथवरं त्वदीयाः समभिद्रवन् । नानाजन-
पदाध्यक्षाः सगणा जातमन्यवः ॥ १९ ॥ उह्यमाना रथाश्वेभैः
पत्तयश्च जिघांसवः । समाभ्यधावन्नस्यन्तो विविधं क्षिप्रमायुधम्
॥ २० ॥ तदायुधमहावर्षं मुक्तं योधमहाम्बुदैः । व्यधमन्निशि-
तैर्ब्बाणैः क्षिप्रमर्ज्जुनमारुतः ॥ २१ ॥ साश्वपत्तिद्विपरथं महा-
शस्त्रौघमप्लवम् । ददृशुः सन्तितीर्षन्तं महाशस्त्रास्त्रसेतुना ॥२२॥
अथाब्रवीद्वासुदेवः पार्थं किं क्रीड़सेऽनघ । संशप्तकान् प्रमथ्यैतान्
ततः कर्णवधे त्वर ॥ २३ ॥ तथेत्युक्त्वार्ज्जुनः कृष्णं शिष्टान् सं-
शप्तकांस्तदा । आक्षिप्य शस्त्रेण बलात् दैत्यानिन्द्र इवावधीत् ॥२४॥
आददत् सन्दधन्निषून् दृष्टः कैश्चिद्रणेऽर्ज्जुनः । विमुञ्चन् वा शरान्
शीघ्रं दृश्यतेऽवहितैरपि ॥ २५ ॥ आश्चर्य्यमिति गोविन्दः सम-
मन्यत भारत । हंसांशुगौरास्ते सेनां हंसाः सर इवाविशन् ॥२६॥
ततः संग्रामभूमिन्तु वर्त्तमाने जनक्षये । अवेक्षमाणो गोविन्दः
सव्यसाचिनमब्रवीत् ॥ २७ ॥ एष पार्थ महारौद्रो वर्त्तते भरत
क्षयः । पृथिव्यां पार्थिवानां वै दुर्य्योधनकृते महान् ॥ २८ ॥
पश्य भारत चापानि रुक्मपृष्ठानि धन्विनाम् । महताञ्चापविद्धानि
कलापानिषुधींस्तथा ॥ २९ ॥ जातरूपमयैः पुङ्खैः शरांश्चानत-
पर्व्वणः । तैलधौतांश्च नाराचान् निर्म्मुक्तानिव पन्नगान् ॥ ३० ॥
आकीर्णांस्तोमरांश्चापि विचित्रान् हेमभूषितान् । वर्म्माणि चाप-
विद्धानि रुक्मपृष्ठानि भारत ॥ ३१ ॥ सुवर्णविकृतान् प्रासान्
शक्तीः कनकभूषिताः । जाम्बूनदमयैः पट्टैर्बद्धाश्च विपुला गदाः
॥ ३२ ॥ जातरूपमयीश्चर्ष्टीः पट्टिशान् हेमभूषितान् । दण्डैः
कनकचित्रैश्च विप्रविद्धान् परश्वधान् ॥ ३३ ॥ परिघान् भिन्दि-
पालांश्च भुशुण्डीः कणयानपि । अयःकुन्तांश्च पतितान् मुषलानि
गुरूणि च ॥ ३४ ॥ नानाविधानि शस्त्राणि प्रगृह्य जयगृद्धिनः ।

जीवन्त इव दृश्यन्ते गतसत्त्वास्तरखिनः ॥ ३५ ॥ गदाविमर्दितै-र्गात्रैर्मुषलैर्भिन्नमस्तकान्। गजवाजिरथैः क्षुण्णान् पश्य योधान् सहस्रशः ॥३६॥ मनुष्यगजवाजीनां शरशक्त्यृष्टितोमरैः। निस्त्रिंशैः पट्टिशैः प्रासैर्नखरैर्लगुडैरपि॥ ३७ ॥ शरीरैर्बहुधाच्छिन्नैः शोणितौघपरिप्लुतैः। गतासुभिरमित्रघ्न संवृता रणभूमयः ॥३८॥ बाहुभिश्चन्दनादिग्धैः साङ्गदैः शुभलक्षणैः। सतलत्रैः सकेयूरै-र्भाति भारत मेदिनी ॥ ३९ ॥ साङ्गुलित्रैर्भुजाग्रैश्च विप्रविद्धै-रलंकृतैः। हस्तिहस्तोपमैश्छिन्नैरूरुभिश्च तरखिनाम्। बद्ध-चूडामणिवरैः शिरोभिश्च सकुण्डलैः ॥ ४० ॥ रथांश्च बहुधा भग्नान् हेमकिङ्किणिनः शुभान्। अश्वांश्च बहुधा पश्य शोणितेन परिप्लुतान्। अनुकर्षानुपासङ्गान् पताका विविधान् ध्वजान् ॥४१॥ योधानाञ्च महासङ्खान् पाण्डरांश्च प्रकीर्णकान्। निरस्तजिह्वा-न्मातङ्गान् शयानान् पर्वतोपमान् ॥ ४२ ॥ वैजयन्तीविचित्रांश्च हतांश्च गजयोधिनः। वारणानां परिस्तोमान् सयुक्तानेककम्बलान् ॥ ४३ ॥ विपाटिता विचित्राश्च रूपचित्राः कुथास्तथा। भिन्नाश्च बहुधा घण्टाः पतद्भिश्चूर्णिता गजैः ॥ ४४ ॥ वैदूर्यमणिदण्डांश्च पतितांश्चाङ्कुशान् भुवि। अश्वानाञ्च युगापीड़ान् रत्नचित्रानुर-श्छदान्। बद्धाः सादिध्वजाग्रेषु सुवर्णविकृताः कुशाः ॥ ४५ ॥ विचित्रान् मणिचित्रांश्च जातरूपपरिष्कृतान्। अश्वास्तरपरि-स्तोमान् राङ्कवान् पतितान् भुवि ॥ ४६ ॥ चूड़ामणीन् नरेन्द्राणां विचित्राः काञ्चनस्रजः। छत्राणि चापविद्धानि चामरव्यजनानि च ॥ ४७ ॥ चन्द्रनक्षत्रभासैश्च वदनैश्चारुकुण्डलैः। कॢप्तश्मश्रुभिरा-कीर्णां पूर्णचन्द्रनिभैर्महीम् ॥४८॥ कुमुदोत्पलपद्मानां षण्डैः फुल्लं यथा सरः। तथा मही स्तृता वक्त्रैः कुमुदोत्पलसन्निभैः ॥ ४९ ॥ तारागणविचित्रस्य निर्म्मलेन्दुद्युतित्विषः। पश्येमां नभसस्तुल्यां शरन्नक्षत्रमालिनीम् ॥५०॥ एतत्त्वय्येवानुरूपं कर्मार्जुन महाहवे।

दिवि वा देवराजस्य त्वया वत् कृतमद्य वै ॥५१॥ एवं तां हर्षयन्
कृष्णो युद्धभूमिं किरीटिने । गच्छन्नेवाशृणोत् शब्दं दुर्य्योधनबले
महत् ॥ ५२ ॥ शङ्खदुन्दुभिनिर्घोषं भेरीपटहनिस्वनम् । रथाश्व-
गजनादांश्च शस्त्रशब्दांश्च दारुणान् ॥ ५३ ॥ प्रविश्य तद्बलं कृष्ण-
स्तुरगैर्वातवेगितैः । पाण्ड्येनाभ्यर्द्दितं सैन्यं त्वदीयं वीक्ष्य विस्मितः
॥ ५४ ॥ स हि नानाविधैर्बाणैरिष्वस्त्रप्रवरो युधि । न्यहन-
द्दिषतां पूगान् गतासूनन्तको यथा ॥ ५५ ॥ गजवाजिमनुष्याणां
शरीराणि शितैः शरैः । भित्त्वा प्रहरतां श्रेष्ठो विदेहासूनपा-
तयत् ॥ ५६ ॥ शत्रुप्रवीरैरस्तानि नानाशस्त्राणि सायकैः ।
छित्त्वा तानवधीत् शत्रून् पाण्ड्यः शक्र इवासुरान् ॥ ५७ ॥

इति कर्णपर्व्वणि सङ्कुलयुद्धे एकोनविंशोऽध्यायः ॥ १९ ॥

---

धृतराष्ट्र उवाच । प्रोक्तस्त्वया पूर्व्वमेव प्रवीरो लोकविश्रुतः ।
न त्वस्य कर्म्म संग्रामे त्वया सञ्जय कीर्त्तितम् ॥ १ ॥ तस्य विस्त-
रशो ब्रूहि प्रवीरस्याद्य विक्रमम् । शिक्षां प्रभावं वीर्य्यञ्च प्रमाणं
दर्पमेव च ॥ २ ॥

सञ्जय उवाच । भीष्मद्रोणकृपद्रौणिकर्णार्ज्जुनजनार्द्दनान् ।
समाप्तविद्यान् धनुषि श्रेष्ठान् यान्मन्यसे रथान् ॥ ३ ॥ यो ह्याक्षि-
पति वीर्य्येण सर्व्वानेतानमहारथान् । न मेने चात्मना तुल्यं कञ्चि-
देव जनेश्वरम् ॥ ४ ॥ तुल्यतां कर्णभीष्माभ्यामात्मनो यो न
मृष्यते । वासुदेवार्ज्जुनाभ्याञ्च न्यूनतां नैच्छदात्मनि ॥ ५ ॥ स
पाण्ड्यो नृपतिश्रेष्ठः सर्व्वशस्त्रभृताम्वरः । कर्णस्यानीकमहनत्
पराभूत इवान्तकः ॥ ६ ॥ तदुदीर्णरथाश्वञ्च पत्तिप्रवरसङ्कुलम् ।
कुलालचक्रवत् भ्रान्तं पाण्ड्येनाभ्याहतं बलम् ॥ ७ ॥ व्यश्वसूत-
ध्वजरथं विप्रविद्धायुधद्विपम् । सम्यगस्तैः शरैः पाण्ड्यो वायु-

मेघानिवाद्रिषत् ॥ ८ ॥ द्विरदान् द्विरदारोहान् विपताकायुध-
ध्वजान् । सपादरक्षानहनत् वज्रेणाद्रीनिवाद्रिहा ॥ ९ ॥ स
शक्तिप्रासतूणीरानश्वारोहान् हयानपि । पुलिन्दखशबाह्लीका-
न्निषादान्ध्रकतङ्गणान् ॥ १० ॥ दाक्षिणात्यांश्च भोजांश्च शूरान्
संग्रामकर्कशान् । विशस्त्रकवचान् बाणैः कृत्वा चैवाकरोद्गतासून्
॥ ११ ॥ चतुरङ्गबलं बाणैर्निघ्नन्तं पाण्ड्यमाहवे । दृष्ट्वा द्रौणि-
रसंभ्रान्तमसम्भ्रान्तस्ततोऽभ्ययात् ॥ १२ ॥ आभाष्य चैनं मधुर-
मातृत्यन्तमभीतवत् । प्राह प्रहरतां श्रेष्ठः स्मितपूर्वं समाह्वयन्
॥ १३ ॥ राजन् कमलपत्राक्ष विशिष्टाभिजनश्रुत । वज्रसंहनन-
प्रख्य प्रख्यातबलपौरुष ॥ १४ ॥ मुष्टिश्लिष्टायतज्यश्च व्यायताभ्यां
दधद्धनुः । दोर्भ्यां विस्फारयन् भासि महाजलदवत् स्वनम् ॥१५॥
शरवर्षैर्महावेगैरमित्रानभिवर्षतः । मदन्यं नानुपश्यामि प्रतिवीरं
तवाहवे ॥ १६ ॥ रथद्विरदपत्त्यश्वानेकः प्रमथसे बहून् । मृग-
सङ्घानिवारण्ये विभीर्भीमबलो हरिः ॥ १७ ॥ महता रथघोषेण
दिवं भूमिञ्च नादयन् । वर्षान्ते सस्यहा मेघो भासि ह्रादीव
पार्थिव ॥ १८ ॥ संस्पृशानः शरांस्तीक्ष्णांस्तूणादाशीविषोपमान् ।
मयैवैकेन युध्यस्व त्र्यम्बकेनान्धको यथा ॥ १९ ॥ एवमुक्तस्तथे-
त्युक्त्वा प्रहरेति च ताडितः । कर्णिना द्रोणतनयं विव्याध मलय-
ध्वजः ॥ २० ॥ मर्मभेदिभिरत्युग्रैर्बाणैरग्निशिखोपमैः । स्मय-
न्नभ्यहनद्द्रौणिः पाण्ड्यमाचार्यसत्तमः ॥ २१ ॥ ततोऽपरान् सुती-
क्ष्णाग्रान् नाराचान्मर्मभेदिनः । गत्या दशम्या संयुक्तानश्वत्थामा-
प्यवासृजत् ॥ २२ ॥ तान् शराणाच्छिनत् पाण्ड्यो नवभिर्निशितैः
शरैः । चतुर्भिरार्दयच्चाश्वानाशु ते व्यसवोऽभवन् ॥ २३ ॥ अथ
द्रोणसुतस्येषूंस्तांश्छित्त्वा निशितैः शरैः । धनुर्ज्यां विततां पाण्ड्य-
श्चिच्छेदादित्यतेजसः ॥ २४ ॥ विज्यं धनुरथाधिज्यं कृत्वा द्रौणि-
रमित्रहा । प्रेक्ष्य चाशु रथे युक्तान् नरैरन्यान् हयोत्तमान् ॥२५॥

शतः शरसहस्राणि प्रेषयामास वै द्विजः । दुःखसंवाधमाकाश-
मकरोद्दिश एव च ॥ २६ ॥ ततस्तानस्यतः सर्वान् द्रौणेर्वाणा-
न्महात्मनः । जानानोऽप्यसयान् पाण्ड्योऽघातयत् पुरुषर्षभ ॥२७॥
प्रयुक्तांस्तान् प्रयत्नेन छित्त्वा द्रौणेरिषूनरिः । चक्ररक्षौ रणे
तस्य प्राणदच्छिशितैः शरैः ॥ २८ ॥ अथारेर्लाघवं दृष्ट्वा मण्डली-
कृतकार्मुकः । प्रास्यद्द्रौणिस्ततो वाणान् वृष्टिं पूषानुजो यथा
॥ २९ ॥ अष्टावष्टगवान्यूहुः शकटानि यदायुधम् । अह्नस्तदष्ट-
भागेन द्रौणिश्चिक्षेप मारिष ॥ ३० ॥ तदन्तकमिव क्रुद्धमन्तक-
स्यान्तकोपमम् । ये ये ददृशिरे तत्र विसंज्ञाः प्रायशोऽभवन् ।
॥ ३१ ॥ पर्ज्जन्य इव घर्मान्ते वृष्ट्या साद्रिद्रुमां महीम् । आचार्य्य-
पुत्रस्तां सेनां वाणवृष्ट्याभ्यवीवृषत् ॥ ३२ ॥ द्रौणिपर्ज्जन्यमुक्तां
तां वाणवृष्टिं सुदुःसहाम् । वायव्यास्त्रेण सङ्क्षिप्य मुदा पाण्ड्या-
निलोऽनदत् ॥ ३३ ॥ तस्य नादतः केतुं चन्दनागुरुरूषितम् ।
मलयप्रतिमं द्रौणिश्छित्त्वाश्वांश्चतुरोऽहनत् ॥ ३४ ॥ सूतमेकेषुणा
हत्वा महाजलदनिस्वनम् । धनुश्छित्त्वार्द्धचन्द्रेण तिलशो व्यधम-
द्रथम् ॥ ३५ ॥ अस्त्रैरस्त्राणि संवार्य्य छित्त्वा सर्वायुधानि च ।
प्राप्तमप्यहितं द्रौणिर्न जघान रणेप्सया ॥ ३६ ॥ एतस्मिन्नन्तरे
कर्णो गजानीकमुपाद्रवत् । द्रावयामास स तदा पाण्डवानां मह-
द्बलम् ॥ ३७ ॥ विरथान्रथिनश्चक्रे गजानश्वांश्च भारत । योधान्
बहुभिरानर्च्छत् शरैः सन्नतपर्व्वभिः ॥ ३८ ॥ अथ द्रौणिमहेष्वासः
पाण्ड्यं शत्रुनिवर्हणम् । विरथं रथिनां श्रेष्ठं नाहनद्युद्धकाङ्क्षया
॥ ३९ ॥ हतेश्वरो दन्तिवरः सुकल्पितस्त्वराभिसृष्टः प्रतिशब्दगो
वली । तमाद्रवद्द्रौणिशराहतस्त्वरन् जवेन कृत्वा प्रतिहस्ति-
गर्ज्जितम् ॥ ४० ॥ समागतं वारणयुद्धकोविदो द्विपोत्तमं पर्वत-
सानुसन्निभम् । तमभ्यतिष्ठन्मलयध्वजस्त्वरन् यथाद्रिशृङ्गं हरि-
रुन्नदंस्तथा ॥ ४१ ॥ स तोमरं भास्कररश्मिवर्च्चसं वलास्त्रसर्गो-

समयन्नमन्युभिः। सकुञ्जं शीघ्रं परिपीड़यन् गजं गुरोः सुता-याद्रिपतीश्वरो नदन्॥ ४२॥ मणिप्रवेकोत्तमवज्रहाटकैरलं-कृतं चांशुकमाल्यमौक्तिकैः। हतो हतोऽसीत्यसकृन्मुदा नदन् पराभिनद्द्रौणिवराङ्गभूषणम्॥ ४३॥ तदर्कचन्द्रग्रहपावकत्विषं भृशाभिपातात् पतितं विचूर्णितम्। महेन्द्रवज्राभिहतं महास्वनं यथाद्रिशृङ्गं धरणीतले तथा॥ ४४॥ ततः प्रजज्वाल परेण मन्युना पदाहतो नागपतिर्यथा तथा। समाददे चान्तकदण्ड-सन्निभानिषूनमित्रान्तकरांश्चतुर्दश॥ ४५॥ द्विपस्य पादाग्रकरान् स पञ्चभिर्नृपस्य बाहू च शिरोऽथ च त्रिभिः। जघान षड्भिः षडृतुप्रभत्विषः स पाण्ड्यराजानुचरान्महारथान्॥ ४६॥ सुदीर्घ-वृत्तौ वरचन्दनोचितौ सुवर्णमुक्तामणिवज्रभूषणौ। भुजौ धरायां पतितौ नृपस्य तौ विचेष्टतुस्तार्क्ष्यहताविवोरगौ॥ ४७॥ शिरश्च तत् पूर्णशशिप्रभाननं सरोषताम्रायतनेत्रमुन्नसम्। क्षितावपि भ्राजति तत् सकुण्डलं विशाखयोर्मध्यगतः शशी यथा॥ ४८॥ स तु द्विपः पञ्चभिरुत्तमेषुभिः कृतः षडंशश्चतुरो नृपस्त्रिभिः। कृतो दशांशः कुशलेन युध्यता यथा हविस्तद्दशदैवतं तथा॥ ४९॥ स पादशो राक्षसभोजनान् बहून् प्रदाय पाण्ड्योऽश्वमनुष्यकुञ्जरान्। स्वधामिवाप्य ज्वलनः पितृप्रियस्ततः प्रशान्तः सलिल-प्रवाहितः॥ ५०॥ समाप्तविद्यन्तु गुरोः सुतं नृपः समाप्तकर्माण-मुपेत्य ते सुतः। सुहृद्वृतोऽत्यर्थमपूजयन्मुदा जिते बलौ विष्णु-मिवामरेश्वरः॥ ५१॥

इति कर्णपर्वणि पाण्ड्यवधे विंशतितमोऽध्यायः॥ २०॥

---

धृतराष्ट्र उवाच। पाण्ड्ये हते किमकरोदर्जुनो युधि सञ्जय। एकवीरेण कर्णेन द्राविलेषु परेषु च॥ १॥ समाप्तविद्यो बलवान

युक्तो वीरः स पाण्डवः। सर्व्वभूतेष्वनुज्ञातः शङ्करेण महात्मना
॥ २ ॥ तस्मान्महद्भयं तीव्रममित्रघ्नाद्धनञ्जयात्। स यत्तदा-
करोत् पार्थस्तन्ममाचक्ष्व सञ्जय ॥ ३ ॥

सञ्जय उवाच। हते पाण्ड्येऽर्ज्जुनं कृष्णस्त्वरन्नाह वचो
हितम्। पश्यामि नाहं राजानमपयातांश्च पाण्डवान् ॥ ४ ॥
निवृत्तैश्च पुनः पार्थैर्भग्नं शत्रुबलं महत्। अश्वत्थाम्नश्च सङ्कल्पा-
द्धताः कर्णेन सृञ्जयाः ॥ ५ ॥ तथाश्वरथनागानां कृतञ्च कदनं
महत्। सर्व्वमाख्यातवान् वीरो वासुदेवः किरीटिने ॥ ६ ॥
एतच्छ्रुत्वा च दृष्ट्वा च भ्रातुर्घोरं महद्भयम्। वाहयाश्वान् हृषी-
केश क्षिप्रमित्याह पाण्डवः ॥ ७ ॥ तत प्रायात् हृषीकेशो रथे
नाप्रतियोधिना। दारुणश्च पुनस्तत्र प्रादुरासीत् समागमः ॥ ८ ॥
ततः पुनः समाजग्मुरभीताः कुरुपाण्डवाः। भीमसेनमुखाः पार्थाः
सूतपुत्रमुखा वयम् ॥ ९ ॥ ततः प्रववृते भूयः संग्रामो राज-
सत्तम। कर्णस्य पाण्डवानाञ्च यमराष्ट्रविवर्द्धनः ॥ १० ॥ धनूंषि
वाणान् परिघानसितोमरपट्टिशान्। मुषलानि भुशुण्डीश्च स-
शक्त्यृष्टिपरश्वधान् ॥ ११ ॥ गदाः प्रासान् शितान् कुन्तान् भिन्दि-
पालांस्तथाङ्कुशान्। प्रगृह्य क्षिप्रमापेतुः परस्परजिघांसया ॥१२॥
वाणज्यातलशब्देन द्यां दिशः प्रदिशो वियत्। पृथिवीं नेमि-
घोषेण नादयन्तोऽभ्ययुः परान् ॥ १३ ॥ तेन शब्देन महता
संहृष्टाश्चक्रुराहवम्। वीरा वीरैर्महाघोरं कलहान्तं तितीर्षवः
॥ १४ ॥ ज्यातलत्रधनुःशब्दः कुञ्जराणाञ्च वृंहताम्। पादा-
तानाञ्च पततां नृणां नादो महानभूत् ॥ १५ ॥ वाणशब्दांश्च
विविधान् शूराणाञ्चाभिगर्ज्जताम्। श्रुत्वा तत्र भृशं त्रेसुः पेतु-
र्म्मम्लुश्च सैनिकाः ॥ १६ ॥ तेषां निनदताञ्चैव शस्त्रवर्षञ्च मुञ्चताम्।
बहूनाधिरथिर्वीरः प्रममाथेषुभिः परान् ॥ १७ ॥ पञ्च पञ्चाल-
वीराणां रथान् दश च पञ्च च। साश्वसूतध्वजान् कर्णः शरै-

निंन्ये यमक्षयम् ॥ १८ ॥ योधमुख्या महावीर्य्याः पाण्डूनां कम-
माहवे। शीघ्रास्त्रा दिवमावृत्य परिवव्रुः समन्ततः ॥ १९ ॥
ततः कर्णो द्विषत्सेनां शरवर्षैर्विलोड़यन्। विजगाहाण्डजा-
कीर्णां पद्मिनीमिव यूथपः ॥ २० ॥ द्विषन्मध्यमवस्कन्द्य राधेयो
धनुरुत्तमम्। विधुन्वानः शितैर्बाणैः शिरांस्युन्मथ्य पातयन् ॥२१॥
चर्मवर्माणि संछिन्नान्यपतन् भुवि देहिनाम्। विषेहुर्नास्य संस्पर्शं
द्वितीयस्य पतत्त्रिणः ॥ २२ ॥ वर्मदेहासुमथनैर्धनुषः प्रच्युतैः शरैः।
मौर्व्या तलत्रेऽभ्यहनत् कशया वाजिनो यथा ॥ २३ ॥ पाण्डु-
सृञ्जयपाञ्चालान् शरगोचरमागतान्। ममर्द्द तरसा कर्णः सिंहो
मृगगणानिव ॥ २४ ॥ ततः पाञ्चालराजश्च द्रौपदेयाश्च मारिष।
यमौ च युयुधानश्च सहिताः कर्णमभ्ययुः ॥ २५ ॥ तेषु व्यायच्छ-
मानेषु कुरुपाञ्चालपाण्डुषु। प्रियानसून् रणे त्यक्त्वा योधा जघ्नुः
परस्परम् ॥ २६ ॥ सुसन्नद्धाः कवचिनः सशिरस्त्राणभूषणाः।
गदाभिर्मुषलैश्चान्यैः परिघैश्च महाबलाः ॥ २७ ॥ समभ्यधावन्त
भृशं कालदण्डैरिवोद्यतैः। नर्द्दन्तश्चाह्वयन्तश्च प्रवल्गन्तश्च मारिष
॥ २८ ॥ ततो निजघ्नुरन्योऽन्यं पेतुश्चान्योऽन्यताड़िताः। वमन्तो
रुधिरं गात्रैर्विमस्तिष्केक्षणा युधि ॥ २९ ॥ दन्तपूर्णैः सरुधिरै-
र्वक्त्रैर्दाड़िमसन्निभैः। जीवन्त इव चाप्येके तस्थुः शस्त्रोप-
वृंहिताः ॥ ३० ॥ परश्वधैश्चाप्यपरे पट्टिशैरसिभिस्तथा। शक्ति-
भिर्भिन्दिपालैश्च नखरप्रासतोमरैः ॥ ३१ ॥ ततक्षुश्चिच्छिदुश्चान्ये
विभिदुश्चिक्षिपुस्तथा। सञ्चकर्त्तुश्च जघ्नुश्च क्रुद्धा रणमहार्णवे ॥३२॥
पेतुरन्योन्यनिहता व्यसवो रुधिरोक्षिताः। क्षरन्तः सुरसं रक्तं
प्रकृत्ताश्चन्दना इव ॥ ३३ ॥ रथै रथा विनिहता हस्तिभिश्चापि
हस्तिनः। नरैर्नरा हताः पेतुरश्वाश्चाश्वैः सहस्रशः ॥ ३४ ॥
ध्वजाः शिरांसि छत्राणि द्विपहस्ता नृणां भुजाः। क्षुरैर्भल्लार्द्ध-
चन्द्रैश्च छिन्नाः पेतुर्महीतले ॥ ३५ ॥ नरांश्च नागान् सरथान्

ह्वयान् मन्दुराहवे। अश्वारोहैर्हताः शूराश्छिन्नहस्ताश्च दन्तिनः ॥ ३६ ॥ सपताका ध्वजाः पेतुर्विशीर्णा इव पर्वताः। पत्तिभिश्च समाप्लुत्य द्विरदाः स्यन्दनास्तथा ॥ ३७ ॥ हतास्च हन्यमानाश्च पतिताश्चैव सर्वशः। अश्वारोहाः समासाद्य त्वरिताः पत्तिभिर्हताः ॥ ३८ ॥ सादिभिः पत्तिसङ्घाश्च निहता युधि शेरते। मृदिता-नीव पद्मानि प्रम्लाना इव च स्रजः ॥ ३९ ॥ हतानां वदनान्यासन् गात्राणि च महाहवे। रूपाण्यत्यर्थकान्तानि द्विरदाश्वनृणां नृप। समुन्नानीव वस्त्राणि ययुर्दुर्दृशतां पराम् ॥ ४० ॥

इति कर्णपर्वणि सङ्कुलयुद्धे एकविंशोऽध्यायः ॥ २१ ॥

---

सञ्जय उवाच। हस्तिभिस्तु महामात्रास्तव पुत्रेण चोदिताः। धृष्टद्युम्नं जिघांसन्तः क्रुद्धाः पार्षतमभ्ययुः ॥ १ ॥ प्राच्याश्च दाक्षिणात्याश्च प्रवरा गजयोधिनः। अङ्गा वङ्गाश्च पुण्ड्राश्च मागधास्ताम्रलिप्तकाः ॥ २ ॥ मेकलाः कोशला मद्रा दशार्णा निषधास्तथा। गजयुद्धेषु कुशलाः कलिङ्गैः सह भारत ॥ ३ ॥ शरतोमरनाराचैर्वृष्टिमन्त इवाम्बुदाः। सिषिचुस्ते ततः सर्वे पाञ्चालबलमाहवे ॥ ४ ॥ तान् सिमर्द्दयिषून् नागान् पार्ष्ण्यङ्गुष्ठाङ्कुशैर्भृशम्। चोदितान् पार्षतो बाणैर्नाराचैरभ्यवीवृषत् ॥ ५ ॥ एकैकं दशभिः षड्भिरष्टभिरपि भारत। द्विरदानभिविव्याध शितैर्गिरिनिभान् शरैः ॥ ६ ॥ प्रच्छाद्यमानं द्विरदैर्मेघैरिव दिवाकरम्। प्रययुः पाण्डुपाञ्चाला नदन्तो निशितायुधाः ॥ ७ ॥ तान्नागानभिवर्षन्तो ज्यातलनीतलनादितैः। वीरनृत्यं प्रनृत्यन्तस्तलतालप्रणादितैः ॥ ८ ॥ नकुलः सहदेवश्च द्रौपदेयाः प्रभद्रकाः। सात्यकिश्च शिखण्डी च चेकितानश्च वीर्य्यवान्। समन्तात् सिषिचुर्वीरा मेघास्तोयैरिवाचलान् ॥ ९ ॥ ते म्लेच्छैः प्रेषिता

नागा नरानश्वांश्च यानेपि । हस्तैराक्षिप्य ममृदुः पद्भिश्चाप्यति मन्यवः ॥ १० ॥ विभिदुश्च विषाणाग्रैः समाक्षिप्य च चिक्षिपुः विषाणलग्नांश्चाप्यन्ये परिपेतुर्विभीषणाः ॥ ११ ॥ प्रमुखे वर्त्त मानन्तु द्विपं वङ्गस्य सात्यकिः । नाराचेनोग्रवेगेन भित्त्वा मर्म्म ण्यपातयत् ॥ १२ ॥ तस्यावर्जितकायस्य द्विरदादुत्पतिष्यतः नाराचेनाहनद्वक्षः सात्यकिः सोऽपतद्भुवि ॥ १३ ॥ पुण्ड्रस्यापततो नागं चलन्तमिव पर्वतम् । सहदेवः प्रयत्नास्तैर्नाराचैरहनत्त्रिभि ॥ १४ ॥ विपताकं वियन्तारं विवर्मध्वजजीवितम् । तं कृत्वा द्विरदं भूयः सहदेवोऽङ्गमभ्ययात् ॥ १५ ॥ सहदेवन्तु नकुलो वारयित्वाङ्गमार्दयत् । नाराचैर्यमदण्डाभैस्त्रिभिर्नागं शतेन च ॥ १६ ॥ दिवाकरकरप्रख्यानङ्गश्चिक्षेप तोमरान् । नकुलाय शता न्यष्टौ त्रिधैकैकन्तु सोऽच्छिनत् ॥ १७ ॥ तथार्द्धचन्द्रेण शिरस्तस्य चिच्छेद पाण्डवः । स पपात हतो म्लेच्छस्तेनैव सह दन्तिना ॥ १८ ॥ अथाङ्गपुत्रेण निहते हस्तिशिक्षाविशारदे । अङ्गाः क्रुद्धा महामात्रा नागैर्नकुलमभ्ययुः ॥ १९ ॥ चलत्पताकैः सुमुखै र्हेमकक्षातनुच्छदैः । मिमर्द्दिषन्तस्त्वरिताः प्रदीप्तैरिव पर्वतैः ॥२०॥ मेकलोत्कलकालिङ्गा निषधास्ताम्रलिप्तकाः । शरतोमरवर्षाणि विमुञ्चन्तो जिघांसवः ॥ २१ ॥ तैश्छाद्यमानं नकुलं दिवाकर- मिवाम्बुदैः । परिपेतुः सुसंरब्धाः पाण्डुपाञ्चालसोमकाः ॥ २२ ॥ ततस्तदभवद्युद्धं रथिनां हस्तिभिः सह । सृजतां शरवर्षाणि तोमरांश्च सहस्रशः ॥ २३ ॥ नागानां प्रास्फुटन् कुम्भा मर्म्माणि विविधानि च । दन्ताश्चैवातिविद्धानां नाराचैर्भूषणानि च ॥२४॥ तेषामष्टौ महानागांश्चतुःषष्ट्या सुतेजनैः । सहदेवो जघानाशु तेऽपतन् सह सादिभिः ॥ २५ ॥ अञ्जोगतिभिरायम्य प्रयत्नाद्धनु- रुत्तमम् । नाराचैरहनन्नागान्नकुलः कुलनन्दनः ॥ २६ ॥ ततः पाञ्चाल्यशैनेयौ द्रौपदेयाः प्रभद्रकाः । शिखण्डी च महानागान्

शिशिरुः शरवृष्टिभिः ॥ २७ ॥ ते पाण्डुयोधाम्बुधरैः शत्रुद्विरद-
पर्वताः । बाणवर्षैर्हताः पेतुर्वज्रवर्षैरिवाचलाः ॥ २८ ॥ एवं
हत्वा तव गजांस्ते पाण्डुरथकुञ्जराः । द्रुतां सेनामवैक्षन्त भिन्न-
कूलामिवापगाम् ॥ २९ ॥ तां ते सेनां समालोड्य पाण्डुपुत्रस्य
सैनिकाः । विक्षोभयित्वा च पुनः कर्णं समभिदुद्रुवुः ॥ ३० ॥

इति कर्णपर्वणि सङ्कुलयुद्धे द्वाविंशोऽध्यायः ॥ २२ ॥

---

सञ्जय उवाच । सहदेवं तथाक्रुद्धं दहन्तं तव वाहिनीम् ।
दुःशासनो महाराज भ्राता भ्रातरमभ्ययात् ॥ १ ॥ तौ समेतौ
महायुद्धे दृष्ट्वा तत्र महारथाः । सिंहनादरवांश्चक्रुर्वासांस्या-
दुधुवुश्च ह ॥ २ ॥ ततो भारत क्रुद्धेन तव पुत्रेण धन्विना ।
पाण्डुपुत्रस्त्रिभिर्बाणैर्वक्षस्यभिहतो बली ॥ ३ ॥ सहदेवस्ततो
राजन् नाराचेन तवात्मजम् । विद्ध्वा विव्याध सप्तत्या सारथिञ्च
त्रिभिः शरैः ॥ ४ ॥ दुःशासनस्तत्तश्चापं छित्त्वा राजन् महाहवे ।
सहदेवं त्रिसप्तत्या बाह्वोरुरसि चार्पयत् ॥ ५ ॥ सहदेवस्तु
संक्रुद्धः खड्गं गृह्य महाहवे । आविध्य प्रासृजत्तूर्णं तव पुत्र-
रथं प्रति ॥ ६ ॥ समार्गणगुणं चापं छित्त्वा तस्य महानसिः ।
निपपात ततो भूमौ च्युतः सर्पं इवाम्बरात् ॥ ७ ॥ अथान्यद्धनु-
रादाय सहदेवः प्रतापवान् । दुःशासनाय चिक्षेप बाणमन्तकरं
ततः ॥ ८ ॥ तमापतन्तं विशिखं यमदण्डोपमत्विषम् । खड्गेन
शितधारेण द्विधा चिच्छेद कौरवः ॥ ९ ॥ ततस्तं निशितं खड्ग-
माविध्य युधि सत्वरः । धनुश्चान्यत् समादाय शरं जग्राह वीर्य्य-
वान् ॥ १० ॥ तमापतन्तं सहसा निस्त्रिंशं निशितैः शरैः ।
पातयामास समरे सहदेवो हसन्निव ॥ ११ ॥ ततो बाणांश्चतुः-
षष्टिं तव पुत्रो महारणे । सहदेवरथे तूर्णं पातयामास भारत

॥ १२ ॥ तान् शरान् समरे राजन् वेगेनापततो बहून् । एकैकं पञ्चभिर्बाणैः सहदेवो न्यकृन्तत ॥ १३ ॥ स निवार्य महाबाणां-स्तव पुत्रेण प्रेषितान् । अथास्मै सुबहून् बाणान् प्रेषयामास संयुगे ॥ १४ ॥ तान् बाणांस्तव पुत्रोऽपि छित्त्वैकैकं त्रिभिः शरैः । ननाद सुमहानादं नादयानो वसुन्धराम् ॥ १५ ॥ ततो दुःशा-सनो राजन् विद्ध्वा पाण्डुसुतं रणे । सारथिं नवभिर्बाणैर्माद्रेयस्य समार्पयत् ॥ १६ ॥ ततः क्रुद्धो महाराज सहदेवः प्रतापवान् । समाधत्त शरं घोरं मृत्युकालान्तकोपमम् । विकृष्य बलवच्चापं तव पुत्राय सोऽसृजत् ॥ १७ ॥ स तं निर्भिद्य वेगेन भित्त्वा च कवचं महत् । प्राविशद्धरणीं राजन् वल्मीकमिव पन्नगाः । ततः स मुमुहे राजंस्तव पुत्रो महारथः ॥ १८ ॥ मूढञ्चैनं समालोक्य सारथिस्त्वरितो रथम् । अपोवाह भृशं त्रस्तो बध्यमानः शितैः शरैः ॥ १९ ॥ पराजित्य रणे तन्तु कौरव्यं पाण्डुनन्दनः । दुर्यो-धनबलं दृष्ट्वा प्रममाथ समन्ततः ॥ २० ॥ पिपीलिकपुटं राजन् यथा मृद्नन्नरो रुषा । तथा सा कौरवी सेना मृदिता तेन भारत ॥ २१ ॥

इति कर्णपर्वणि सहदेवदुःशासनयुद्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

---

सञ्जय उवाच । नकुलं रभसं युद्धे द्रावयन्तं वरूथिनीम् । कर्णो वैकर्त्तनो राजन् वारयामास वै रुषा ॥ १ ॥ नकुलस्तु ततः कर्णं प्रहसन्निदमब्रवीत् । चिरस्य बत दृष्टोऽहं दैवतैः सौम्यचक्षुषा ॥ २ ॥ यस्य मे त्वं रणे पाप चक्षुर्विषयमागतः । त्वं हि मूलमनर्थानां वैरस्य कलहस्य च ॥ ३ ॥ त्वद्दोषात् कुरवः क्षीणाः समासाद्य परस्परम् । त्वामद्य समरे हत्वा कृतकृत्योऽस्मि विज्वरः ॥ ४ ॥ एवमुक्तः प्रत्युवाच नकुलं सूतनन्दनः । सदृशं

राजपुत्रस्य धन्विनश्च विशेषतः ॥ ५ ॥ प्रहरस्व च मे वीर पश्याम-
स्तव पौरुषम् । कर्म्म कृत्वा रणे शूर ततः कत्थितुमर्हसि ॥ ६ ॥
अनुक्त्वा समरे तात शूरा युध्यन्ति शक्तितः । स युध्यस्व मया
शक्त्या हनिष्ये दर्पमेव ते ॥ ७ ॥ इत्युक्त्वा प्राहरत्तूर्णं पाण्डुपुत्राय
सूतजः । विव्याध चैनं समरे त्रिसप्तत्या शिलीमुखैः ॥ ८ ॥
नकुलस्तु ततो विद्धः सूतपुत्रेण भारत । अशीत्याशीविषप्रख्यैः
सूतपुत्रमविध्यत ॥ ९ ॥ तस्य कर्णो धनुश्छित्त्वा स्वर्णपुङ्खैः शिला-
शितैः । त्रिंशता परमेष्वासः शरैः पाण्डवमार्द्दयत ॥ १० ॥ ते
तस्य कवचं भित्त्वा पपुः शोणितमाहवे । आशीविषा यथा नागा
भित्त्वा गां सलिलं पपुः ॥ ११ ॥ अथान्यद्धनुरादाय हेमपृष्ठं
दुरासदम् । कर्णं विव्याध विंशत्या सारथिञ्च त्रिभिः शरैः ॥१२॥
ततः क्रुद्धो महाराज नकुलः परवीरहा । क्षुरप्रेण सुतीक्ष्णेन
कर्णस्य धनुराच्छिनत् ॥ १३ ॥ अथैनं छिन्नधन्वानं सायकानां
शतैस्त्रिभिः । आजघ्ने प्रहसन् वीरः सर्व्वलोकमहारथम् ॥ १४ ॥
कर्णमभ्यर्द्दितं दृष्ट्वा पाण्डुपुत्रेण मारिष । विस्मयं परमं जग्मू
रथिनः सह दैवतैः ॥ १५ ॥ अथान्यद्धनुरादाय कर्णो वैकर्त्तन-
स्तदा । नकुलं पञ्चभिर्वाणैर्जत्रुदेशे समार्पयत् ॥ १६ ॥ तत्रस्थै-
रथ वाणैस्तैर्माद्रीपुत्रो व्यशोभत । स्वरश्मिभिरिवादित्यो भुवने
विसृजन् प्रभाम् ॥ १७ ॥ नकुलस्तु ततः कर्णं विद्ध्वा सप्तभि-
राशुगैः । अथास्य धनुषः कोटिं पुनश्चिच्छेद मारिष ॥ १८ ॥
सोऽन्यत् कार्म्मुकमादाय समरे वेगवत्तरम् । नकुलस्य ततो वाणैः
समन्तादारयद्दिशः ॥ १९ ॥ संछाद्यमानः सहसा कर्णचापच्युतैः
शरैः । चिच्छेद स शरांस्तूर्णं शरैरेव महारथः ॥ २० ॥ ततो
वाणमयं जालं विततं व्योम्नि दृश्यते । खद्योतानामिव व्रातैः
संपतद्भिर्यथा नभः ॥ २१ ॥ तैर्विमुक्तैः शरशतैश्छादितं गगनं
तदा । शलभानां यथा व्रातैस्तद्वदासीद्विशाम्पते ॥ २२ ॥ ते शरा

हेमविकृताः सम्पतन्तो मुहुर्मुहुः। श्रेणीकृता व्यकाशन्त क्रौञ्चाः श्रेणी कृता इव ॥ २३ ॥ बाणजालावृते व्योम्नि छादिते च दिवाकरे। न स्म सम्पतते भूम्यां किञ्चिदप्यन्तरीक्षगम् ॥ २४ ॥ निरुद्धे तत्र मार्गे च शरसङ्घैः समन्ततः। व्यरोचतां महात्मानौ कालसूर्याविवोदितौ ॥ २५ ॥ कर्णचापच्युतैर्बाणैर्वध्यमानास्तु सोमकाः। अवालीयन्त राजेन्द्र वेदनार्त्ता भृशार्दिताः ॥ २६ ॥ नकुलस्य तथा बाणैर्हन्यमाना चमूस्तव। व्यशीर्य्यत दिशो राजन् वाततुन्ना इवाम्बुदाः ॥ २८ ॥ ते सेने हन्यमाने तु ताभ्यां दिव्यैर्महाशरैः। शरपातमपक्रम्य तस्थतुः प्रेक्षिके इव ॥ २८ ॥ प्रोत्सारिते जने तस्मिन् कर्णपाण्डवयोः शरैः। अविध्येतां महात्मानावन्योऽन्यं शरवृष्टिभिः ॥ २९ ॥ विदर्शयन्तौ दिव्यानि शस्त्राणि रणमूर्द्धनि। छादयन्तौ च सहसा परस्परवधैषिणौ ॥ ३० ॥ नकुलेन शरा मुक्ताः कङ्कबर्हिणवाससः। सूतपुत्रमवच्छाद्य व्यतिष्ठन्त इवाम्बरे ॥ ३१ ॥ तथैव सूतपुत्रेण प्रेषिताः परमाहवे। पाण्डुपुत्रमवच्छाद्य व्यतिष्ठन्ताम्बरे शराः ॥ ३२ ॥ शरवेश्मप्रविष्टौ तौ ददृशाते न कैश्चन। सूर्य्याचन्द्रमसौ राजंश्छाद्यमानौ घनैरिव ॥ ३३ ॥ ततः क्रुद्धो रणे [illegible] कृत्वा घोरतरं वपुः। पाण्डवं छादयामास समन्ताच्छरवृष्टिभिः ॥३४॥ सोऽतिच्छन्नो महाराज सूतपुत्रेण पाण्डवः। न चकार व्यथां राजन् भास्करो जलदैर्यथा ॥ ३५ ॥ ततः प्रहस्याधिरथिः शरजालानि मारिष। प्रेषयामास समरे शतशोऽथ सहस्रशः ॥३६॥ एकच्छायमभूत् सर्वं तस्य बाणैर्महात्मनः। अभ्रच्छायेव सञ्जज्ञे सम्पतद्भिः शरोत्तमैः ॥ ३७ ॥ ततः कर्णो महाराज धनुश्छित्त्वा महात्मनः। सारथिं पातयामास रथनीडाद्धसन्निव ॥ ३८ ॥ ततोऽश्वांश्चतुरश्चास्य चतुर्भिर्निशितैः शरैः। यमस्य भवनं तूर्णं प्रेषयामास भारत ॥ ३९ ॥ अथास्य तं रथं दिव्यं तिलशो व्यध-

मच्छरैः। पताकां चक्ररक्षांश्च गदां खड्गञ्च मारिष। शत-चन्द्रञ्च तच्चर्म सर्व्वोपकरणानि च ॥ ४० ॥ हताश्वो विरथश्चैव विवर्मा च विशाम्पते। अवतीर्य्य रथात्तूर्णं परिघं गृह्य विष्ठितः ॥ ४१ ॥ तमुद्यतं महाघोरं परिघं तस्य सूतजः। व्यहनत् सायकै राजन् सुतीक्ष्णैर्भारसाधनैः ॥ ४२ ॥ व्यायुधश्चैवमालक्ष्य शरैः सन्नतपर्व्वभिः। अर्द्दयद्बहुभिः कर्णो न चैनं समपीड़यत् ॥४३॥ स हन्यमानः समरे कृतास्त्रेण बलीयसा। प्राद्रवत् सहसा राजन् नकुलो व्याकुलेन्द्रियः ॥ ४४ ॥ तमनुद्रुत्य राधेयः प्रहसन् वै पुनः पुनः। सज्यमस्य धनुः कण्ठे व्यपासृजत भारत ॥ ४५ ॥ ततः स शुशुभे राजन् कण्ठासक्तमहद्धनुः। परिवेशमनुप्राप्तो यथा स्यादम्बरे चन्द्रमाः। यथैव चासितो मेघः शक्रचापेन शोभितः ॥ ४६ ॥ तमब्रवीत्ततः कर्णो व्यर्थं व्याहृतवानसि। वदेदानीं पुनर्हृष्टो वध्यमानः पुनः पुनः ॥ ४७ ॥ मा योत्सीः कुरुभिः सार्द्धं बलवद्भिश्च पाण्डव। सदृशैस्तात युध्यस्व व्रीड़ां मा कुरु पाण्डव ॥ ४८ ॥ गृहं वा गच्छ माद्रेय यत्र वा कृष्ण-फाल्गुनौ। एवमुक्त्वा महाराज व्यसर्ज्जयत तं तदा ॥ ४९ ॥ वधप्राप्तन्तु तं शूरो नाहनद्धर्मवित्तदा। स्मृत्वा कुन्त्या वचो राजं-स्तत एनं व्यसर्ज्जयत् ॥ ५० ॥ विसृष्टः पाण्डवो राजन् सूतपुत्रेण धन्विना। व्रीड़न्निव जगामाथ युधिष्ठिररथं प्रति ॥ ५१ ॥ आरुरोह रथञ्चापि सूतपुत्रप्रतापितः। निश्वसन् दुःखसन्तप्तः कुम्भस्थ इव पन्नगः ॥ ५२ ॥ तं विजित्याथ कर्णोऽपि पाञ्चालां-स्त्वरितो ययौ। रथेनातिपताकेन चन्द्रवर्णहयेन च ॥ ५३ ॥ तत्राक्रन्दो महानासीत् पाण्डवानां विशाम्पते। दृष्ट्वा सेनापतिं यान्तं पाञ्चालानां रथव्रजान् ॥ ५४ ॥ तत्राकरोन्महाराज कदनं सूतनन्दनः। मध्यं प्राप्ते दिनकरे चक्रवद्विचरन् प्रभुः ॥ ५५ ॥ भग्नचक्रै रथैः कैश्चित् छिन्नध्वजपताकिभिः। हताश्वैर्हतसूतैश्च

प्रभग्नाश्चैव मारिष ॥ ५६ ॥ ह्रियमाणानपश्याम पाञ्चालानां रथव्रजान्। तत्र तत्र च संभ्रान्ता विचेरुरथ कुञ्जराः ॥ ५७ ॥ दावाग्निपरिदग्धाङ्गा यथैव सुमहावने। भिन्नकुम्भार्द्ररुधिरा-श्छिन्नहस्ताश्च वारणाः ॥ ५८ ॥ छिन्नगात्रावराश्चैव छिन्नवालाश्च मारिष। छिन्नाभ्राणीव संपेतुर्हन्यमाना महात्मना ॥ ५९ ॥ अपरे त्रासिता नागा राधेयशरतोमरैः। तमेवाभिमुखा जग्मुः शलभा इव पावकम् ॥ ६० ॥ अपरे निष्टनन्तश्च व्यदृश्यन्त महा-द्विपाः। क्षरन्तः शोणितं गात्रैर्नगा इव जलस्रवाः ॥ ६१ ॥ उरश्छदैर्विमुक्तांश्च वालबन्धैश्च वाजिनः। राजतैश्च तथा कांस्यैः सौवर्णैश्चैव भूषणैः ॥ ६२ ॥ हीनांश्चाभरणैश्चैव खलीनैश्च विव-र्जितान्। चामरैश्च कुथाभिश्च तूणीरैः पतितैरपि ॥ ६३ ॥ निहतैः सादिभिश्चैव शूरैराहवशोभितैः। अपश्याम रणे तत्र भ्राम्यमाणान् हयोत्तमान् ॥ ६४ ॥ प्रासैः खड्गैश्च संस्यूता-नृष्टिभिश्चापि भारत। हययोधानपश्याम कञ्चुकोष्णीषधारिणः ॥ ६५ ॥ निहतान् वध्यमानांश्च वेपमानांश्च भारत। नानाङ्गा-वयवैर्हीनांस्तत्र तत्रैव भारत ॥ ६६ ॥ रथान् हेमपरिष्कारान् संयुक्तान् जवनैर्हयैः। भ्राम्यमाणानपश्याम हतेषु रथिषु द्रुतम् ॥ ६७ ॥ भग्नाक्षकूवरान् कांश्चित् भग्नचक्रांश्च भारत। छिन्नपताक-ध्वजांश्चान्यांश्छिन्नेषादण्डबन्धुरान् ॥ ६८ ॥ विहीनान्रथिनस्तत्र धावमानान् समन्ततः। सूतपुत्रशरैस्तप्तानपश्याम विशाम्पते। विशस्त्रांश्च तथैवान्यान् सशस्त्रांश्च हतान् बहून् ॥ ६९ ॥ तारका-जालसंछन्नान् वरघण्टाविशोभितान्। नानावर्णविचित्राभिः पता-काभिरलंकृतान्। वारणानन्वपश्याम धावमानान् समन्ततः ॥ ७० ॥ शिरांसि बाहूनूरूंश्च छिन्नानन्यांस्तथैव च। कर्णचापच्युतैर्बाणै-रपश्याम समन्ततः ॥ ७१ ॥ महान् व्यतिकरो रौद्रो योधाना-मन्वपद्यत। कर्णसायकनुन्नानां युध्यतां च शितैः शरैः ॥ ७२ ॥

ते वध्यमानाः समरे सूतपुत्रेण सृञ्जयाः । तमेवाभिमुखं यान्ति
पतङ्गा इव पावकम् ॥ ७३ ॥ तं दहन्तमनीकानि तत्र तत्र महा-
रथम् । क्षत्रिया वर्ज्जयामासुर्युगान्ताग्निमिवोल्वणम् ॥ ७४ ॥
हतशेषास्तु ये वीराः पाञ्चालानां महारथाः । तान् प्रभग्नान्
द्रुतान् वीरः पृष्ठतो विकिरञ्छरैः । अभ्यधावत तेजस्वी विशीर्ण-
कवचध्वजान् ॥ ७५ ॥ तापयामास तान् बाणैः सूतपुत्रो महा
बलः । मध्यं दिनमनुप्राप्तो भूतानीव तमोनुदः ॥ ७६ ॥

इति कर्णपर्वणि कर्णपराक्रमे चतुर्विंशोऽध्यायः ॥ २४ ॥

---

सञ्जय उवाच । युयुत्सुं तव पुत्रस्य द्रावयन्तं बलं महत् ।
उलूकोऽभ्यपतत्तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ॥ १ ॥ युयुत्सुस्तु ततो
राजन् शितधारेण पत्रिणा । उलूकं ताड़यामास वज्रेणेव महा-
चलम् ॥ २ ॥ उलूकस्तु ततः क्रुद्धस्तव पुत्रस्य संयुगे । क्षुरप्रेण
धनुश्छित्त्वा ताड़यामास कर्णिना ॥ ३ ॥ तदपास्य धनुश्छिन्नं
युयुत्सुर्वेगवत्तरम् । अन्यदादत्त सुमहच्चापं संरक्तलोचनः ॥ ४ ॥
उलूकन्तु ततः षष्ट्या विव्याध भरतर्षभ । सारथिं त्रिभिरानर्च्छत्
तञ्च भूयोऽप्यविध्यत ॥ ५ ॥ उलूकस्तन्तु विंशत्या विद्ध्वा स्वर्ण-
विभूषितैः । अथास्य समरे क्रुद्धो ध्वजं चिच्छेद काञ्चनम् ॥ ६ ॥
स छिन्नयष्टिः सुमहान् शीर्य्यमाणो महाध्वजः । पपात प्रमुखे
राजन् युयुत्सोः काञ्चनध्वजः ॥ ७ ॥ ध्वजमुन्मथितं दृष्ट्वा युयुत्सुः
क्रोधमूर्च्छितः । उलूकं पञ्चभिर्बाणैराजघान स्तनान्तरे ॥ ८ ॥
उलूकस्तस्य समरे तैलधौतेन मारिष । शिरश्चिच्छेद भल्लेन यन्तु-
र्भरतसत्तम ॥ ९ ॥ जघान चतुरोऽश्वांश्च तञ्च विव्याध पञ्चभिः ।
सोऽतिविद्धो बलवता प्रत्यपायाद्रथान्तरम् ॥ १० ॥ तं निर्जित्य
रणे राजन्नुलूकस्त्वरितो ययौ । पाञ्चालान् सृञ्जयांश्चैव विनिघ्न-

न्निशितैः शरैः ॥ ११ ॥ शतानीकं महाराज श्रुतकर्मा सुतस्तव।
व्यश्वसूतरथञ्चक्रे निमेषार्द्धादसम्भ्रमः ॥ १२ ॥ हताश्वे तु रथे
तिष्ठन् शतानीको महारथः। गदां चिक्षेप संक्रुद्धस्तव पुत्रस्य
मारिष ॥ १३ ॥ सा कृत्वा स्यन्दनं भस्म हयांश्चैव ससारथीन्।
पपात धरणीं तूर्णं दारयन्तीव भारत ॥ १४ ॥ तावुभौ विरथौ
वीरौ कुरूणां कीर्त्तिवर्द्धनौ। व्यपाक्रमेतां युद्धात्तु प्रेक्षमाणौ
परस्परम् ॥ १५ ॥ पुत्रस्तु तव सम्भ्रान्तो विविंशो रथमाविशत्।
शतानीकोऽपि त्वरितः प्रतिविन्ध्यरथं गतः ॥ १६ ॥ सुतसोमन्तु
शकुनिर्विद्धा सुनिशितैः शरैः। नाकम्पयत संक्रुद्धो वार्य्यौघ इव
पर्वतम् ॥ १७ ॥ सुतसोमस्तु तं दृष्ट्वा पितुरत्यन्तवैरिणम्। शरै-
रनेकसाहस्रैश्छादयामास भारत ॥ १८ ॥ तान् शरान् शकुनि-
स्तूर्णं चिच्छेदान्यैः पतत्त्रिभिः। लघ्वस्त्रश्चित्रयोधी च जितकाशी
च संयुगे ॥ १९ ॥ निवार्य्य समरे चापि शरांस्तान्निशितैः शरैः।
आजघान सुसंक्रुद्धः सुतसोमं त्रिभिः शरैः ॥ २० ॥ तस्याश्वान्
केतनं सूतं तिलशो व्यधमच्छरैः। श्यालस्तव महाराज तत
उच्चुक्रुशुर्जनाः ॥ २१ ॥ हताश्वो विरथश्चैव छिन्नकेतुश्च मारिष।
धन्वी धनुर्द्धरं गृह्य रथाद्भूमावतिष्ठत ॥ २२ ॥ व्यसृजत् सायकां-
श्चैव स्वर्णपुङ्खान् शिलाशितान्। छादयामास समरे तव श्यालस्य
तं रथम् ॥ २३ ॥ शलभानामिव व्रातान् शरव्रातान्महारथः।
रथोपगान् समीक्ष्यैव विव्यथे नैव सौबलः। प्रममाथ शरांस्तांस्तु
शरव्रातैर्महायशाः ॥ २४ ॥ तत्रातुष्यन्त योधाश्च सिद्धाश्चापि दिवि
स्थिताः। सुतसोमस्य तत् कर्म दृष्ट्वाश्रद्धेयमद्भुतम्। रथस्थं
शकुनिं यस्तु पदातिः समयोधयत् ॥ २५ ॥ तस्य तीक्ष्णैर्महा-
वेगैर्भल्लैः सन्नतपर्वभिः। व्यहनत् कार्मुकं राजंस्तूणीरांश्चैव सर्वशः
॥ २६ ॥ स छिन्नधन्वा विरथः खड्गमुद्यम्य चानदत्। वैदू-
र्य्योत्पलवर्णाभं हस्तिदन्तमयत्सरुम् ॥ २७ ॥ भ्राम्यमाणं तत-

स्तन्तु विमलाम्बरवर्च्चसम् । कालदण्डोपमं मेने सुतसोमस्य धीमतः
॥ २८ ॥ सोऽचरत् सहसा खड्गी मण्डलानि समन्ततः । चतु-
र्द्दश महाराज शिक्षाबलसमन्वितः ॥ २९ ॥ भ्रान्तमुद्भ्रान्तमाविद्ध-
माप्लुतं प्लुतनिःसृतम् । सम्पातं समुदीर्णञ्च दर्शयामास संयुगे
॥ ३० ॥ सौबलस्तु ततस्तस्य शरांश्चिक्षेप वीर्य्यवान् । तानापतत
एवाशु चिच्छेद परमासिना ॥ ३१ ॥ ततः क्रुद्धो महाराज सौबलः
पुनरेव च । प्राहिणोत् सुतसोमाय शरानाशीविषोपमान् ॥३२॥
चिच्छेद तांस्तु खड्गेन शिक्षया च बलेन च । दर्शयल्लाघवं
युद्धे तार्क्ष्यतुल्यपराक्रमः ॥ ३३ ॥ तस्य सञ्चरतो राजन् मण्डला-
वर्त्तने तदा । क्षुरप्रेण सुतीक्ष्णेन खड्गञ्चिच्छेद सुप्रभम् ॥ ३४ ॥
स छिन्नः सहसा भूमौ निपपात महानसिः । अर्द्धमन्यत् स्थितं
हस्ते सुतसोस्तस्य भारत ॥ ३५ ॥ छिन्नमाज्ञाय निस्त्रिंशमव-
प्लुत्य पदानि षट् । प्राविध्यतः ततः शेषं सुतसोमो महारथः ॥३६॥
स छित्त्वा सगुणञ्चापं रणे तस्य महात्मनः । पपात धरणीं तूर्णं
स्वर्णवज्रविभूषितम् ॥ ३७ ॥ सुतसोमस्ततोऽगच्छत् श्रुतकीर्त्ति-
र्महारथम् ॥ ३८ ॥ सौबलोऽपि धनुर्गृह्य घोरमन्यत् सदुर्ज्जयम् ।
अभ्ययात् पाण्डवानीकं निघ्नन् शत्रुगणान् बहून् ॥ ३९ ॥ तत्र
नादो महानासीत् पाण्डवानां विशाम्पते । सौबलं समरे दृष्ट्वा
विचरन्तमभीतवत् ॥ ४० ॥ तान्यनीकानि दृप्तानि शस्त्रवन्ति
महान्ति च । द्राव्यमाणान्यदृश्यन्त सौबलेन महात्मना ॥ ४१ ॥
यथा दैत्यचमूं राजन् देवराजो ममर्द्द ह । तथैव पाण्डवीं
सेनां सौबलेयो व्यनाशयत् ॥ ४२ ॥

इति कर्णपर्व्वणि सुतसोमसौबलयुद्धे पञ्चविंशोऽध्यायः ॥ २५ ॥

---

सञ्जय उवाच । धृष्टद्युम्नं कृपो राजन् वारयामास संयुगे । यथा दृप्तं वने सिंहं शरभो वारयेद्युधि ॥ १ ॥ निरुद्धः पार्षतस्तेन गौतमेन बलीयसा । पदात् पदं विचलितुं नाशकत्तत्र भारत ॥ २ ॥ गौतमस्य रथं दृष्ट्वा धृष्टद्युम्नरथं प्रति । वित्रेसुः सर्वभूतानि क्षयं प्राप्तञ्च मेनिरे ॥ ३ ॥ तत्राबोचन् विमनसो रथिनः सादिनस्तथा । द्रोणस्य निधनान्नूनं संक्रुद्धो द्विपदां वरः ॥ ४ ॥ शारद्वतो महातेजा दिव्यास्त्रविदुदारधीः । अपि स्वस्ति भवेदद्य धृष्टद्युम्नस्य गौतमात् ॥ ५ ॥ अपीयं वाहिनी कृत्स्ना मुच्येत महतो भयात् । अप्ययं ब्राह्मणः सर्वान्न नो हन्यात् समागतान् ॥ ६ ॥ यादृशं दृश्यते रूपमन्तकप्रतिमं भृशम् । गमिष्यत्यद्य पदवीं भारद्वाजस्य गौतमः ॥ ७ ॥ आचार्य्यः क्षिप्रहस्तश्च विजयी च सदा युधि । अस्त्रवान् वीर्य्यसम्पन्नः क्रोधेन च समन्वितः । पार्षतश्च महायुद्धे विमुखोऽद्याभिलक्ष्यते ॥ ८ ॥ इत्येवं विविधा वाचस्तावकानां परैः सह । व्यश्रूयन्त महाराज तयोस्तत्र समागमे ॥ ९ ॥ विनिश्वस्य ततः क्रोधात् कृप शारद्वतो नृप । पार्षतञ्चार्द्दयामास निश्चेष्टं सर्वमर्मसु ॥ १० ॥ स हन्यमानः समरे गौतमेन महात्मना । कर्त्तव्यं न स्म जानाति मोहेन महता वृतः ॥ ११ ॥ तम् अब्रवीत्ततो यन्ता कच्चित् क्षेमं नु पार्षत । ईदृशं व्यसनं युद्धे न ते दृष्टं मया क्वचित् ॥ १२ ॥ दैवयोगात्तु ते वाणा नापतन्मर्मभेदिनः । प्रेषिता द्विजमुख्येन मर्माण्युद्दिश्य सर्वतः ॥ १३ ॥ व्यावर्त्तये रथं तूर्णं नदीवेगमिवार्णवात् । अवध्यं ब्राह्मणं । मन्ये येन ते विक्रमो हतः ॥ १४ ॥ धृष्टद्युम्नस्ततो राजन् शनकैरब्रवीद्वचः । मुह्यते मे मनस्तात गात्रे स्वेदश्च जायते ॥१५॥ वेपथुश्च शरीरे मे लोमहर्षश्च जायते । वर्ज्जयन् ब्राह्मणं युद्धे शनैर्याहि यतोऽर्जुनः ॥ १६ ॥ अर्जुनं भीमसेनं वा समरे प्राप्य सारथे । क्षेममद्य भवेदेवमेषा वै नैष्ठिकी मतिः ॥ १७ ॥ ततः

प्राचाम्महाराज शारद्वतस्त्वरयन् हयान् । ततो भीमो महेष्वासो युयुधे तव सैनिकैः ॥ १८ ॥ प्रद्रुतञ्च रथं दृष्ट्वा धृष्टद्युम्नस्य मारिष । किरञ्छरशतान्येव गौतमोऽनुययौ तदा ॥ १९ ॥ शङ्खञ्च पूरयामास मुहुर्मुहुररिन्दम । पार्षतं द्रावयामास महेन्द्रो नमुचिं यथा ॥ २० ॥ शिखण्डिनन्तु समरे भीष्ममृत्युं दुरासदम् । हार्दिक्यो वारयामास स्मयन्निव मुहुर्मुहुः ॥ २१ ॥ शिखण्डी तु समासाद्य हृदिकानां महारथम् । पञ्चभिर्निशितैर्भल्लैर्जत्रुदेशे समाहनत् ॥ २२ ॥ कृतवर्मा तु संक्रुद्धो भित्त्वा षष्ट्या पतत्रिभिः । धनुरेकेन चिच्छेद हसन्राजन्महारथः ॥ २३ ॥ अथान्यद्धनुरादाय द्रुपदस्यात्मजो बली । तिष्ठ तिष्ठेति संक्रुद्धो हार्दिक्यं प्रत्यभाषत ॥ २४ ॥ ततोऽस्य नवतिं बाणान् रुक्मपुङ्खान् सुतेजनान् । प्रेषयामास राजेन्द्र तेऽस्याभ्रश्यन्त वर्मणः ॥ २५ ॥ वितथांस्तान् समालक्ष्य पतितांश्च महीतले । क्षुरप्रेण सुतीक्ष्णेन कार्मुकं चिच्छिदे भृशम् ॥ २६ ॥ अथैनं छिन्नधन्वानं भग्नशृङ्गमिवर्षभम् । अशीत्या मार्गणैः क्रुद्धो बाह्वोरुरसि चार्पयत् ॥ २७ ॥ कृतवर्मा तु संक्रुद्धो मार्गणैः क्षतविक्षतः । ववाम रुधिरं गात्रैः कुम्भवक्त्रादिवोदकम् ॥ २८ ॥ रुधिरेण परिक्लिन्नः कृतवर्मा व्यराजत । वर्षेण क्लेदितो राजन् यथा गैरिकपर्वतः ॥ २९ ॥ अथान्यद्धनुरादाय समार्गणगुणं प्रभुः । शिखण्डिनं बाणवरैः स्कन्धदेशे व्यताडयत् ॥ ३० ॥ स्कन्धदेशस्थितैर्बाणैः शिखण्डी तु व्यराजत । शाखाप्रशाखाविपुलः सुमहान् पादपो यथा ॥ ३१ ॥ तावन्योऽन्यं भृशं विद्धा रुधिरेण समुक्षितौ । अन्योऽन्यशृङ्गाभिहतौ रेजतुर्वृषभाविव ॥ ३२ ॥ अन्योऽन्यस्य वधे यत्नं कुर्वाणौ तौ महारथौ । रथाभ्यान्चेरतुस्तत्र मण्डलानि सहस्रशः ॥ ३३ ॥ कृतवर्मा महाराज पार्षतं निशितैः शरैः । रणे विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ॥ ३४ ॥ ततोऽस्य समरे बाणं भोजः प्रहरतां वरः ।

जीवितान्तकरं घोरं व्यसृजत्त्वरयान्वितः ॥ ३५ ॥ स तेनाभिहतो राजन् मूर्च्छामाशु समाविशत्। ध्वजयष्टिञ्च सहसा शिश्रिये कश्मलावृतः ॥ ३७ ॥ अपोवाह रणात्तूर्णं सारथी रथिनां वरम्। हार्दिक्यशरसन्तप्तं निश्वसन्तं पुनः पुनः ॥ ३७ ॥ पराजिते ततः शूरे द्रुपदस्यात्मजे प्रभो। व्यद्रवत् पाण्डवी सेना बध्यमाना समन्ततः ॥ ३८ ॥

इति कर्णपर्वणि शिखण्डपयाने षड्विंशोऽध्यायः ॥ २६ ॥

---

सञ्जय उवाच। श्वेताश्वोऽपि महाराज व्धमत्तावकं बलम्। यथा वायुः समासाद्य तूलराशिं समन्ततः ॥ १ ॥ प्रत्युद्ययुस्त्रिगर्त्तास्तं शिवयः कौरवैः सह। शाल्वाः संसप्तकाश्चैव नारायणबलञ्च यत् ॥ २ ॥ सत्यसेनश्चन्द्रदेवो मित्रदेवः श्रुतञ्जयः। सौश्रुतिश्चित्रसेनश्च मित्रवर्मा च भारत ॥ ३ ॥ त्रिगर्त्तराजः समरे भ्रातृभिः परिवारितः। पुत्रैश्चैव महेष्वासैर्नानाशस्त्रविशारदैः ॥ ४ ॥ व्यसृजन्त शरव्रातान् किरन्तोऽर्जुनमाहवे। अभ्यवर्षन्त सहसा वार्य्योघा इव सागरम् ॥ ५ ॥ ते त्वर्जुनं समासाद्य योधाः शतसहस्रशः। अगच्छन् विलयं सर्वे तार्क्ष्यं दृष्ट्वे व पन्नगाः ॥ ६ ॥ ते बध्यमानाः समरे नाजहुः पाण्डवं तदा। दह्यमाना महाराज शलभा इव पावकम् ॥ ७ ॥ सत्यसेनस्त्रिभिर्वाणैर्विव्याध युधि पाण्डवम्। मित्रदेवस्त्रिषष्ट्या तु चन्द्रदेवस्तु सप्तभिः ॥ ८ ॥ मित्रवर्मा त्रिसप्तत्या सौश्रुतिश्चापि सप्तभिः। शत्रुञ्जयस्तु विंशत्या सुशर्मा नवभिः शरैः ॥ ९ ॥ स विद्धो बहुभिः सङ्ख्ये प्रतिविव्याध तान् नृपान्। सौश्रुतिं सप्तभिर्विद्ध्वा सत्यसेनं त्रिभिः शरैः ॥१०॥ शत्रुञ्जयञ्च विंशत्या चन्द्रदेवं तथाष्टभिः। मित्रदेवं शतेनैव श्रुतसेनं त्रिभिः शरैः ॥ ११ ॥ नवभिर्मित्रवर्माणं सुशर्माणं तथाष्टभिः।

शत्रुञ्जयश्च राजानं हत्वा तत्र शिलाशितैः। सौश्रुतेः सशिरस्त्राणं शिरः कायादपाहरत्॥ १२॥ त्वरितश्चन्द्रदेवञ्च शरैर्निन्ये यमक्षयम्। तथेतरान्महाराज यतमानान्महारथान्। पञ्चभिः पञ्चभिर्बाणैरेकैकं प्रत्यवारयत्॥ १३॥ सत्यसेनस्तु संक्रुद्धस्तोमरं व्यसृजन्महत्। समुद्दिश्य रणे कृष्णं सिंहनादं ननाद च॥ १४॥ स निर्भिद्य भुजं सव्यं माधवस्य महात्मनः। अयस्मयो हेमदण्डो जगाम धरणीं तदा॥ १५॥ माधवस्य तु विद्धस्य तोमरेण महारणे। प्रतोदः प्रापतद्धस्ताद्रश्मयश्च विशाम्पते॥ १६॥ वासुदेवं विभिन्नाङ्गं दृष्ट्वा पार्थो धनञ्जयः। क्रोधमाहारयत्तीव्रं कृष्णञ्चेदमुवाच ह॥ १७॥ प्रापयाश्वान्महाबाहो सत्यसेनं प्रति प्रभो। यावदेनं शरैस्तीक्ष्णैर्नयामि यमसादनम्॥ १८॥ स प्रतोदं प्रगृह्याशु तथा रश्मीन्महायशाः। वाहयामास तानश्वान् सत्यसेनरथं प्रति॥ १९॥ विष्वक्सेनन्तु निर्भिन्नं दृष्ट्वा पार्थो धनञ्जयः। सत्यसेनं शरैस्तीक्ष्णैर्वारयित्वा महारथः॥ २०॥ ततः सुनिशितैर्भल्लै राज्ञस्तस्य महच्छिरः। कुण्डलोपचितं कायाच्चकर्त्त पृतनामुखे॥ २१॥ तन्निकृत्य शितैर्बाणैश्चित्रवर्माणमाक्षिपत्। वत्सदन्तेन तीक्ष्णेन सारथिञ्चास्य मारिष॥ २२॥ ततः शरशतैर्भूयः संशप्तकगणान् बली। पातयामास संक्रुद्धः शतशोऽथ सहस्रशः॥ २३॥ ततो रजतपुङ्खेन राजन् शीर्षं महात्मनः। मित्रसेनस्य चिच्छेद क्षुरप्रेण महारथः। सुशर्माणञ्च संक्रुद्धो जत्रुदेशे समाहनत्॥ २४॥ ततः संशप्तकाः सर्वे परिवार्य धनञ्जयम्। शस्त्रौघैर्ममृदुः क्रुद्धा नादयन्तो दिशो दश॥ २५॥ अभ्यर्द्दितस्तु तैर्जिष्णुः शक्रतुल्यपराक्रमः। ऐन्द्रमस्त्रममेयात्मा प्रादुश्चक्रे महारथः। ततः शरसहस्राणि प्रादुरासन् विशाम्पते॥ २६॥ ध्वजानां छिद्यमानानां कार्मुकाणाञ्च मारिष। रथानां सपताकानां तूणीराणां युगैः सह॥ २७॥ अक्षाणामथ चक्राणां

योक्त्राणां रश्मिभिः सह । कूबराणां वरूथानां पृषत्कानाञ्च संयुगे ॥ २८ ॥ अश्वानां पततां चापि प्रासानामृष्टिभिः सह । गदानां परिघाणाञ्च शक्तितोमरपट्टिशैः ॥ २९ ॥ शतघ्नीनां सचक्राणां भुजानाञ्चोरुभिः सह । कण्ठसूत्राङ्गदानाञ्च केयूराणाञ्च मारिष ॥३०॥ हाराणामथ निष्काणां तनुत्राणाञ्च भारत । छत्राणां व्यजनानाञ्च शिरसां मुकुटैः सह । अश्रूयत महाशब्दस्तत्र तत्र विशाम्पते ॥ ३१ ॥ सकुण्डलानि स्वक्षी[illegible] पूर्णचन्द्रनिभानि च । शिरांस्युर्व्यामदृश्यन्त ताराजालमिवा[illegible]रे ॥ ३२ ॥ सुस्रग्वीणि सुवासांसि चन्दनेनोक्षितानि च । शरीरा[illegible] व्यदृश्यन्त निहतानां महीतले ॥ ३३ ॥ गन्धर्वनगराकारं [illegible]मायोधनं तदा । निहतै राजपुत्रैश्च क्षत्रियैश्च महाबलैः ॥ ३४ ॥ हस्तिभिः पतितैश्चैव तुरगैश्चाभवन्मही । अगम्यरूपा समरे विशीर्णैरिव पर्वतैः ॥ ३५ ॥ नासीच्चक्रपथस्तत्र पाण्डवस्य महात्मनः । निघ्नतः शात्रवान् भल्लैर्हस्त्यश्वरथांस्यतो महत् ॥३६॥ आतङ्कादि[illegible] सीदन्ति रथचक्राणि मारिष । चरतस्तस्य संग्रामे तस्मिंल्लोहितक[illegible]े ॥३७॥ सीदमानानि चक्राणि समूहुस्तुरगा भृशम् । श्रमेण [illegible]ता युक्ता मनोमारुतरंहसः ॥ ३८ ॥ वध्यमानन्तु तत् सैन्यं पाण्डुपुत्रेण धन्विना । प्रायशो विमुखं सर्वं नावतिष्ठति भारत ॥ ३९ ॥ तान् जित्वा समरे जिष्णुः संशप्तकगणान् बहून् । विरराज तदा पार्थो विधूमोऽग्निरिवोज्ज्वलन् ॥ ४० ॥

इति कर्णपर्वणि अर्जुनविजये सप्तविंशोऽध्यायः ॥ २७ ॥

---

सञ्जय उवाच । युधिष्ठिरं महाराज विसृजन्तं शरान् बहून् । स्वयं दुर्य्योधनो राजा प्रत्यगृह्णादभीतवत् ॥ १ ॥ तमापतन्तं सहसा तव पुत्रं महारथम् । धर्मराजो द्रुतं विद्ध्वा तिष्ठ तिष्ठेति

चाब्रवीत् ॥ २ ॥ स तु तं प्रतिविव्याध नवभिर्निशितैः शरैः ।
सारथिञ्चास्य भल्लेन भृशं क्रुद्धोऽभ्यताडयत् ॥ ३ ॥ ततो युधि-
ष्ठिरो राजा स्वर्णपुङ्खान् शिलीमुखान् । दुर्य्योधनाय चिक्षेप
त्रयोदश शिलाशितान् ॥ ४ ॥ चतुर्भिश्चतुरो वाहांस्तस्य हत्वा
महारथः । पञ्चमेन शिरः कायात् सारथेस्तु समाक्षिपत् ॥ ५ ॥
षष्ठेन तु ध्वजं राज्ञः सप्तमेन तु कार्म्मुकम् । अष्टमेन तथा खड्गं
पातयामास भूतले ॥ ६ ॥ पञ्चभिर्नृपतिञ्चापि धर्म्मराजोऽर्द्दय-
द्भृशम् । हताश्वात्तु रथात्तस्मादवप्लुत्य सुतस्तव । उत्तमं व्यसनं
प्राप्तो भूमावेवावतिष्ठते ॥ ७ ॥ तन्तु कृच्छ्रगतं दृष्ट्वा कर्णद्रौणि-
कृपादयः । अभ्यवर्त्तन्त सहसा परीप्सन्तो नराधिपम् ॥ ८ ॥
अथ पाण्डुसुताः सर्व्वे परिवार्य्य युधिष्ठिरम् । अन्वयुः समरे
राजंस्ततो युद्धमवर्त्तत ॥ ९ ॥ ततस्तूर्य्यसहस्राणि प्रावाद्यन्त महा-
मृधे । ततः किलकिलाशब्दाः प्रादुरासन्महीपते ॥ १० ॥ यत्रा-
भ्यगच्छन् समरे पाञ्चालाः कौरवैः सह । नरा नरैः समाजग्मु-
र्वारणा वरवारणैः ॥ ११ ॥ रथाश्च रथिभिः सार्द्धं हयाश्च हय-
सादिभिः । द्वन्द्वान्यासन्महाराज प्रेक्षणीयानि संयुगे । विविधा-
न्यप्यचिन्त्यानि शस्त्रवन्त्युत्तमानि च ॥ १२ ॥ ते शूराः समरे सर्व्वे
चित्रं लघु च सुष्ठु च । अयुध्यन्त महावेगाः परस्परवधैषिणः
॥ १३ ॥ अन्योऽन्यं समरे जघ्नुर्योधव्रतमनुष्ठिताः । न हि ते
समरञ्चक्रुः पृष्ठतो वै कथञ्चन ॥ १४ ॥ मुहूर्त्तमेव तद्युद्धमासी-
न्मधुरदर्शनम् । तत उन्मत्तवद्राजन्निर्मर्य्यादमवर्त्तत ॥ १५ ॥ रथी
नागं समासाद्य दारयन्निशितैः शरैः । प्रेषयामास कालाय शरैः
सन्नतपर्वभिः ॥ १६ ॥ नागा हयान् समासाद्य विक्षिपन्तो बहू-
न्रणे । दारयामासुरत्युग्रं तत्र तत्र तदा तदा ॥ १७ ॥ हया-
रोहाश्च बहवः परिवार्य्य हयोत्तमान् । तलशब्दवरांश्चक्रुः सम्प-
तन्तस्ततस्ततः ॥ १८ ॥ धावमानांस्ततस्तांस्तु द्रवमाणान् महा-

गजान् । पार्श्वतः पृष्ठतश्चैव निजघ्नुर्हयसादिनः ॥ १९ ॥ विद्राव्य च बहूनश्वान्नागा राजन्मदोत्कटाः । विषाणैश्चापरे जघ्नुर्ममृदुश्चापरे भृशम् ॥ २० ॥ साश्वारोहांश्च तुरगान् विषाणैर्विव्यधू रुषा । अपरे चिक्षिपुर्वेगात् प्रगृह्यातिबलास्तदा ॥ २१ ॥ पादातैराहता नागा विवरेषु समन्ततः । चक्रुरार्तस्वरं घोरं दुद्रुवुश्च दिशो दश ॥ २२ ॥ पदातीनान्तु सहसा प्रद्रुतानां महाहवे । उत्सृज्याभरणं तूर्णमवप्लुत्य रणाजिरे ॥ २३ ॥ निमित्तं मन्यमानास्तु परिणाम्य महागजाः । जगृहुर्विभिदुश्चैव चित्राण्याभरणानि च ॥ २४ ॥ तांस्तु तत्र प्रसक्तान् वै परिवार्य्य पदातयः । हस्त्यारोहान्निजघ्नुस्ते महावेगा बलोत्कटाः ॥ २५ ॥ अपरे हस्तिभिर्हस्तैः खे विक्षिप्ता महाहवे । निपतन्तो विषाणाग्रैर्भृशं विद्धाः सुशिक्षितैः ॥ २६ ॥ अपरे सहसा गृह्य विषाणैरवसूदिताः । सेनान्तरं समासाद्य केचित्तत्र महागजैः । क्षुण्णगात्रा महाराज विक्षिप्य च पुनः पुनः ॥ २७ ॥ अपरे व्यजनानीव विभ्राम्य निहता मृधे । पुरःसराश्च नागानामपरेषां विशाम्पते । शरीराण्यतिविद्धानि तत्र तत्र रणाजिरे ॥ २८ ॥ प्रतिमानेषु कुम्भेषु दन्तवेष्टेषु चापरे । निगृहीता भृशं नागाः प्रासतोमरशक्तिभिः ॥ २९ ॥ निगृह्य च गजाः केचित् पार्श्वस्थैर्भृशदारुणैः । रथाश्वसादिभिस्तत्र संभिन्ना न्यपतन् भुवि ॥ ३० ॥ सहसा सादिनस्तत्र तोमरेण महामृधे । भूमावमृद्नन् वेगेन सवर्माणं पदातिनम् ॥ ३१ ॥ तथा सावरणान् कांश्चित्तत्र तत्र विशाम्पते । रथान्नागाः समासाद्य परिगृह्य च मारिष । व्यक्षिपन् सहसा तत्र घोररूपे भयानके ॥ ३२ ॥ नाराचैर्निहतश्चापि निपपात महागजः । पर्वतस्येव शिखरं वज्रभग्नं महीतले ॥ ३३ ॥ योधा योधान् समासाद्य मुष्टिभिर्व्यहनन् युधि । केशेष्वन्योऽन्यमाक्षिप्य चिक्षिपुर्विभिदुश्च ह ॥ ३४ ॥ उद्यम्य च भुजानन्ये निक्षिप्य च

महीतले । तदा वीरः समाक्रम्य स्फुरन्तोऽपाहरच्छिरः ॥ ३५ ॥
मृतमन्यो महाराज पद्भ्यां ताड़ितवांस्तदा । पततश्चापरो राजन्
विजहारासिना शिरः ॥ ३६ ॥ जीवतश्च तथैवान्यः शस्त्रं काये
न्यमज्जयत् । मुष्टियुद्धं महच्चासीत् योधानां तत्र भारत । तथा
केशग्रहश्चोग्रो बाहुयुद्धञ्च भैरवम् ॥ ३७ ॥ समासक्तस्य चान्येन
अविज्ञातस्तथापरः । जहार समरे प्राणान् नानाशस्त्रैरनेकधा
॥ ३८ ॥ संसक्तेषु च योधेषु वर्त्तमाने च संकुले । कबन्धान्युत्थि-
तानि स्युः शतशोऽथ सहस्रशः ॥ ३९ ॥ शोणितैः सिच्यमानानि
शस्त्राणि कवचानि च । महारागानुरक्तानि वस्त्राणीव चकाशिरे
॥ ४० ॥ एवमेतन्महायुद्धं दारुणं शस्त्रसंकुलम् । उन्मत्तगङ्ग-
प्रतिमं शब्देनापूरयज्जगत् ॥ ४१ ॥ नैव स्वे न परे राजन् विज्ञा-
यन्ते शरातुराः । योद्धव्यमिति युध्यन्ते राजानो जयकाङ्क्षिणः ॥४२॥
स्वान् स्वे जघ्नुर्महाराज परांश्चैव समागतान् । उभयोः सेनयो
र्वीरैर्व्याकुलं समपद्यत ॥ ४३ ॥ रथैर्भग्नैर्महाराज वारणैश्च
निपातितैः । हयैश्च पतितैस्तत्र नरैश्च विनिपातितैः ॥ ४४ ॥
अगम्यरूपा पृथिवी मांसशोणितकर्द्दमा । क्षणेनासीन्महीपाल
हतजीवप्रवर्त्तिनी ॥ ४५ ॥ पाञ्चालानहनत् कर्णस्त्रिगर्त्तांश्च धन-
ञ्जयः । भीमसेनः कुरून् राजन् हस्त्यनीकञ्च सर्व्वशः ॥ ४६ ॥ एव-
मेष क्षयो वृत्तः कुरुपाण्डवसेनयोः । अपराह्णे गते सूर्य्ये काङ्क्षतां
विपुलं यशः ॥ ४७ ॥

इति कर्णपर्व्वणि सङ्कुलयुद्धे अष्टाविंशोऽध्यायः ॥ २८ ॥

---

धृतराष्ट्र उवाच । अतितीव्राणि दुःखानि दुःसहानि बहूनि
च । त्वत्तोऽहं सञ्जयाश्रौषं पुत्राणाञ्चैव सङ्क्षयम् ॥ १ ॥ यथा
त्वं मे कथयसे यथा युद्धञ्च वर्त्तते । न सन्ति सूत कौरव्या इति

मे निश्चिता मतिः ॥ २ ॥ दुर्य्योधनस्य विरथः कृतस्तत्र महारणे । धर्मपुत्रः कथञ्चक्रे तस्य वा नृपतिः कथम् ॥ ३ ॥ अपराह्णे कथं युद्धमभवल्लोमहर्षणम् । तन्ममाचक्ष्व तत्त्वेन कुशलो ह्यसि सञ्जय ॥४

सञ्जय उवाच । संसक्तेषु च सैन्येषु युध्यमानेषु भागशः । रथमन्यं समास्थाय पुत्रस्तव विशाम्पते । क्रोधेन महता युक्तः सविषो भुजगो यथा ॥ ५ ॥ दुर्य्योधनस्तु दृष्ट्वा वै धर्मराजं युधिष्ठिरम् । प्रोवाच सूतं त्वरितो याहि याहीति भारत ॥ ६ ॥ तत्र मां प्रापय क्षिप्रं सारथे यत्र पाण्डवः । ध्रियमाणातपत्रेण राजा राजति दंशितः ॥ ७ ॥ स सूतश्चोदितो राज्ञा र.ज्ञः स्यन्दनमुत्तमम् । युधिष्ठिरस्याभिमुखं प्रेषयामास संयुगे ॥ ८ ॥ ततो युधिष्ठिरः क्रुद्धः प्रभिन्न इव कुञ्जरः । सारथिञ्चोदयामास याहि यत्र सुयोधनः ॥ ९ ॥ तौ समाजग्मतुर्वीरौ भ्रातरौ रथसत्तमौ । समेत्य च महावीर्य्यौ संरब्धौ युद्धदुर्मदौ । ततक्षतुर्महेष्वासौ शरैरन्योऽन्यमाहवे ॥ १० ॥ ततो दुर्य्योधनो राजा धर्मशीलस्य मारिष । शिलाशितेन भल्लेन धनुश्चिच्छेद संयुगे ॥ ११ ॥ तन्नामृष्यत संक्रुद्धो ह्यवमानं युधिष्ठिरः ॥ १२ ॥ अपविध्य धनुश्छिन्नं क्रोधसंरक्तलोचनः । अन्यत् कार्मुकमादाय धर्मपुत्रश्चमूमुखे । दुर्य्योधनस्य चिच्छेद ध्वजं कार्मुकमेव च ॥१३॥ अथान्यद्धनुरादाय प्रत्यविध्यत पाण्डवम् ॥ १४ ॥ तावन्योऽन्यं सुसंरब्धौ शस्त्रवर्षाण्यमुञ्चताम् । सिंहाविव सुसंरब्धौ परस्परजिगीषया ॥ १५ ॥ जघ्नतुस्तौ रणेऽन्योन्यं नर्द्दमानौ वृषाविव । अन्तरं मार्गमाणौ च चेरतुस्तौ महारथौ ॥ १६ ॥ ततः पूर्णायतोत्सृष्टैः शरैस्तौ तु कृतव्रणौ । विरेजतुर्महाराज किंशुकाविव पुष्पितौ ॥ १७ ॥ ततो राजन् प्रतिभयान् सिंहनादान्मुहुर्मुहुः । तलयोश्च तथा शब्दान् धनुषोश्च महाहवे । शङ्खशब्दवरांश्चैव चक्रतुस्तौ नरेश्वरौ ॥ १८ ॥ अन्योऽन्यं तौ महाराज पीड़या

ष्वक्रतुर्भृशम् ॥ १९ ॥ ततो युधिष्ठिरो राजा पुत्रं तव शरैस्त्रिभिः । आजघानोरसि क्रुद्धो वज्रवेगैर्दुरासदैः ॥ २० ॥ प्रतिविव्याध तं तूर्णं तव पुत्रो महीपतिः । पञ्चभिर्निशितैर्बाणैः रुक्मपुङ्खैः शिला-शितैः ॥ २१ ॥ ततो दुर्य्योधनो राजा शक्तिं चिक्षेप भारत । सर्वपारशवीं तीक्ष्णां महोल्काप्रतिमां तदा ॥ २२ ॥ तामापतन्तीं सहसा धर्मराजः शितैः शरैः । त्रिभिश्चिच्छेद सहसा तञ्च विव्याध पञ्चभिः ॥ २३ ॥ निपपात ततः साथ स्वर्णदण्डा महा-स्वना । निपतन्ती महोल्केव व्यराजत् शिखिसन्निभा ॥ २४ ॥ शक्तिं विनिहतां दृष्ट्वा पुत्रस्तव विशाम्पते । नवभिर्निशितैस्तीक्ष्णै-र्निजघान युधिष्ठिरम् ॥ २५ ॥ सोऽतिविद्धो बलवता शत्रुणा शत्रु-तापनः । दुर्य्योधनं समुद्दिश्य वाणं जग्राह सत्वरः ॥ २६ ॥ समाधत्त च तं वाणं धनुर्मध्ये महाबलः । चिक्षेप च महाराज ततः क्रुद्धः पराक्रमी ॥ २७ ॥ स तु वाणः समासाद्य तव पुत्रं महारथम् । व्यामोहयत राजानं धरणीञ्च जगाम ह ॥ १८ ॥ ततो दुर्य्योधनः क्रुद्धो गदामुद्यम्य वेगितः । विधित्सुः कलह-स्यान्तं धर्मराजमुपाद्रवत् ॥ २९ ॥ तमुद्यतगदं दृष्ट्वा दण्डहस्त-मिवान्तकम् । धर्मराजो महाशक्तिं प्राहिणोत्तव सूनवे । दीप्य-मानां महावेगां महोल्कां ज्वलितामिव ॥ ३० ॥ रथस्थः स तया विद्धो मर्म भित्त्वा स्तनान्तरे । भृशं संविग्नहृदयः पपात च मुमोह च ॥ ३१ ॥ भीमस्तमाह च ततः प्रतिज्ञामनुचिन्तयन् । नायं बध्यस्तव नृप इत्युक्तः संन्यवर्त्तत ॥ ३२ ॥ ततस्त्वरितमागम्य कृतवर्मा तवात्मजम् । प्रत्यपद्यत राजानं निमग्नं व्यसनार्णवे ॥३३॥ गदामादाय भीमोऽपि हेमपट्टपरिष्कृताम् । अभिदुद्राव वेगेन कृतवर्माणमाहवे ॥ ३४ ॥ एवं तदभवद्युद्धं त्वदीयानां परैः सह । अपराह्णे महाराज काङ्क्षतां विजयं युधि ॥ ३५ ॥

इति कर्णपर्वणि सङ्कुलयुद्धे जनस्त्रिंशोऽध्यायः ॥ २९ ॥

सञ्जय उवाच। ततः कर्णं पुरस्कृत्य त्वदीया युद्धदुर्मदाः। पुनरावृत्य संग्रामं चक्रुर्देवासुरोपमम्॥ १॥ द्विरदनररथाश्वशङ्खशब्दैः परिहृषिता विविधैश्च शस्त्रपातैः। द्विरदरथपदातिसादिसङ्घाः परिकुपिताभिमुखाः प्रजघ्निरे ते॥ २॥ शितपरश्वधशाखिपट्टिशैरिषुभिरनेकविधैश्च सादिताः। द्विरदरथहया महाहवे वरपुरुषैः पुरुषाश्च वाहनैः॥ ३॥ कमलदिनकरेन्दुसन्निभैः सितदशनैः सुमुखाक्षिनासिकैः। रुचिरमुकुटकुण्डलैर्मही पुरुषशिरोभिरास्तृता बभौ॥ ४॥ परिघमुषलशक्तितोमरैर्नखरभुशुण्डिगदाशतैर्हताः। द्विरदनरहयाः सहस्रशो रुधिरनदीप्रवाहस्तदाभवन्॥ ५॥ प्रहतरथनराश्वकुञ्जरं प्रतिभयदर्शनमुल्बणव्रणम्। तदहितहतमावभौ बलं पितृपतिराष्ट्रमिव प्रजाक्षये॥ ६॥ अथ तव नरदेव सैनिकास्तव च सुताः सुरसूनुसन्निभाः। अमितबलपुरःसरा रणे कुरुवृषभाः शिनिपुत्रमभ्ययुः॥ ७॥ तदतिरुचिरभीममावभौ पुरुषवराश्वरथद्विपाकुलम्। लवणजलसमुद्धतस्वनं बलमसुरामरसैन्यसन्निभम्॥ ८॥ सुरपतिसमविक्रमस्ततस्त्रिदशवरावरजोपमं युधि। दिनकरकिरणप्रभैः पृषत्कै रवितनयोऽभ्यहनच्छिनिप्रवीरम्॥ ९॥ तमपि सरथवाजिसारथिं शिनिवृषभो विविधैः शरैस्त्वरन्। भुजगविषसमप्रभै रणे पुरुषवरं समवास्तृणोत्तदा॥ १०॥ शिनिवृषभशरप्रपीडितं तव सुहृदो वसुषेणमभ्ययुः। त्वरितमतिरथा रथर्षभं द्विरदरथाश्वपदातिभिः सह॥ ११॥ तदुदधिनिभमाद्रवद्बलं त्वरिततरैः समभिद्रुतं परैः। द्रुपदसुतमुखैस्तदाभवत्पुरुषरथाश्वगजक्षयो महान्॥ १२॥ अथ पुरुषप्रवरौ कृताह्निकौ भवमभिपूज्य यथाविधि प्रभुम्। अरिवधकृतनिश्चयौ द्रुतं तव बलमर्जुनकेशवौ सृतौ॥ १३॥ जलदनिनदनिस्वनं रथं पवनविधूतपताककेतनम्। सितहयमुपयान्तमन्तिकं हृतमनसो ददृशुस्तदारयः

। १४ ॥ अथ विस्फार्य्य गाण्डीवं रथे नृत्यन्निवार्जुनः । शर-
संबाधमकरोत् खं दिशः प्रदिशस्तथा ॥ १५ ॥ रथान् विमान-
प्रतिमान् सज्जयन् सायुधध्वजान् । ससारथींस्तदा वाणैरभ्रा-
णीवानिलोऽवधीत् ॥ १६ ॥ गजान् गजनियन्तृंश्च वैजयन्त्यायुध-
ध्वजान् । सादिनोऽश्वांश्च पत्तींश्च शरैर्निन्ये यमक्षयम् ॥ १७ ॥
तमन्तकमिव क्रुद्धमनिवार्य्यं महारथम् । दुर्य्योधनोऽभ्ययादेको
निघ्नन् वाणैरजिह्मगैः ॥ १८ ॥ तस्यार्जुनो धनुः सूतमश्वान्
केतुञ्च सायकैः । हत्वा सप्तभिरेकेन छत्रं चिच्छेद पत्रिणा ॥१९॥
अन्तरञ्च समासाद्य व्यसृजत् प्राणघातिनम् । दुर्य्योधनायेषुवरं तं
द्रौणिः सप्तधाच्छिनत् ॥ २० ॥ ततो द्रौणेर्धनुश्छित्त्वा हत्वा चाश्व-
वराञ्छरैः । कृपस्यापि तदत्युग्रं धनुश्चिच्छेद पाण्डवः ॥ २१ ॥
हार्द्दिक्यस्य धनुश्छित्त्वा ध्वजञ्चाश्वांस्तथावधीत् । दुःशासनस्ये-
ष्वसनं छित्वा राधेयमभ्ययात् ॥ २२ ॥ अथ सात्यकिमुत्सृज्य
त्वरन् कर्णोऽर्जुनं त्रिभिः । विद्ध्वा विव्याध विंशत्या कृष्णं पार्थं
पुनः पुनः ॥ २३ ॥ न ग्लानिरासीत् कर्णस्य क्षिपतः सायकान्
बहून् । रणे विनिघ्नतः शत्रून् क्रुद्धस्येव शतक्रतोः ॥ २४ ॥ अथ
सात्यकिरागत्य कर्णं विद्ध्वा शितैः शरैः । नवत्या नवभिश्चोग्रैः
शतेन पुनरार्पयत् ॥ २५ ॥ ततः प्रवीराः पार्थानां सर्वे कर्णमपी-
डयन् । युधामन्युः शिखण्डी च द्रौपदेयाः प्रभद्रकाः ॥ २६ ॥
उत्तमौजा युयुत्सुश्च यमौ पार्षत एव च । चेदिकारूषमत्स्यानां
कैकेयानाञ्च यद्बलम् ॥ २७ ॥ चेकितानश्च बलवान् धर्मराजश्च
सुव्रतः । एते रथाश्वद्विरदैः पत्तिभिश्चोग्रविक्रमैः ॥ २८ ॥ परि-
वार्य्य रणे कर्णं नानाशस्त्रैरवाकिरन् । भाषन्तो वाग्भिरुग्राभिः
सर्वे कर्णवधे धृताः ॥ २९ ॥ तां शस्त्रवृष्टिं बहुधा कर्णश्छित्त्वा
शितैः शरैः । अपोवाहास्त्रवीर्य्येण द्रुमं भङ्क्त्वेव मारुतः ॥ ३० ॥
रथिनः समहामात्रान् गजानश्वान् ससादिनः । पत्तिव्रातांश्च

संक्रुद्धो निघ्नन् कर्णो व्यदृश्यत ॥ ३१ ॥ तद्वध्यमानं पाण्डूनां बलं कर्णास्त्रतेजसा। विशस्त्रक्षतदेहन्तु प्रायं आसीत् पराङ्मुखम् ॥ ३२ ॥ अथ कर्णास्त्रमस्त्रेण प्रतिहत्यार्जुनः स्मयन्। दिशः खञ्चैव भूमिञ्च प्रावृणोत् शरवृष्टिभिः ॥ ३३ ॥ मुषलानीव सम्पेतुः परिघा इव चेषवः। शतघ्न्य इव चाप्यन्ये वज्राण्युग्राणि चापरे ॥ ३४ ॥ तैर्वध्यमानं तत् सैन्यं सपत्त्यश्वरथद्विपम्। निमीलिताक्षमत्यर्थं बभ्राम च ननाद च ॥ ३५ ॥ निष्कैवल्यं तदा युद्धं प्रापुरश्वनरद्विपाः। हन्यमानाः शरैरार्त्तास्तदा भीताः प्रदुद्रुवुः ॥ ३६ ॥ त्वदीयानां तदा युद्धे संसक्तानां जयैषिणाम्। गिरिमस्तं समासाद्य प्रत्यपद्यत भानुमान् ॥ ३७ ॥ तमसा च महाराज रजसा च विशेषतः। न किञ्चित् प्रत्यपश्याम शुभं वा यदि वाशुभम् ॥ ३८ ॥ ते त्रस्यन्तो महेष्वासा रात्रियुद्धस्य भारत। अपयानं ततश्चक्रुः सहिताः सर्वयोधिभिः ॥ ३९ ॥ कौरवेष्वपयातेषु तदा राजन् दिनक्षये। जयं सुमनसः प्राप्य पार्थाः स्वशिबिरं ययुः ॥४०॥ वादित्रशब्दैर्विविधैः सिंहनादैः सगर्ज्जितैः। परानुपहसन्तश्च स्तुवन्तश्चाच्युतार्जुनौ ॥४१॥ कृतेऽवहारे तैर्वीरैः सैनिकाः सर्व एव ते। आशीर्वाचः पाण्डवेषु प्रायुज्यन्त नरेश्वराः ॥ ४२ ॥ ततः कृतेऽवहारे च प्रहृष्टास्तत्र पाण्डवाः। निशायां शिबिरं गत्वा न्यवसन्त नरेश्वराः ॥ ४३ ॥ ततो रक्षःपिशाचाश्च श्वापदाश्चैव सङ्घशः। जग्मुरायोधनं घोरं रुद्रस्याक्रीड़सन्निभम् ॥ ४४ ॥

इति कर्णपर्वणि प्रथमदिवसयुद्धे त्रिंशोऽध्यायः ॥ ३०

---

धृतराष्ट्र उवाच। स्वेन छन्देन वः सर्वानवधीद्व्यक्तमर्जुनः। न ह्यस्य समरे मुच्येदन्तकोऽप्याततायिनः ॥ १ ॥ पार्थश्चैकोऽहरद्भद्रामेकश्चाग्निमतर्पयत्। एकश्चेमां महीं जित्वा चक्रे बलिभृतो

वान् ॥ २ ॥ एको निवातकवचानहनद्दिव्यकार्मुकः । एकः
रातरूपेण स्थितं शर्वमयोधयत् ॥ ३ ॥ एको ह्यरक्षद्भरतानेको
अमतोषयत् । तेनैकेन जिता सर्वे मही.पा ह्युग्रतेजसा ॥ ४ ॥
ते निन्द्याः प्रशस्तास्ते यत्ते चक्रुर्ब्रवीहि तत् । ततो दुर्योधनः
त पश्चात् किमकरोत्तदा ॥ ५ ॥

सञ्जय उवाच । हतप्रहतविध्वस्ता विवर्मायुधवाहनाः । दीन-
रा दूयमाना मानिनः शत्रुनिर्जिताः ॥ ६ ॥ शिविरस्थाः पुन-
न्त्रं मन्त्रयन्ति स्म कौरवाः । भग्नदंष्ट्रा हतविषाः पादाक्रान्ता
वोरगाः ॥ ७ ॥ तान.वीत् ततः कर्णः क्रुद्धः सर्प इव श्वसन् ।
रं करेण निष्पीड्य प्रेक्षमाणस्तवात्मजान् ॥ ८ ॥ यत्तो दृढ़श्च
क्षश्च धृतिमानर्जुनः सदा । संबोधयति चाप्येनं यथाकालमधो-
ज्ञजः ॥ ९ ॥ सहसास्त्रविसर्गेण वयं तेनाद्य वञ्चिताः । श्वस्त्वहं
स्य सङ्कल्पं सर्वं हन्ता महीपते ॥ १० ॥ एवमुक्तस्तथेत्युक्त्वा
सोऽनुजज्ञे नृपोत्तमान् । तेऽनुज्ञाता नृपाः सर्वे स्वानि वेश्मानि
भेजिरे ॥ ११ ॥ सुखोषितास्ते रजनीं हृष्टा युद्धाय निर्ययुः ॥१२॥
तेऽपश्यन् विहितं व्यूहं धर्मराजेन दुर्जयम् । प्रयत्नात् कुरुमुख्येन
बृहस्पत्युशनोमतम् ॥१३॥ अथ प्रतिपकर्त्तारं प्रवीरं परवीरहा ।
सस्मार वृषभस्कन्धं कर्णं दुर्योधनस्तदा ॥ १४ ॥ पुरन्दरसमं
युद्धे मरुद्गणसमं बले । कार्त्तवीर्य्यसमं वीर्य्ये कर्णं राज्ञोऽगमन्मनः
॥ १५ ॥ सर्वेषाञ्चैव सैन्यानां कर्णमेवागमन्मनः । सूतपुत्रं
महेष्वासं बन्धुमात्ययिकेष्विव ॥ १६ ॥

धृतराष्ट्र उवाच । यद्वोऽगमन्मनो मन्दाः कर्णं वैकर्त्तनं प्रति ।
अप्यपश्यत राधेयं शीतार्त्ता इव भास्करम् ॥ १७ ॥ कृतेऽवहारे
सैन्यानां प्रवृत्ते च रणे पुनः । कथं वैकर्त्तनः कर्णस्तत्रायुध्यत
सञ्जय ॥ १८ ॥ कथञ्च पाण्डवाः सर्वे युयुधुस्तत्र सूतजम् । कर्णो
ह्येको महाबाहुर्हन्यात् पार्थान् ससृञ्जयान् ॥ १९ ॥ कर्णस्य

भुजयोर्वीर्य्यं शक्रविष्णुसमं युधि। तस्य शस्त्राणि घोराणि विक्रमश्च महात्मनः॥ २०॥ कर्णमाश्रित्य संग्रामे मत्तो दुर्य्योधनो नृपः। दुर्य्योधनं ततो दृष्ट्वा पाण्डवेन भृशार्द्दितम्। पराक्रान्तान् पाण्डुसुतान् दृष्ट्वा चापि महारथः॥ २१॥ कर्णमाश्रित्य संग्रामे मन्दो दुर्य्योधनः पुनः। जेतुमुत्सहते पार्थान् सपुत्रान् सहकेशवान् ॥ २२॥ अहोवत महद्दुःखं यत्र पाण्डुसुतान्रणे। नातरद्रभसः कर्णो दैवं नूनं परायणम्॥ २३॥ अहो द्यूतस्य निष्ठेयं घोरा सम्प्रति वर्त्तते। अहो तीव्राणि दुःखानि दुर्य्योधनकृतान्यहम्। सोढा घोराणि वहुशः शल्यभूतानि सञ्जय॥ २४॥ सौवलञ्च तदा तात नीतिमानिति मन्यते। कर्णश्च रभसो नित्यं राजानं चाप्यनुव्रतः॥ २५॥ यदेवं वर्त्तमानेषु महायुद्धेषु सञ्जय। अश्रौषं निहतान् पुत्रान् नित्यमेव च निर्ज्जितान्॥ २६॥ न पाण्डवानां समरे कश्चिदस्ति निवारकः। स्त्रीमध्यमिव गाहन्ते दैवन्तु वलवत्तरम्॥ २७॥

सञ्जय उवाच। राजन् पूर्वनिमित्तानि धर्मिष्ठानि विचिन्तय ॥ २८॥ अतिक्रान्तं हि यत् कार्य्यं पश्चाच्चिन्तयते नरः। तच्चास्य न भवेत् कार्य्यं चिन्तया च विनश्यति॥ २९॥ तदिदं त कार्य्यन्तु दूरप्राप्तं विजानता। न कृतं यत्त्वया पूर्वं प्राप्ताप्राप्तविचारणम् ॥ ३०॥ उक्तोऽसि वहुधा राजन् मा युध्यस्वेति पाण्डवैः। गृह्णीषे न च तन्मोहात्तच्च नञ्च विशाम्पते॥ ३१॥ त्वया पापानि घोराणि समाचीर्णानि पाण्डुषु। त्वत्कृते वर्त्तते घोरः पार्थिवानां जनक्षयः ॥ ३२॥ तत्त्विदानीमतिक्रान्तं मा शुचो भरतर्षभ। शृणु सर्वं यथा वृत्तं घोरं वैशसमच्युत॥ ३३॥ प्रभातायां रजन्यान्तु कर्णो राजानमभ्ययात्। समेत्य च महावाहुर्दुर्य्योधनमथाब्रवीत्॥३४॥

कर्ण उवाच। अद्य राजन् समेष्यामि पाण्डवेन यशस्विना निहनिष्यामि तं वीरं स वा मां निहनिष्यति॥ ३५॥ वहुत्वान्मम

कार्य्याणां तथा पार्थस्य भारत। नाभूत् समागमो राजन् मम चैवार्जुनस्य च ॥ ३६ ॥ इदन्तु मे यथाप्रज्ञं शृणु वाक्यं विशाम्पते। अनिहत्य रणे पार्थं नाहमेष्यामि भारत ॥ ३७ ॥ हतप्रवीरे सैन्येऽस्मिन् मयि चावस्थिते युधि। अभियास्यति मां पार्थः शक्रशक्त्या विनाकृतम् ॥ ३८ ॥ ततः श्रेयस्करं यच्च तन्निबोध जनेश्वर। आयुधानाञ्च मे वीर्य्यं दिव्यानामर्जुनस्य च ॥ ३९ ॥ कार्य्यस्य महतो भेदे लाघवे दूरपातने। सौष्ठवे चास्त्रपाते च सव्यसाची न मे समः ॥ ४० ॥ प्राणे शौर्य्ये च ज्ञाने च विक्रमे चापि भारत। निमित्तज्ञानयोगे च सव्यसाची न मत्समः ॥ ४१ ॥ सर्वायुधमहामात्रं विजयं नाम मे धनुः। इन्द्रार्थं प्रियकामेन निर्म्मितं विश्वकर्म्मणा ॥ ४२ ॥ येन दैत्यगणान्राजन् जितवान् वै शतक्रतुः। यस्य घोषेण दैत्यानां व्यामुह्यन्त दिशो दश ॥ ४३ ॥ तद्भार्गवाय प्रायच्छच्छक्रः परमसम्मतम्। तद्दिव्यं भार्गवो मह्यमददद्धनुरुत्तमम् ॥ ४४ ॥ तेन योत्स्ये महाबाहुमर्जुनं जयतां वरम्। यथेन्द्रः समरे सर्वान् दैतेयान् वै समागतान् ॥ ४५ ॥ धनुर्घोरं रामदत्तं गाण्डीवात्तद्विशिष्यते। त्रिःसप्तकृत्वः पृथिवी धनुषा येन निर्ज्जिता ॥ ४६ ॥ धनुषो ह्यस्य कर्माणि दिव्यानि प्राह भार्गवः। तद्रामो ह्यददन्मह्यं येन योत्स्यामि पाण्डवम् ॥ ४७ अद्य दुर्य्योधनाहं त्वां नन्दयिष्ये सबान्धवम्। निहत्य समरे वीरमर्जुनं जयतां वरम् ॥ ४८ ॥ सपर्वतवनद्वीपा हतवीरा ससागरा। पुत्रपौत्रप्रतिष्ठा ते भविष्यत्यद्य पार्थिव ॥ ४९ ॥ नाशक्यं विद्यते मेऽद्य त्वत्प्रियार्थं विशेषतः। सम्यग्धर्म्मानुरक्तस्य सिद्धिरात्मवतो यथा ॥ ५० ॥ न हि मां समरे सोढुं स शक्तोऽग्निं तरुर्यथा। अवश्यन्तु मया वाच्यं येन हीनोऽस्मि फाल्गुनात् ॥ ५१ ॥ ज्या तस्य धनुषो दिव्या तथाक्षय्यौ महेषुधी। सारथिस्तस्य गोविन्दो मम तादृङ्न विद्यते ॥ ५२ ॥ तस्य दिव्यं धनुःश्रेष्ठं गाण्डीव-

मजरं युधि । विजयस्य महद्दिव्यं ममापि धनुरुत्तमम् ॥ ५३ ॥
तत्राहमधिकः पार्थात् धनुषा तेन पार्थिव । येन चाप्यधिको वीरः
पाण्डवस्तन्निबोध मे ॥ ५४ ॥ रश्मिग्राहश्च दाशार्हः सर्वलोक-
नमस्कृतः । अग्निदत्तश्च वै दिव्यो रथ काञ्चनभूषणः ॥ ५५ ॥
अच्छेद्यः सर्वतो वीर वाजिनश्च मनोजवाः । ध्वजश्च दिव्यो द्युति-
मान् वानरो विस्मयङ्करः ॥ ५६ ॥ कृष्णश्च स्रष्टा जगतो रथं
तमभिरक्षति । एतैर्द्रव्यैरहं हीनो योद्धुमिच्छामि पाण्डवम्
॥ ५७ ॥ अयन्तु सदृशः शौरेः शल्यः समितिशोभनः । सारथ्यं
यदि मे कुर्य्यात् ध्रुवस्ते विजयो भवेत् ॥ ५८ ॥ तस्य मे सारथिः
शल्यो भवत्वसुकरः परैः । नाराचान् गार्द्धपत्रांश्च शकटानि वहन्तु
मे ॥५९॥ रथाश्च मुख्या राजेन्द्र युक्ता वाजिभिरुत्तमैः । आयान्तु
पश्चात् सततं मामेव भरतर्षभ ॥ ६० ॥ एवमभ्यधिकः पार्थात्
भविष्यामि गुणैरहन् । शल्योऽप्यभ्यधिकः कृष्णादर्जुनादपि चाप्य-
हम् ॥ ६१ ॥ यथाश्वहृदयं वेद दाशार्हः परवीरहा । तथ
शल्यो विजानीते हयज्ञानं महारथः ॥ ६२ ॥ बाहुवीर्य्ये समं
नास्ति मद्रराजस्य कश्चन ॥ ६३ ॥ यथास्त्रैर्मत्समो नास्ति कश्चि
दैव धनुर्द्धरः । तथा शल्यसमो नास्ति हयज्ञाने हि [illegible]श्चन ॥६४
सोऽयमभ्यधिकः पार्थाद्भविष्यति रथो मम । समुद्यातुं न शक्ष्यन्ति
देवा अपि सवासवाः ॥ ६५ ॥ एवं कृते रथस्थोऽहं गुणैरप्यधि
कोऽर्जुनात् । भवेयं विजयेयञ्च फाल्गुनं कुरुसत्तम ॥ ६६ ॥ एत
कृतं महाराज त्वयेच्छामि परन्तप । क्रियतामेष कामो मे मा
कालोऽत्यगादयम् ॥ ६७ ॥ एवं कृते कृतं सह्यं सर्वकामैर्भ
ष्यति । ततो द्रक्ष्यसि संग्रामे यत् करिष्यामि भारत ॥ ५८
सर्वथा पाण्डवान् सङ्ख्ये विजेष्ये वै समागतान् । न हि मे सम
शक्ताः समुद्यातुं सुरासुराः । किमु पाण्डुसुता राजन् र
मानुषयोनयः ॥ ६९ ॥

सञ्जय उवाच । एवमुक्तस्तव सुतः कर्णेनाहवशोभिना ।
सम्पूज्य संप्रहृष्टात्मा ततो राधेयमब्रवीत् ॥ ७० ॥
दुर्य्योधन उवाच । एवमेतत् करिष्यामि यथा त्वं कर्ण मन्यसे ।
सोपासङ्गा रथाः साश्वा अनुयास्यन्ति संयुगे ॥ ७१ ॥ नाराचान्
गार्द्धपत्रांश्च शकटानि वहन्तु ते । अनुयास्याम कर्ण त्वां वयं
सर्व्वे च पार्थिवाः ॥ ७२ ॥
सञ्जय उवाच । एवमुक्त्वा महाराज तव पुत्रः प्रतापवान् ।
अभिगम्याब्रवीद्राजा मद्रराजमिदं वचः ॥ ७३ ॥

इति कर्णपर्व्वणि कर्णदुर्य्योधनसंवादे एकत्रिंशोऽध्यायः ॥ ३१ ॥


MAHARAJA'S LIBRARY
7 JAN 1891
COOCHBEHAR.

---

सञ्जय उवाच । पुत्रस्तव महाराज मद्रराज महारथम् ।
विनयेनोपसङ्गम्य प्रणयाद्वाक्यमब्रवीत् ॥ १ ॥ सत्यव्रत महाभाग
द्विषतां तापवर्द्धन । मद्रेश्वर रणे शूर परसैन्यभयङ्कर ॥ २ ॥
श्रुतवानसि कर्णस्य ब्रुवतो वदताम्बर । यथा नृपतिसिंहानां
मध्ये त्वां वरयत्ययम् ॥ ३ ॥ स त्वामप्रतिवीर्य्याद्य शत्रुपक्षक्षयाय
च । मद्रेश्वर प्रयाचेऽहं शिरसा विनयेन च ॥ ४ ॥ तस्मात्
पार्थविनाशार्थं हितार्थं मम चैव हि । सारथ्यं रथिनां श्रेष्ठ
प्रणयात् कर्त्तुमर्हसि ॥ ५ ॥ त्वयि यन्तरि राधेयो विद्विषो मे
विजेष्यते ॥ ६ ॥ अभीषूणां हि कर्णस्य ग्रहीतान्यो न विद्यते ।
ऋते हि त्वां महाभाग वासुदेवसमं युधि । स पाहि सर्व्वथा कर्णं
यथा ब्रह्मा महेश्वरम् ॥ ७ ॥ यथा च सर्व्वथापत्सु वार्ष्णेयः
पाति पाण्डवम् । तथा मद्रेश्वराद्य त्वं राधेयं प्रतिपालय ॥ ८ ॥
भीष्मो द्रोणः कृपः कर्णो भवान् भोजश्च वीर्य्यवान् । शकुनिः
सौबलो द्रौणिरहमेव च नो बलम् ॥ ९ ॥ एवमेष कृतो भागो
नवधा पृथिवीपते । न च भागोऽत्र भीष्मस्य द्रोणस्य च महा-

त्मनः ॥ १० ॥ ताभ्यामतीत्य तौ भागौ निहता मम पत्नवः ॥ ११ ॥ व्यूढौ स्थितौ नरव्याघ्रौ छलेन निहतौ च तौ। कृत्वा नसुकरं कर्म गतौ स्वर्गमितोऽनघ। तथान्ये पुरुषव्याघ्राः परैर्विनिहता युधि ॥ १२ ॥ अस्मदीयाश्च बहवः स्वर्गाय प्रस्थिता रणे। त्यक्त्वा प्राणान् यथाशक्ति चेष्टां कृत्वा च पुष्कलाम् ॥ १३ ॥ तदिदं हतभूयिष्ठं बलं मम नराधिप। पूर्वमप्यल्पकैः पार्थैर्हतं किमुत साम्प्रतम् ॥ १४ ॥ बलवन्तो महात्मानः कौन्तेयाः सत्यविक्रमाः। बलशेषं न हन्युर्मे यथा तत् कुरु पार्थिव ॥ १५ ॥ हतवीरमिदं सैन्यं पाण्डवैः समरे विभो ॥ १६ ॥ कर्णो ह्येको महाबाहुरस्मत्प्रियहिते रतः। भवांश्च पुरुषव्याघ्र सर्वलोकमहारथः ॥ १७ ॥ शल्य कर्णोऽर्जुनेनाद्य योद्धुमिच्छति संयुगे। तस्मिन् जयाशा विपुला मम मद्रजनाधिप ॥ १८ ॥ तस्याभीषुग्रहवरो नान्योऽस्ति भुवि कश्चन। पार्थस्य समरे कृष्णो यथाभीषुग्रहो वरः। तथा कर्णरथे राजंस्त्वमभीषुग्रहो भव ॥ १९ ॥ तेन युक्तो रणे पार्थो रक्ष्यमाणश्च मारिष। यानि कर्माणि कुरुते प्रत्यक्षाणि तवैव तत् ॥ २० ॥ पूर्वं न समरे ह्येवमवधीदर्जुनो रिपून्। इदानीं विक्रमो ह्यस्य कृष्णेन सहितस्य च ॥ २१ ॥ कृष्णेन सहितः पार्थो धार्त्तराष्ट्रीं महाचमूम्। अहन्यहनि मद्रेश द्रावयन् दृश्यते युधि ॥ २२ ॥ भागोऽवशिष्टः कर्णस्य तव चैव महाद्युते। तं भागं सह कर्णेन युगपन्नाशयाहवे ॥ २३ ॥ अरुणेन यथा सार्द्धं तमः सूर्यो व्यपोहति। तथा कर्णेन सहितो जहि पार्थं महाहवे ॥ २४ ॥ उद्यन्तौ च यथा सूर्यौ बालसूर्यसमप्रभौ। कर्णशल्यौ रणे दृष्ट्वा विद्रवन्तु महारथाः ॥ २५ ॥ सूर्यारुणौ यथा दृष्ट्वा तमो नश्यति मारिष। तथा नश्यन्तु कौन्तेयाः सपाञ्चालाः ससृञ्जयाः ॥ २६ ॥ रथिनां प्रवरः कर्णो यन्तॄणां प्रवरो भवान्। सन्निपाते समो लोके भवतोर्नास्ति कश्चन ॥ २७ ॥ यथा सर्वा

एवमाशु वार्ष्णेयः पाति पाण्डवम् । तथा भवान् परित्रातु कर्णं वैकर्त्तनं रणे ॥ २८ ॥ त्वया सारथिना ह्येष अप्रधृष्यो भविष्यति । दैवतानामपि रणे सशक्राणां महीपते । किं पुनः पाण्डवेयानां मा विशङ्कीर्वचो मम ॥ २९ ॥

सञ्जय उवाच । दुर्य्योधनवचः श्रुत्वा शल्यः क्रोधसमन्वितः । त्रिशिखां भुकुटिं कृत्वा धुन्वन् हस्तौ पुनः पुनः ॥ ३० ॥ क्रोधरक्ते महानेत्रे परिवृत्य महाभुजः । कुलैश्वर्य्यश्रुतबलैर्दृप्तः शल्योऽब्रवीदिदम् ॥ ३१ ॥

शल्य उवाच । अवमन्यसि गान्धारे ध्रुवं वा परिशङ्कसे । यन्मां ब्रवीषि विस्रब्धं सारथ्यं क्रियतामिति ॥ ३२ ॥ अस्मत्तोऽभ्यधिकं कर्णं मन्यमानः प्रशंससि । न चाहं युधि राधेयं गणये तुल्यमात्मना ॥ ३३ ॥ आदिश्यतामभ्यधिको ममांशः पृथिवीपते । तमहं समरे हत्वा गमिष्यामि यथागतम् ॥ ३४ ॥ अथ वाप्येक एवाहं योत्स्यामि कुरुनन्दन । पश्य वीर्य्यं ममाद्य त्वं संग्रामे दहतो रिपून् ॥ ३५ ॥ न चाभिमानं कौरव्य निधाय हृदये पुमान् । अस्मद्विधः प्रवर्त्तेत मा मां त्वमभिशङ्किथाः । युधि चाप्यवमानो मे न कर्त्तव्यः कथञ्चन ॥ ३६ ॥ पश्य पीनौ मम भुजौ वज्रसंहननोपमौ । धनुः पश्य च मे चित्रं शरांश्चाशीविषोपमान् ॥ ३७ ॥ रथं पश्य च मे क्लृप्तं सदश्वैर्वातवेगितैः । गदाञ्च पश्य गान्धारे हेमपट्टविभूषिताम् ॥ ३८ ॥ दारयेयं महीं क्रुद्धो विकिरेयञ्च पर्वतान् । शोषयेयं समुद्रांश्च तेजसा स्वेन पार्थिव ॥ ३९ ॥ तं मामेवंविधं राजन् समर्थमरिनिग्रहे । कस्माद्युनक्षि सारथ्ये न्यूनस्याधिरथे रणे ॥ ४० ॥ न मामधुरि राजेन्द्र नियोक्तुं त्वमिहार्हसि । न हि पापीयसः श्रेयान् भूत्वा प्रेष्यत्वमुत्सहे ॥ ४१ ॥ यो ह्यभ्युपगतं प्रीत्या गरीयांसं वशे स्थितम् । वशे पापीयसो धत्ते तत्पापमधरोत्तरम् ॥ ४२ ॥ ब्रह्मणा ब्राह्मणाः सृष्टा मुखात् क्षत्रियाः भुजात्…

यानपि बाहुतः। ऊरुभ्यामसृजद्वैश्यान् पद्भ्यां शूद्रानिति स्थितिः ॥ ४३ ॥ तेभ्यो वर्णविशेषाश्च प्रतिलोमानुलोमजाः। अथान्यो-ऽन्यस्य संयोगात् चातुर्वर्ण्यस्य भारत ॥ ४४ ॥ गोप्तारः संग्रही-तारो दातारः क्षत्रियाः स्मृताः। याजनाध्यापनैर्विप्रा विशुद्धैश्च प्रतिग्रहैः। लोकस्यानुग्रहार्थाय स्थापिता ब्राह्मणा भुवि ॥ ४५ ॥ कृषिश्च पाशुपाल्यञ्च विशां दानञ्च धर्मतः। ब्रह्मक्षत्रविशां शूद्रा विहिताः परिचारकाः ॥ ४६ ॥ तथा वै क्षत्रियाणाञ्च सूता वै परिचारकाः। न क्षत्रिया वै सूतानां शृणु वाक्यं ममानघ ॥४७॥ सोऽहं मूर्द्धाभिषिक्तश्च राजर्षिकुलसम्भवः। महारथः समाख्यातः सेव्यः स्तव्यश्च वन्दिनाम् ॥ ४८ ॥ सोऽहमेतादृशो भूत्वा नेहारि-बलसूदन। सूतपुत्रस्य संग्रामे सारथ्यं कर्त्तुमुत्सहे ॥ ४९ ॥ अवमानमहं प्राप्य न योत्स्यामि कथञ्चन। आपृच्छे त्वाद्य गान्धारे गमिष्यामि गृहाय वै ॥ ५० ॥

सञ्जय उवाच। एवमुक्त्वा नरव्याघ्रः शल्यः समितिशोभनः। उत्थाय प्रययौ तूर्णं राजमध्यादमर्षितः ॥ ५१ ॥ प्रणयाद्बहुमानाच्च निगृह्य च सुतस्तव। अब्रवीन्मधुरं वाक्यं साम्ना सर्वार्थसाधकम् ॥ ५२ ॥ यथा शल्य त्वमात्थ त्वमेवमेतदसंशयम्। अभि[illegible]यस्तु मे कश्चित्तन्निबोध जनेश्वर ॥ ५३ ॥ न कर्णोऽभ्यधिकस्त्वत्तो न शङ्के त्वाञ्च पार्थिव। न हि मद्रेश्वरो राजा कुर्य्याद्यदनृतं भवेत् ॥ ५४ ॥ ऋतमेव हि पूर्वास्ते वदन्ति पुरुषोत्तमाः। तस्मादार्त्ता-यनिः प्रोक्तो भवानिति मतिर्मम ॥ ५५ ॥ शल्यभूतश्च शत्रूणां यस्मात्त्वं भुवि मानद। तस्माच्छल्येति ते नाम कथ्यते पृथिवीतले ॥ ५६ ॥ यदेव व्याहृतं पूर्वं भवता भूरिदक्षिण। तदेव कुरु धर्मज्ञ मदर्थं मद्यदुच्यसे ॥ ५७ ॥ न च त्वत्तो हि राधेयो न चाहमपि वीर्य्यवान्। वृणोमस्त्वं हयाग्र्याणां यन्तारमिति संयुगे ॥ ५८ ॥ यथा ह्यभ्यधिकः कर्णो गुणैस्तात धनञ्जयात्। वासु-

देवादपि लघु लोकोऽयमिति मन्यते ॥ ५९ ॥ कर्णो ह्यभ्यधिकः पार्थादस्त्रैरेव नरर्षभ । भवानभ्यधिकः कृष्णादश्वज्ञाने तथा बले ॥ ६० ॥ यथाश्वहृदयं वेद वासुदेवो महामनाः । द्विगुणं त्वं तथा वेत्सि मद्रराज न संशयः ॥ ६१ ॥

शल्य उवाच । यन्मां ब्रवीषि गान्धारे मध्ये सैन्यस्य कौरव । विशिष्टं देवकीपुत्रात् प्रीतिमानस्म्यहं त्वयि ॥ ६२ ॥ एष सारथ्यमातिष्ठे राधेयस्य यशस्विनः । युध्यतः पाण्डवाग्र्येण यथा त्वं वीर मन्यसे ॥ ६३ ॥ समयश्च हि मे वीर कश्चिद्वैकर्त्तनं प्रति । उत्सृजेयं यथाश्रद्धमहं वाचोऽस्य सन्निधौ ॥ ६४ ॥

सञ्जय उवाच । तथेति राजन् पुत्रस्ते सह कर्णेन भारत । अब्रवीन्मद्रराजस्य सुतं भरतसत्तम ॥ ६५ ॥

इति कर्णपर्वणि शल्यस्य कर्णसारथ्यस्वीकारे द्वात्रिंशोऽध्यायः॥३२॥

---

दुर्य्योधन उवाच । भूय एव तु मद्रेश यत्त्वां वक्ष्यामि तच्छृणु । यथा पुरावृत्तमिदं युद्धे देवासुरे प्रभो ॥ १ ॥ यदुक्तवान् पितुर्मेऽद्य मार्कण्डेयो महानृषिः । तदशेषेण ब्रुवतो मम राजर्षिसत्तम । तन्निबोध न चाप्यत्र कर्त्तव्या ते विचारणा ॥ २ ॥ देवानामसुराणाञ्च परस्परजयैषिणाम् । बभूव परमो राजन् संग्रामस्तारकामयः । निर्जिताश्च तदा दैत्या दैवतैरिति नः श्रुतम् ॥३॥ निर्ज्जितेषु च दैत्येषु तारकस्य सुतास्त्रयः । ताराक्षः कमलाक्षश्च विद्युन्माली च पार्थिव ॥ ४ ॥ तप उग्रं समास्थाय परमे नियमे स्थिताः । तपसा कर्षयामासुर्देहांस्ते शत्रुतापन ॥ ५ ॥ दमेन तपसा चैव नियमेन समाधिना । तेषां पितामहः प्रीतो वरदः प्रददौ वरान् ॥ ६ ॥ अवध्यत्वञ्च ते राजन् सर्वभूतेषु सर्वदा । सहिता वरयामासुः सर्वलोकपितामहम् ॥ ७ ॥ तानब्रवीत्तदा

नान्यथा। न च स्थाणुमृते शक्तो भेत्तुमेकेषुणापरः॥ ४२॥ ते यूयं स्थाणमीशानं जिष्णुमक्लिष्टकारिणम्। योद्धारं वृणुतादित्याः स तान् हन्ता सुरेतरान्॥ ४३॥ इति तस्य वचः श्रुत्वा देवाः शक्रपुरोगमाः। ब्रह्माणमग्रतः कृत्वा वृषाङ्कं शरणं ययुः॥ ४४॥ तपः परममातस्थुर्गृणन्तो ब्रह्म शाश्वतम्। ऋषिभिः सह धर्मज्ञा भवं सर्वात्मना गताः॥ ४५॥ तुष्टुवुर्वाग्भिरुग्राभिर्भयेष्वभयदं नृप। सर्वात्मानं महात्मानं येनाप्तं सर्वमात्मना॥ ४६॥ तपोविशेषैर्बहुभिर्योगं यो वेद चात्मनः। यः साङ्ख्यमात्मनो वेद यस्य चात्मा वशे सदा॥ ४७॥ तं ते ददृशुरीशानं तेजोराशिमुमापतिम्। अनन्यसदृशं लोके प्रभवन्तमकल्मषम्॥ ४८॥ एकञ्च भगवन्तं ते नानारूपमकल्पयन्। आत्मनः प्रतिरूपाणि रूपाण्यथ महात्मनि। परस्परस्य चापश्यन् सर्वे परमविस्मिताः॥ ४९॥ सर्वभूतमयं दृष्ट्वा तमजं जगतः पतिम्। देवा ब्रह्मर्षयश्चैव शिरोभिर्धरणीं गताः॥ ५०॥ तान् स्वस्तिवादेनाभ्यर्च्य समुत्थाप्य च शङ्करः। वत ब्रूतेति भगवान् स्मयमानोऽभ्यभाषत॥ ५१॥ त्र्यम्बकेणाभ्यनुज्ञातास्ततस्ते स्वस्थचेतसः। नमो नमो नमस्तेऽस्तु प्रभो इत्यब्रुवन् भवः॥ ५२॥ नमो देवाधिदेवाय धन्विनेऽथातिमन्यवे। प्रजापतिमखघ्नाय प्रजापतिभिरीड्यते॥ ५३॥ नमः स्तुताय स्तुत्याय स्तूयमानाय मृत्यवे। विलोहिताय घोराय नीलग्रीवाय शूलिने॥ ५४॥ अमोघाय मृगाक्षाय प्रवरायुधयोधिने। अर्हाय चैव शुद्धाय क्षयाय क्रथनाय च॥ ५५॥ दुर्वारणाय शुक्राय ब्रह्मणे ब्रह्मचारिणे। ईशानायाप्रमेयाय नियन्त्रे चीरवाससे॥ ५६॥ तपोनित्याय पिङ्गाय व्रतिने कृत्तिवाससे। कुमारपित्रे त्र्यक्षाय प्रवरायुधपाणिने॥ ५७॥ प्रपन्नार्त्तिविनाशाय ब्रह्मद्विट्सङ्घघातिने। वनस्पतीनां पतये नराणां पतये नमः। गवाञ्च पतये नित्यं यज्ञानां पतये नमः॥ ५८॥ नमोऽस्तु ते

सेन्याय त्र्यम्बकायोग्रतेजसे। मनोवाक्कर्मभिर्देव त्वां प्रपन्नान्
भजस्व नः॥ ५९॥ ततः प्रसन्नो भगवान् स्वागतेनाभिनन्द्य तान्।
प्रोवाच व्येतु वस्त्रासो ब्रूत किं करवाणि वः॥ ६०॥

इति कर्णपर्व्वणि त्रिपुराख्याने त्रयस्त्रिंशोऽध्यायः॥ ३३॥

---

दुर्य्योधन उवाच। पितृदेवर्षिसङ्घेभ्योऽभये दत्ते महात्मना।
सत्कृत्य शङ्करं प्राह लोक..तं वचः॥ १॥ तवातिसर्गात्
सर्वेश प्राजापत्यमिदं पदम्। मयाधितिष्ठता दत्तो दानवेभ्यो
महान् वरः॥ २॥ तानतिक्रान्तम..दानान्य संहर्त्तमर्हति
त्वामृते भूतभव्येश त्वं ह्येषां प्रत्यरिर्वधे॥ ३॥ स त्वं देव प्रपन्नानां
याचतान्च दिवौकस..म्। कुरु प्रसादं देवेश दानवान् जहि शूल-
भृक्॥ ४॥ त्वत्प्रसादाज्जगत् सर्व्वं ..धितु मानद। शर-
ण्यस्त्वं हि लोकेश ते वयं शरणं गताः॥ ५॥

स्थाणुरुवाच। हन्तव्याः शत्रवः सर्वे यु..कमिति मे मतिः।
न त्वेक उत्सहे हन्तुं बलस्था हि सुरद्विषः॥ ६॥ ते यूयं संहिताः
सर्वे मदीयेनार्द्धतेजसा। जयध्वं युधि तान् शत्रून् सङ्घातो हि
महाबलः॥ ७॥

देवा ऊचुः। अस्मत्तेजोबलं यावत्तावद्द्विगुण..व च। तेषा-
मिति ह मन्यामो दृष्टतेजोबला हि ते॥ ८॥

श्रीभगवानुवाच। वध्यास्ते सर्वतः पापा ये युष्मास्वपरा..नः।
मम तेजोबलार्द्धेन सर्वान्निघ्नत शात्रवान्॥ ९॥

देवा ऊचुः। विभर्त्तुं तव तेजोऽर्द्धं न शक्ष्यामो महेश्वर।
सर्वेषां नो बलार्द्धेन त्वमेव जहि शात्रवान्॥ १०॥

श्रीभगवानुवाच। यदि शक्तिर्न वः काचिद्विभर्त्तुं मामकं बलम्।
अहमेतान् हनिष्यामि युष्मत्तेजोऽर्द्धसंयुतः॥ ११॥

दुर्य्योधन उवाच। ततस्तथेति देवैस्तस्मो राजसत्तम।
अर्द्धमादाय सर्व्वेभ्यस्तेजसाभ्यधिकोऽभवत् ॥ १२ ॥ स तु देवो
बलेनासीत् सर्व्वेभ्यो बलवत्तरः। महादेव इति ख्यातस्ततः प्रभृति
शङ्करः ॥ १३ ॥ ततोऽब्रवीन्महादेवो धनुर्वाणधरस्त्वहम्। हनि-
ष्यामि रथेनाजौ तान् रिपून् वो दिवौकसः ॥ १४ ॥ ते यूयं मे
रथञ्चैव धनुर्वाणं तथैव च। पश्यध्वं यावदद्यैतान् पातयामि
महीतले ॥ १५ ॥

देवा ऊचुः। मूर्त्तिं सर्वां समाधाय त्रैलोक्यस्य ततस्ततः।
रथं ते कल्पयिष्यामो देवेश्वर महौजसम् ॥ १६ ॥ तथैव बुद्ध्या
विहितं विश्वकर्मकृतं महत्। ततो विबुधशार्दूलास्तं रथं सम-
कल्पयन् ॥ १७ ॥ विष्णुं सोमं हुताशञ्च तस्येषुं समकल्पयन्।
शृङ्गमग्निर्बभूवास्य भल्लः सोमो विशाम्पते। कुड्मलञ्चाभवद्विष्णु-
स्तस्मिन्निषुवरे तदा ॥ १८ ॥ वन्धुरं पृथिवीं देवीं विशालपुर-
मालिनीम्। सपर्वतवनद्वीपां चक्रुर्भूतधरां तदा ॥ १९ ॥ मन्दरः
पर्वतश्चाक्षं जङ्घा तस्य महानदी। दिशश्च प्रदिशश्चैव परिवारो
रथस्य ह ॥ २० ॥ ईषा नक्षत्रवंशश्च युगः कृतयुगोऽभवत्।
कूबरश्च रथस्यासीद्वासुकिर्भुजगोत्तमः ॥ २१ ॥ अपस्करमधिष्ठानं
हिमवान् विन्ध्यपर्वतः। उदयास्तावधिष्ठाने गिरी चक्रुः सुरो-
त्तमाः ॥ २२ ॥ समुद्रमक्षमसृजन् दानवालयमुत्तमम्। सप्तर्षि-
मण्डलञ्चैव रथस्यासीत्परिष्करः ॥ २३ ॥ गङ्गा सरस्वती सिन्धु-
र्धुरमाकाशमेव च। उपस्करो रथस्यासन्नापः सर्वाश्च निम्नगाः
॥ २४ ॥ अहोरात्राः कलाश्चैव काष्ठाश्च ऋतवस्तथा। अनुकर्षं
ग्रहा दीप्ता वरूथश्चापि तारकाः ॥ २५ ॥ धर्मार्थकामसंयुक्तं
त्रिवेणुं दारुबन्धनम्। ओषधीर्वीरुधस्तत्र नानापुष्पफलोपगाः
॥ २६ ॥ सूर्य्याचन्द्रमसौ कृत्वा चक्रे रथवरोत्तमे। पक्षौ पूर्वा
परौ तत्र कृते रात्र्यहनी शुभे ॥ २७ ॥ दशनागपतीनीषां धृत-

राश्चमुखान् दृढ़ान्। द्यां युगं युगचर्माणि संवर्त्तकबलाहकान्।
धम्मयां धृतिञ्च मेधाञ्च स्थितिं सन्नतिमेव च॥ २८॥ ग्रहनक्षत्र-
ताराभिश्चर्म चित्रं नभस्तलम्। सुराम्बुप्रेतवित्तानां पतीन्लोके-
श्वरान् हयान्॥ २९॥ कालपृष्ठोऽथ नहुषः कर्कोटकधनञ्जयौ।
इतरे चाभवन्नागा हयानां वालबन्धनाः॥ ३०॥ दिशश्च प्रदिश-
श्चैव रश्मयो रथवाजिनाम्। वषट्कारः प्रतोदोऽभूत् गायत्री
शीर्षबन्धनी॥ ३१॥ सिनीवालीमनुमतिं कुहूं राकाञ्च सुव्रताम्।
योक्त्राणि चक्रुर्वाहानां रोहकांस्तत्र कण्टकान्॥ ३२॥ कर्म सत्यं
तपोऽर्थश्च विहितास्तत्र रश्मयः। अधिष्ठानं मनश्चासीत् परि-
रथ्या सरस्वती॥ ३३॥ नानावर्णाश्च चित्राश्च पताकाः पवने-
रिताः। विद्युदिन्द्रधनुर्नद्धं रथं दीप्तं व्यदीपयन्॥ ३४॥ यो
यज्ञे विहितः पूर्वमीशानस्य महात्मनः। सम्वत्सरो धनुस्तद्वै
सावित्री ज्या महास्वना॥ ३५॥ दिव्यञ्च वर्म विहितं महार्हं
रत्नभूषितम्। अभेद्यं विरजस्कं वै कालचक्रबहिष्कृतम्॥ ३६॥
ध्वजयष्टिरभून्मेरुः श्रीमान् कनकपर्वतः। पताकाश्चाभवन्मेघा-
स्तड़िद्भिः समलङ्कृताः॥ ३७॥ रेजुरध्वर्य्युमध्यस्था ज्वलन्त इव
पावकाः। क्लृप्तन्तु तं रथं दृष्ट्वा विस्मिता देवताभवन्॥ ३८॥
सर्वलोकस्य तेजांसि दृष्ट्वैकस्थानि मारिष। युक्तं निवेदयामासु-
र्देवास्तस्मै महात्मने॥ ३९॥ एवं तस्मिन् महाराज कल्पिते
रथसत्तमे। देवैर्मनुजशार्दूल द्विषतामभिमर्द्दने॥ ४०॥ स्वान्या-
युधानि दिव्यानि न्यदधात् शङ्करो रथे। ध्वजयष्टिं वियत् कृत्वा
स्थापयामास गोवृषम्॥ ४१॥ ब्रह्मदण्डः कालदण्डो रुद्रदण्ड-
स्तथा ज्वरः। परिष्कन्दा रथस्यासन् सर्वतोदिशमुद्यताः॥ ४२॥
अथर्वाङ्गिरसावास्तां चक्ररक्षौ महात्मनः। ऋग्वेदः सामवेदश्च
पुराणञ्च पुरःसराः॥ ४३॥ इतिहासयजुर्वेदौ पृष्ठरक्षौ बभूवतुः।
दिव्या वाचश्च दिव्याश्च परिपार्श्वचराः स्थिताः॥ ४४॥ स्तोत्रा-

दयश्च राजेन्द्र वषट्कारस्तथैव च। ओङ्कारश्च मुखे राजन्नति-
शोभाकरोऽभवत् ॥ ४५ ॥ विचित्रमृतुभिः षड्भिः कृत्वा संवत्-
सरं धनुः। छायामेवात्मनश्चक्रे धनुर्ज्यामक्षयां रणे ॥ ४६ ॥
कालो हि भगवान्रुद्रस्तस्य संवत्सरो धनुः। तस्माद्रौद्री काल-
रात्रिर्ज्या कृता धनुषोऽजरा ॥ ४७ ॥ इषुश्चाप्यभवद्विष्णुर्ज्वलनः
सोम एव च। अग्नीषोमं जगत् कृत्स्नं वैष्णवञ्चोच्यते जगत्
॥ ४८ ॥ विष्णुश्चात्मा भगवतो भवस्यामिततेजसः। तस्माद्धनु-
र्ज्यासंस्पर्शं न विषेहुर्हरस्य ते ॥ ४९ ॥ तस्मिन् शरे तिग्ममन्यु-
र्मुमोचाविषहं प्रभुः। भृग्वङ्गिरोमन्युभवं क्रोधाग्निमतिदुःसहम्
॥ ५० ॥ स नीललोहितो धूम्रः कृत्तिवासा भयङ्करः। आदित्या
युतसङ्काशस्तेजोज्वालावृतोऽज्वलत् ॥५१॥ दुश्च्यावश्च्यावनो जेता
हन्ता ब्रह्मद्विषां हरः। नित्यं त्राता च हन्ता च धर्माधर्माश्रिता-
न्नरान् ॥ ५२ ॥ प्रमाथिभिर्भीमबलैर्भीमरूपैर्मनोजवैः। विभाति
भगवान् स्थाणुस्तैरेवात्मगुणैर्वृतः ॥ ५३ ॥ तस्याङ्गानि समा-
श्रित्य स्थितं विश्वमिदं जगत्। जङ्गमाजङ्गमं राजन् शुशुभेऽद्भुत-
दर्शनम् ॥ ५४ ॥ दृष्ट्वा तन्तु रथं युक्तं कवची स शरासनी।
बाणमादाय तं दिव्यं सोमविष्ण्वग्निसम्भवम् ॥ ५५ ॥ तस्य राजं-
स्तदा देवाः कल्पयाञ्चक्रिरे प्रभोः। पुण्यगन्धवहं राजन् श्वसनं
देवसत्तमम् ॥ ५६ ॥ तमास्थाय महादेवस्त्रासयन् दैवतानपि।
आरुरोह तदा यत्तः कम्पयन्निव मेदिनीम् ॥ ५७ ॥ तमारुरुक्षुं
देवेशं तुष्टुवुः परमर्षयः। गन्धर्वा देवसङ्घाश्च तथैवाप्सरसांगणाः
॥ ५८ ॥ ब्रह्मर्षिभिस्तूयमानो वन्द्यमानश्च वन्दिभिः। तथैवाप्स-
रसांवृन्दैर्नृत्यद्भिर्नृत्यकोविदैः ॥ ५९ ॥ स शोभमानो वरदः
खड्गी बाणी शरासनी। हसन्निवाब्रवीद्देवान् सारथिः को
भविष्यति ॥ ६० ॥ तमब्रुवन् देवगणा यं भवान् संनियोक्ष्यते।
स भविष्यति देवेश सारथिस्ते न संशयः ॥ ६१ ॥ तानब्रवीत्

पुनर्द्देवो मत्तः श्रेष्ठतरो हि यः। तं सारथिं कुरुध्वं मे स्वयं सञ्चिन्त्य मा चिरम् ॥ ६२ ॥ एतच्छ्रुत्वा ततो देवा वाक्यमुक्तं महात्मना। गत्वा पितामहं देवाः प्रसाद्येदं वचोऽब्रुवन् ॥ ६३ ॥ यथा त्वत्कथितं देव त्रिदशारिविनिग्रहे। तथा च कृतमस्माभिः प्रसन्नो नो वृषध्वजः ॥ ६४ ॥ रथश्च विहितोऽस्माभिर्विचित्रायुध संवृतः। सारथिन्तु न जानीमः कः स्यात्तस्मिन्रथोत्तमे ॥ ६५ ॥ तस्माद्विधीयतां कश्चित् सारथिर्द्देवसत्तमः। सफलां तां गिरं देव कर्त्तुमर्हसि नो विभो ॥ ६६ ॥ एवमस्मासु हि पुरा भगवन्नुक्तवानसि। हितं कर्त्तास्मि भवतामिति तत् कर्त्तुमर्हसि ॥ ६७ ॥ स देवयुक्तो रथसत्तमो नो दुराधरो द्रावणः शात्रवाणाम्। पिनाकपाणिर्विहितोऽत्र योद्धा विभीषयन् दानवानुद्यतोऽसौ ॥६८ तथैव वेदाश्चतुरो हयाग्र्या धरा सशैला च रथो महात्मनः। नक्षत्रवंशानुगतो वरूथी हरो योद्धा सारथिर्नाभिलक्ष्यः ॥ ६९ ॥ तत्र सारथिरेष्टव्यः सर्व्वैरेतैर्विशेषवान्। तत्प्रतिष्ठो रथो देव हरो योद्धा तथैव च। कवचानि सशस्त्राणि कार्मुकञ्च पितामह ॥ ७० ॥ त्वामृते सारथिं तत्र नान्यं पश्यामहे वयम्। त्वं हि सर्व्वगुणैर्युक्तो देवतेभ्योऽधिकः प्रभो ॥ ७१ ॥ स रथं तूर्णमारुह्य संयच्छ परमान् हयान्। जयाय त्रिदशेशानां वधाय त्रिदशद्विषाम् ॥ ७२ ॥ इति ते शिरसा नत्वा त्रिलोकेशं पितामहम्। देवाः प्रसादयामासुः सारथ्यायेति नः श्रुतम् ॥ ७३ ॥

पितामह उवाच। नात्र किञ्चिन्मृषा वाक्यं यदुक्तं विदिवौकसः। संयच्छामि हयानेष युध्यतो वै कपर्द्दिनः ॥ ७४ ॥ ततः स भगवान्देवो लोकस्रष्टा पितामहः। सारथ्ये कल्पितो देवैरीशानस्य महात्मनः ॥ ७५ ॥ तस्मिन्नारोहति क्षिप्रं स्यन्दने लोकपूजिते। शिरोभिरगमन् भूमिं ते हया वातरंहसः ॥ ७६ ॥ आरुह्य भगवान्देवो दीप्यमानः स्वतेजसा। अभीषून् हि प्रतो-

दश्च सज्ञग्राह पितामहः ॥ ७७ ॥ तत उत्थाप्य भगवान् तान्
हयाननिलोपमान् । बभाषे च तदा स्थाणुमारोहेति सुरोत्तमम्
॥ ७८ ॥ ततस्तमिषुमादाय विष्णुसोमाग्निसम्भवम् । आरुरोह
तदा स्थाणुर्धनुषा कम्पयन् परान् ॥ ७९ ॥ तमारूढन्तु देवेशं
तुष्टुवुः परमर्षयः । गन्धर्वा देवसङ्घाश्च तथैवाप्सरसां गणाः ॥८०॥
स शोभमानो वरदः खड्गी वाणी शरासनी । प्रदीपयन्रथे
तस्थौ त्रींल्लोकान् स्वेन तेजसा ॥ ८१ ॥ ततो भूयोऽब्रवीद्देवो
देवानिन्द्रपुरोगमान् । न हन्यादिति कर्त्तव्यो न शोको वः कथ-
ञ्चन ॥ ८२ ॥ हतानीत्येव जानीत वाणेनानेन चासुरान् । ते
देवाः सत्यमित्याहुर्निहता इति चाब्रुवन् ॥ ८३ ॥ न च तद्वचनं
मिथ्या यदाह भगवान् प्रभुः । इति सञ्चिन्त्य वै देवाः परां तुष्टि-
मवाप्नुवन् ॥ ८४ ॥ ततः प्रयातो देवेशः सर्वैर्देवगणैर्वृतः । रथेन
महता राजन्नुपमा यस्य नास्ति ह ॥ ८५ ॥ स्वैश्च पारिषदैर्देवः
पूज्यमानो महायशाः । नृत्यद्भिरपरैश्चैव मांसभक्षैर्दुरासदैः ।
धावमानैः समन्ताच्च तर्जमानैः परस्परम् ॥ ८६ ॥ ऋषयश्च महा-
भागास्तपोयुक्ता महागुणाः । आशंसुर्विजयं देवा महादेवस्य
सर्वशः ॥ ८७ ॥ एवं प्रयाते वरदे लोकानामभयङ्करे । तुष्ट-
मासीज्जगत् सर्वं देवताश्च नरोत्तम ॥ ८८ ॥ ऋषयस्तत्र देवेशं
स्तुवन्तो बहुभिः स्तवैः । तेजश्चास्य वर्द्धयन्तो राजन्नासन् पुनः
पुनः ॥ ८९ ॥ गन्धर्वाणां सहस्राणि प्रयुतान्यर्बुदानि च । वाद-
यन्ति प्रयाणेऽस्य वाद्यानि विविधानि च ॥ ९० ॥ ततोऽधिरूढे
वरदे प्रयाते चासुरान् प्रति । साधु साध्विति विश्वेशः स्मयमानो-
ऽभ्यभाषत ॥ ९१ ॥ याहि देव यतो दैत्याश्चोदयाश्वानतन्द्रितः ।
पश्य बाह्वोर्बलं मेऽद्य निघ्नतः शात्रवान्रणे ॥ ९२ ॥ ततोऽश्वां-
श्चोदयामास मनोमारुतरंहसः । येन तत्त्रिपुरं राजन् दैत्यदानव-
रक्षितम् ॥ ९३ ॥ पिबद्भिरिव चाकाशं तैर्हयैर्लोकपूजितैः ।

जगाम भगवान् क्षिप्रं जयाय त्रिदिवौकसाम् ॥ ९४ ॥ प्रयाते रथमास्थाय त्रिपुराभिमुखे भवे। ननाद सुमहानादमृषभः पूरयन् दिशः ॥ ९५ ॥ ऋषभस्यास्य निनदं श्रुत्वा भयकरं महत्। विनाशमगमंस्तत्र तारकाः सुरशत्रवः ॥ ९६ ॥ अपरेऽवस्थितास्तत्र युद्धायाभिमुखास्तदा। ततः स्थाणुर्महाराज शूलधृक् क्रोधमूर्च्छितः ॥ ९७ ॥ त्रस्तानि सर्व्वभूतानि त्रैलोक्यं भूः प्रकम्पते। निमित्तानि च घोराणि तत्रासन्दधतः शरम् ॥ ९८ ॥ तस्मिन् सोमाग्निविष्णूनां क्षोभेण ब्रह्मरुद्रयोः। स रथो धनुषः क्षोभादतीव ह्यवसीदति ॥ ९९ ॥ ततो नारायणस्तस्माच्छरभागाद्विनिःसृतः। वृषरूपं समास्थाय उज्जहार महारथम् ॥ १०० ॥ सीदमाने रथे चैव नर्द्दमानेषु शत्रुषु। स संभ्रमात्तु भगवान् नादं चक्रे महाबलः ॥१०१॥ वृषभस्यास्थितो मूर्द्ध्नि हयपृष्ठे च मानद। तदा स भगवान् रुद्रो निरैक्षद्दानवं पुरम् ॥ १०२ ॥ वृषभस्यास्थितो रुद्रो हयस्य च नरोत्तम। स्तनांस्तदा पातयत खुरांश्चैव द्विधाकरोत् ॥ १०३ ॥ ततः प्रभृति भद्रन्ते गवां द्वैधीकृताः खुराः। हयानाञ्च स्तना राजंस्तदाप्रभृति नाभवन्। पीड़ितानां बलवता रुद्रेणाद्भुतकर्म्मणा ॥ १०४ ॥ तथाधिज्यं धनुः कृत्वा सर्व्वः सन्धाय तं शरम्। युक्त्वा पाशुपतास्त्रेण त्रिपुरं समचिन्तयत् ॥ १०५ ॥ तस्मिन् स्थिते महाराज रुद्रे विधृतकार्म्मुके। पुराणि तेन कालेन जग्मुरेवैकतां तदा ॥ १०६ ॥ एकीभावं गते चैव त्रिपुरत्वमुपागते। बभूव तुमुलो हर्षो देवतानां महात्मनाम् ॥ १०७ ॥ ततो देवगणाः सर्व्वे सिद्धाश्च परमर्षयः। जयेति वाचो मुमुचुः संस्तुवन्तो महेश्वरम् ॥ १०८ ॥ ततोऽग्रतः प्रादुरभूत्त्रिपुरं जघ्नुषोऽसुरान्। अनिर्द्देश्योग्रवपुषो देवस्यासह्यतेजसः ॥ १०९ ॥ स तद्विकृष्य भगवान् दिव्यं लोकेश्वरो धनुः। त्रैलोक्यसारं तमिषुं मुमोच त्रिपुरं प्रति ॥ ११० ॥ हतस्तद्वै महाभाग तस्मिन्निषु-

वरे तदा। महानार्त्तस्वरो ह्यासीत् पुराणां पततां भुवि। तत् सासुरगणं दग्ध्वा प्राक्षिपत् पश्चिमार्णवे ॥ १११ ॥ एवं तत्त्रिपुरं दग्धं दानवाश्चाप्यशेषिताः। महेश्वरेण क्रुद्धेन त्रैलोक्यस्य हितैषिणा ॥ ११२ ॥ स चात्मक्रोधजो वह्निर्हाहेत्युक्त्वा निवारितः। मा कार्षीर्भस्मसाल्लोकानिति त्र्यक्षोऽब्रवीच्च तम् ॥ ११३ ॥ ततः प्रकृतिमापन्ना देवा लोकास्तथर्षयः। तुष्टुवुर्वाग्भिरग्र्याभिः स्थाणुमप्रतिमौजसम् ॥ ११४ ॥ तेऽनुज्ञाता भगवता जग्मुः सर्वे यथागतम्। कृतकामाः प्रयत्नेन प्रजापतिमुखाः सुराः ॥ ११५ ॥ एवं स भगवान् देवो लोकस्रष्टा महेश्वरः। देवासुरगणाध्यक्षो लोकानां विदधे शिवम् ॥ ११६ ॥ यथैव भगवान् ब्रह्मा लोकधाता पितामहः। सारथ्यमकरोत्तत्र रुद्रस्य परमोऽव्ययः ॥ ११७ ॥ तथा भवानपि क्षिप्रं रुद्रस्येव पितामहः। संयच्छतु हयानस्य राधेयस्य महात्मनः ॥ ११८ ॥ त्वं हि कृष्णाच्च कर्णाच्च फाल्गुनाच्च विशेषतः। विशिष्टो राजशार्दूल नास्ति तत्र विचारणा ॥ ११९ ॥ युद्धे ह्ययं रुद्रकल्पस्त्वञ्च ब्रह्मसमो नये। तस्माच्छक्तौ युवां जेतुं मच्छत्रूंस्तानिवासुरान् ॥ १२० ॥ यथा शल्याद्य कर्णोऽयं श्वेताश्वं कृष्णसारथिम्। प्रमथ्य हन्यात् कौन्तेयं तथा शी[illegible] विधीयताम् ॥ १२१ ॥ त्वयि कर्णस्य राज्यञ्च वयञ्चैव प्रतिष्ठिताः। विजयश्चैव संग्रामे संयच्छास्य हयोत्तमान् ॥ १२२ ॥ इमञ्चाप्यपरं भूय इतिहासं निबोध मे। पितुर्मम सकाशे यं ब्राह्मणाः प्राह धर्मवित् ॥ १२३ ॥ श्रुत्वा वै तदचर्चास्तत्तं हेतुकार्य्यार्थसंहितम्। कुरु शल्य विनिश्चित्य मा भूदत्र विचारणा ॥ १२४ ॥ भार्गवाणां कुले जातो जमदग्निर्महातपाः। तस्य रामेतिविख्यातः पुत्रस्तेजोगुणान्वितः ॥ १२५ ॥ स तीव्रं तप आस्थाय प्रसादयितवान् भवम्। अस्त्रहेतोः प्रसन्नात्मा नियतः संयतेन्द्रियः ॥१२६॥ तस्य तुष्टो महादेवो भक्त्या च प्रशमेन च। हृद्गतञ्चास्य विज्ञाय दर्शयामास शङ्करः ॥ १२७ ॥

महादेव उवाच । राम तुष्टोऽस्मि भद्रन्ते विदितं मे तवेप्सितम् । कुरुष्व पूतमात्मानं सर्व्वमेतदवाप्स्यसि ॥१२८॥ दास्यामि ते तदस्त्राणि तदा पूतो भविष्यसि । अपात्रमसमर्थञ्च दहन्त्यस्त्राणि भार्गव ॥१२९॥ इत्युक्तो जामदग्न्यस्तु देवदेवेन शूलिना । प्रत्युवाच महात्मानं शिरसावनतः प्रभुम् ॥ १३० ॥ यदा जानाति देवेशः पात्रं मामस्त्रधारणे । तदा शुश्रूषतेऽस्त्राणि भवान्मे दातुमर्हति ॥ १३१ ॥

दुर्य्योधन उवाच । ततः स तपसा चैव दमेन नियमेन च । पूजोपहारबलिभिर्होममन्त्रपुरस्कृतैः । आराधयितवान् सर्व्वं बहून् वर्षगणांस्तदा ॥ १३२ ॥ प्रसन्नश्च महादेवो भार्गवस्य महात्मनः । अब्रवीत्तस्य बहुशो गुणान् देव्याः समीपतः ॥ १३३ ॥ भक्तिमानेष सततं मयि रामो दृढव्रतः । एवं तस्य गुणान् प्रीतो बहुशोऽकथयत् प्रभुः । देवतानां पितॄणाञ्च समक्षमरिसूदन ॥ १३४ ॥ एतस्मिन्नेव काले तु दैत्या ह्यासन् महाबलाः । तैस्तदा दर्पमोहान्धैरबाध्यन्त दिवौकसः ॥ १३५ ॥ ततः सम्भूय विबुधास्तान् हन्तुं कृतनिश्चयाः । चक्रुः शत्रुबधे यत्नं न शेकुर्जेतुमेव तान् ॥ १३६ ॥ अभिगम्य ततो देवा महेश्वरमुमापतिम् । प्रासादयन्त ते भक्त्या जहि शत्रुगणानिति ॥ १३७ ॥ प्रतिज्ञाय ततो देवो देवतानां रिपुक्षयम् । रामं भार्गवमाहूय सोऽभ्यभाषत शङ्करः ॥ १३७ ॥

रुद्र उवाच । रिपून् भार्गव देवानां जहि सर्व्वान् समागतान् । लोकानां हितकामार्थं मत्प्रीत्यर्थं तथैव च । एवमुक्तः प्रत्युवाच त्र्यम्बकं वरदं प्रभुम् ॥ १३९ ॥

राम उवाच । का शक्तिर्मम देवेश अकृतास्त्रस्य संयुगे । निहन्तुं दानवान् सर्व्वान् कृतास्त्रान् युद्धदुर्म्मदान् ॥ १४० ॥

महेश्वर उवाच । गच्छ त्वं मदनुज्ञातो निहनिष्यसि शात्र-

वाम् । विजित्य च रिपून् सर्वान् गुणान् प्राप्स्यसि पुष्कलान् ॥१४१
एतच्छ्रुत्वा च वचनं प्रतिगृह्य च सर्वशः । रामः कृतस्वस्त्ययनः
प्रययौ दानवान् प्रति ॥ १४२ ॥ अब्रवीद्देवशत्रूंस्तान् मदर्प-
बलान्वितान् । मम युद्धं प्रयच्छध्वं दैत्या युद्धमदोत्कटाः ॥१४३॥
प्रेषितो देवदेवेन वो विजेतुं महासुरान् । इत्युक्ता भार्गवेणाथ
दैत्या योद्धुं प्रचक्रमुः ॥ १४४ ॥ स तान्निहत्य समरे दैत्यान्
भार्गवनन्दनः । वज्राशनिसमस्पर्शैः प्रहारैरेव भार्गवः ॥ १४५ ॥
स दानवैः क्षततनुर्जामदग्न्यो द्विजोत्तमः । संस्पृष्टः स्थाणुना
सद्यो निर्व्रणः समजायत ॥ १४६ ॥ प्रीतश्च भगवान्देवः कर्मणा
तेन तस्य वै । वरान् प्रादाद्बहुविधान् भार्गवाय महात्मने ॥१४७॥
उक्तश्च देवदेवेन प्रीतियुक्तेन शूलिना ॥ १४८ ॥ निपातात्तव
शस्त्राणां शरीरे याभवद्रुजा । तया ते मानुषं कर्म व्यपोढं
भृगुनन्दन । गृहाणास्त्राणि दिव्यानि मत्सकाशात् यथेप्सि-
तम् ॥ १४९ ॥

दुर्योधन उवाच । ततोऽस्त्राणि समस्तानि वरांश्च मनसेप्-
सितान् । लब्ध्वा बहुविधान्रामः प्रणम्य शिरसा शि[illegible] ॥ १५० ॥
अनुज्ञां प्राप्य देवेशाज्जगाम स महातपाः । एवमेतत् पुरावृत्तं
तदा कथितवानृषिः ॥ १५१ ॥ भार्गवोऽप्यददत् सर्वं धनुर्वेदं महा-
त्मने । कर्णाय पुरुषव्याघ्र सुप्रीतेनान्तरात्मना ॥ १५२ ॥ वृजिनं
हि भवेत् किञ्चिद्यदि कर्णस्य पार्थिव । नास्मै ह्यस्त्राणि दिव्यानि
प्रादास्यद्भृगुनन्दनः ॥ १५३ ॥ नापि सूतकुले जातं कर्णं मन्ये
कथञ्चन । देवपुत्रमहं मन्ये क्षत्रियाणां कुलोद्भवम् ॥ १५४ ॥
विसृष्टमवबोधार्थं कुलस्येति मतिर्मम । सर्वथा न ह्ययं शल्य
कर्णः सूतकुलोद्भवः ॥ १५५ ॥ सकुण्डलं सकवचं दीर्घबाहुं
महारथम् । कथमादित्यसदृशं मृगी व्याघ्रं जनिष्यति ॥ १५६ ॥
यथा ह्यस्य भुजौ पीनौ नागराजकरोपमौ । वक्षः पश्य विशालञ्च

सर्वशत्रुनिवर्हणम् ॥ १५७ ॥ न ह्येष प्राकृतः कश्चित् कर्णो वैकर्त्तनो नृप । महात्मा ह्येष राजेन्द्र रामशिष्यः प्रतापवान् ॥१५८॥

इति कर्णपर्वणि त्रिपुरवधोपाख्याने चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

दुर्य्योधन उवाच । एवं स भगवान् देवः सर्वलोकपितामहः । सारथ्यमकरोत्तत्र ब्रह्मा रुद्रोऽभवद्रथी ॥ १ ॥ रथिनोऽभ्यधिको वीरः कर्त्तव्यो रथसारथिः । तस्मात्त्वं पुरुषव्याघ्र नियच्छ तुरगान् युधि ॥ २ ॥ यथा देवगणैस्तत्र वृतो यत्नात् पितामहः । तथास्माभिर्भवान् यत्नात् कर्णादभ्यधिको वृतः ॥ ३ ॥ यथा देवैर्महाराज ईश्वरादधिको वृतः । तथा भवानपि क्षिप्रं रुद्रस्येव पितामहः । नियच्छ तुरगान् युद्धे राधेयस्य महाद्युते ॥ ४ ॥

शल्य उवाच । मयाप्येतन्नरश्रेष्ठ बहुशोऽमरसिंहयोः । कथ्यमानं श्रुतं दिव्यमाख्यानमतिमानुषम् ॥ ५ ॥ यथा च चक्रे सारथ्यं भवस्य प्रपितामहः । यथासुराश्च निहता इषुणैकेन भारत ॥ ६ ॥ कृष्णस्य चापि विदितं सर्वमेतत् पुरा ह्यभूत् । यथा पितामहो जज्ञे भगवान् सारथिस्तदा । अनागतमतिक्रान्तं वेद कृष्णोऽपि तत्त्वतः ॥ ७ ॥ एतदर्थं विदित्वा तु सारथ्यमुपजग्मिवान् । स्वायम्भुरिव रुद्रस्य कृष्णः पार्थस्य भारत ॥ ८ ॥ यदि हन्याच्च कौन्तेयं सूतपुत्रः कथञ्चन । दृष्ट्वा विनिहतं पार्थं स्वयं योत्स्यति केशवः । शङ्खचक्रगदापाणिर्धक्ष्यते तव वाहिनीम् ॥ ९ ॥ न चापि तस्य क्रुद्धस्य वार्ष्णेयस्य महात्मनः । स्थास्यते प्रत्यनीकेषु कश्चिदत्र नृपस्तव ॥ १० ॥

सञ्जय उवाच । तं तथा भाषमाणन्तु मद्रराजमरिन्दमः । प्रत्युवाच महाबाहुरदीनात्मा सुतस्तव ॥ ११ ॥ मावमंस्था महाबाहो कर्णं वैकर्त्तनं रणे । सर्वशस्त्रभृतां श्रेष्ठं सर्वशास्त्रार्थपारगम् ॥ १२ ॥ यस्य ज्यातलनिर्घोषं श्रुत्वा भयङ्करं महत् । पाण्ड-

वेयानि सैन्यानि विद्रवन्ति दिशो दश ॥ १३ ॥ प्रत्यक्षं ते महा-
बाहो यथा रात्रौ घटोत्कचः। मायाशतविकुर्वाणो हतो माया-
पुरस्कृतः ॥ १४ ॥ न चातिष्ठत बीभत्सुः प्रत्यनीके कथञ्चन।
एतांश्च दिवसान् सर्वान् भयेन महता वृतः ॥ १५ ॥ भीमसेनश्च
बलवान् धनुष्कोट्याभिचोदितः उक्तश्चासंज्ञया राजन् मूढ़
औदरिकेति च ॥ १६ ॥ माद्रीपुत्रौ तथा शूरौ येन जित्वा महा-
रणे। कमप्यर्थं पुरस्कृत्य न हतौ युधि मारिष ॥ १७ ॥ येन
वृष्णिप्रवीरस्तु सात्यकिः सात्वतां वरः। निर्ज्जित्य समरे वीरो
विरथश्च तथा कृतः ॥ १८ ॥ सृञ्जयाश्चेतरे सर्वे धृष्टद्युम्नपुरो-
गमाः। असकृन्निर्ज्जिता सङ्ख्ये स्मयमानेन संयुगे ॥ १९ ॥ तं
कथं पाण्डवा युद्धे विजेष्यन्ति महारथम्। यो हन्यात् समरे
क्रुद्धो वज्रहस्तं पुरन्दरम् ॥२०॥ त्वञ्च सर्वास्त्रविद्वीर सर्वविद्यासु
पारगः। बाहुवीर्य्येण ते तुल्यः पृथिव्यां नास्ति कश्चन ॥ २१ ॥
त्वं शल्यभूतः शत्रूणामविषह्यः पराक्रमे। अतस्त्वमुच्यसे राजन्
शल्य इत्यरिसूदन ॥ २२ ॥ तव बाहुबलं प्राप्य न शेकुः सर्व-
सात्वताः। तव बाहुबलाद्राजन् किन्नु कृष्णो बलाधिकः ॥ २३ ॥
यथा हि कृष्णेन बलं धार्य्यं वै फाल्गुने हते। तथा कर्णात्ययी-
भावे त्वया धार्य्यं महद्बलम् ॥ २४ ॥ किमर्थं समरे सैन्यं वासु-
देवो न्यवारयत्। किमर्थञ्च भवान् सैन्यं न हनिष्यति मारिष
॥ २५ ॥ त्वत्कृते पदवीं गन्तुमिच्छेयं युधि मारिष। सोद-
र्य्याणाञ्च वीराणां सर्वेषाञ्च महीक्षिताम् ॥ २६ ॥

शल्य उवाच। यन्मां ब्रवीषि गान्धारे अग्रे सैन्यस्य मानद।
विशिष्टं देवकीपुत्रात् प्रीतिमानस्म्यहं त्वयि ॥ २७ ॥ एष सारथ्य-
मातिष्ठे राधेयस्य यशस्विनः। युध्यतः पाण्डवाग्र्येण यथा त्वं
वीर मन्यसे ॥ २८ ॥ समयश्च हि मे वीर कश्चिद्वैकर्त्तनं प्रति।
उत्सृजेयं यथाश्रद्धमहं वाचोऽस्य सन्निधौ ॥ २९ ॥

सञ्जय उवाच। तथेति राजन् पुत्रस्ते सह कर्णेन मारिष। अब्रवीन्मद्रराजानं सर्व्वक्षत्रस्य सन्निधौ ॥ ३० ॥ सारथ्यस्याभ्युपगमात् शल्येनाश्वासितस्तदा। दुर्य्योधनस्तदा हृष्टः कर्णं समभिषस्वजे ॥ ३१ ॥ अब्रवीच्च पुनः कर्णं स्तूयमानः सुतस्तव। जहि पार्थान्रणे सर्व्वान् महेन्द्रो दानवानिव ॥ ३२ ॥ स शल्येनाभ्युपगते हयानां संनियच्छने। कर्णो हृष्टमना भूयो दुर्य्योधनमभाषत ॥ ३३ ॥ नातिहृष्टमना ह्येष मद्रराजोऽभिभाषते। राजन्मधुरया वाचा पुनरेवं ब्रवीहि वै ॥ ३४ ॥ ततो राजा महाप्राज्ञः सर्व्वार्थकुशलो बली। दुर्य्योधनोऽब्रवीच्छल्यं मद्रराजं महीपतिम्। पूरयन्निव घोषेण मेघगम्भीरया गिरा ॥ ३५ ॥ शल्य कर्णोऽर्ज्जुनेनाद्य योद्धव्यमिति मन्यते। तस्य त्वं पुरुषव्याघ्र नियच्छ तुरगान् युधि ॥ ३६ ॥ कर्णो हत्वेतरान् सर्व्वान् फाल्गुनं हन्तुमिच्छति। अस्याभीषुग्रहे राजन् प्रयाचे त्वां पुनः पुनः ॥ ३७ ॥ पार्थस्य सचिवः कृष्णो यथाभीषुग्रहो वरः। तथा त्वमपि राधेयं सर्व्वतः परिपालय ॥ ३८ ॥

सञ्जय उवाच। ततः शल्यः परिष्वज्य सुतं ते वाक्यमब्रवीत्। दुर्य्योधनममित्रघ्नं प्रीतो मद्राधिपस्तदा ॥ ३९ ॥

शल्य उवाच। एवञ्चेन्मन्यसे राजन् गान्धारे प्रियदर्शन। तस्मात्ते यत् प्रियं किञ्चित् तत् सर्व्वं करवाण्यहम् ॥४०॥ यत्रास्मि भरतश्रेष्ठ योग्यः कर्म्मणि कर्हिचित्। तत्र सर्व्वात्मना युक्तो वक्ष्ये कार्य्यधुरं तव ॥ ४१ ॥ यत्तु कर्णमहं ब्रूयां हितकामः प्रियाप्रिये। मम तत् क्षमतां सर्व्वं भवान् कर्णश्च सर्व्वशः ॥ ४२ ॥

कर्ण उवाच। ईशानस्य यथा ब्रह्मा यथा पार्थस्य केशवः। तथा नित्यं हिते युक्तो मद्रराज भवस्व नः ॥ ४३ ॥

शल्य उवाच। आत्मनिन्दात्मपूजा च परनिन्दा परस्तवः। अनाचरितमार्य्याणां वृत्तमेतच्चतुर्व्विधम् ॥ ४४ ॥ यत्तु विद्वन् प्रव-

ष्यामि प्रत्ययार्थमहं तव। आत्मनः स्तवसंयुक्तं सन्निबोध यथा तथम् ॥ ४५ ॥ अहं शक्रस्य सारथ्ये योग्यो मातलिवत् प्रभो। अप्रमादप्रयोगाच्च ज्ञानविद्याचिकित्सितैः ॥ ४६ ॥ ततः पार्थेन संग्रामे युध्यमानस्य तेऽनघ। वाहयिष्यामि तुरगान् विज्वरो भव सूतज ॥ ४७ ॥

इति कर्णपर्वणि शल्यस्य कर्णसारथ्यस्वीकारे पञ्चत्रिंशोऽध्यायः॥३५

---

दुर्य्योधन उवाच। अयं ते कर्ण सारथ्यं मद्रराजः करिष्यति। कृष्णादप्यधिको यन्ता देवेशस्येव मातलिः ॥ १ ॥ यथा हरि-हयैर्युक्तं संगृह्णाति स मातलिः। शल्यस्तथा तवाद्यायं संयन्ता रथवाजिनाम् ॥ २ ॥ योधे त्वयि रथस्थे च मद्रराजे च सारथौ। रथश्रेष्ठो ध्रुवं सङ्ख्ये पार्थानभिभविष्यति ॥ ३ ॥

सञ्जय उवाच। ततो दुर्य्योधनो भूयो मद्रराजं तरस्विनम्। उवाच राजन् संग्रामे व्युषिते पर्य्युपस्थिते ॥ ४ ॥ कर्णस्य यच्छ संग्रामे मद्रराज हयोत्तमान्। त्वयाभिगुप्तो राधेयो विजेष्यति धनञ्जयम्। इत्युक्तो रथमास्थाय तथेति प्राह भारत ॥ ५ ॥ शल्येऽभ्युपगते कर्णः सारथिं सुमनाब्रवीत्। त्वं सूत स्यन्दनं मह्यं कल्पयेत्यसकृत्त्वरन् ॥ ६ ॥ ततो जैत्रं रथवरं गन्धर्वनगरोपमम्। विधिवत् कल्पितं भद्रं जयेत्युक्त्वा न्यवेदयत् ॥ ७ ॥ तं रथं रथिनां श्रेष्ठः कर्णोऽभ्यर्च्य यथाविधि। सम्पादितं ब्रह्मविदा पूर्व्वमेव पुरोधसा ॥ ८ ॥ कृत्वा प्रदक्षिणं यत्नादुपस्थाय च भास्करम्। समीपस्थं मद्रराजमारोह त्वमथाब्रवीत् ॥ ९ ॥ ततः कर्णस्य दुर्द्धर्षं स्यन्दनप्रवरं महत्। आरुरोह महातेजाः शल्यः सिंह इवाचलम् ॥ १० ॥ ततः शल्यास्थितं दृष्ट्वा कर्णः स्वरथ-मुत्तमम्। अध्यतिष्ठद्यथाम्भोदं विद्युत्वन्तं दिवाकरः ॥ ११ ॥

तावेकरथमारूढ़ावादित्याग्निसमत्विषौ । व्यभ्राजेतां यथा मेघं सूर्य्याग्नी सहितौ दिवि ॥ १२ ॥ संस्तूयमानौ तौ वीरौ तदास्तां द्युतिमत्तमौ । ऋत्विक्सदस्यैरिन्द्राग्नी स्तूयमानाविवाध्वरे ॥१३॥ स शल्यसंगृहीताश्वे रथे कर्णः स्थितोऽभवत् । धनुर्विस्फारयन् घोरं परिवेषीव भास्करः ॥ १४ ॥ आस्थितः स रथश्रेष्ठं कर्णः शरगभस्तिमान् । प्रबभौ पुरुषव्याघ्रो मन्दरस्थ इवांशुमान् ॥ १५ ॥ तं रथस्थं महाबाहुं युद्धायामिततेजसम् । दुर्य्योधनस्तु राधेय-मिदं वचनमब्रवीत् ॥ १६ ॥ अकृतं द्रोणभीष्माभ्यां दुष्करं कर्म संयुगे । कुरुष्वाधिरथे वीर मिषतां सर्वधन्विनाम् ॥ १७ ॥ मनोगतं मम ह्यासीत् भीष्मद्रोणौ महारथौ । अर्ज्जुनं भीमसेनञ्च निहन्ताराविति ध्रुवम् ॥ १८ ॥ ताभ्यां यदकृतं वीर वीरकर्म महामृधे । तत् कर्म कुरु राधेय वज्रपाणिरिवापरः ॥ १९ ॥ गृहाण धर्मराजं वा जहि वा त्वं धनञ्जयम् । भीमसेनञ्च राधेय माद्रीपुत्रौ यमावपि ॥ २० ॥ जयश्च तेऽस्तु भद्रं ते प्रयाहि पुरुषर्षभ । पाण्डुपुत्रस्य सैन्यानि कुरु सर्वाणि भस्मसात् ॥ २१ ॥ ततस्तूर्य्यसहस्राणि भेरीणामयुतानि च । वाद्यमानान्यरोचन्त मेघ-शब्दा यथा दिवि ॥ २२ ॥ प्रतिगृह्य तु तद्वाक्यं रथस्थो रथ-सत्तमः । अभ्यभाषत राधेयः शल्यं युद्धविशारदम् ॥ २३ ॥ चोदयाश्वान्महाबाहो यावद्धन्मि धनञ्जयम् । भीमसेनं यमौ चोभौ राजानञ्च युधिष्ठिरम् ॥ २४ ॥ अद्य पश्यतु मे शल्य बाहुवीर्य्यं धनञ्जयः । अस्यतः कङ्कपत्राणां सहस्राणि शतानि च ॥ २५ ॥ अद्य क्षेप्स्याम्यहं शल्य शरान् परमतेजनान् । पाण्डवानां विना-शाय दुर्य्योधनजयाय च ॥ २६ ॥

शल्य उवाच । सूतपुत्र कथं नु त्वं पाण्डवानवमन्यसे । सर्वास्त्र-ज्ञान्महेष्वासान् सर्वानेव महाबलान् ॥ २७ ॥ अनिवर्त्तिनो महा-भागान् अजय्यान् सत्यविक्रमान् । अपि सञ्जनयेयुर्ये भयं साक्षात्

शतक्रतोः ॥ २८ ॥ यदा श्रोष्यसि निर्घोषं विस्फूर्जितमिवाशनेः ।
राधेय गाण्डीवस्याजौ तदा नैवं वदिष्यसि ॥ २९ ॥ यदा द्रक्ष्यसि
संग्रामे धर्मपुत्रं यमौ तथा । शितैः पृषत्कैः कुर्वाणानभ्रच्छाया-
मिवाम्बरे ॥ ३१ ॥ अस्यतः क्षिण्वतश्चारींल्लघुहस्तान् दुरासदान् ।
पार्थिवानपि चान्यांस्त्वं तदा नैवं वदिष्यसि ॥ ३२ ॥

सञ्जय उवाच । अनादृत्य तु तद्वाक्यं मद्रराजेन भाषितम् ।
याहीत्येवाब्रवीत् कर्णो मद्रराजं तरस्विनम् ॥ ३३ ॥

इति कर्णपर्वणि कर्णशल्यसंवादे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

सञ्जय उवाच । दृष्ट्वा कर्णं महेष्वासं युयुत्सुं समवस्थितम् ।
चुक्रुशुः कुरवः सर्वे हृष्टरूपाः समन्ततः ॥ १ ॥ ततो दुन्दुभि-
निर्घोषैर्भेरीणां निनदेन च । बाणशब्दैश्च विविधैर्गर्ज्जितैश्च तर-
स्विनाम् । निर्ययुस्तावका युद्धे मृत्युं कृत्वा निवर्त्तनम् ॥ २ ॥
प्रयाते तु ततः कर्णे योधेषु मुदितेषु च । चचाल पृथिवी राजन्
ररास च सुविस्तरम् ॥ ३ ॥ निश्चरन्तो व्यदृश्यन्त सूर्यात् सप्त
महाग्रहाः । उल्कापाताश्च सञ्जज्ञुर्दिशां दाहास्तथैव च ॥ ४ ॥
शुष्काशन्यश्च सम्पेतुर्ववुर्वाताश्च भैरवाः ॥ ५ ॥ मृगपक्षिगणाश्चैव
पृतनां बहुशस्तव । अपसव्यं तदा चक्रुर्वेदयन्तो महाभयम् ॥ ६ ॥
प्रस्थितस्य च कर्णस्य निपेतुस्तुरगा भुवि । अस्थिवर्षञ्च पतित-
मन्तरीक्षाद्भयानकम् ॥ ७ ॥ जज्वलुश्चैव शस्त्राणि ध्वजाश्चैव
चकम्पिरे । अश्रूणि च व्यमुञ्चन्त वाहनानि विशाम्पते ॥ ८ ॥
एते चान्ये च बहव उत्पातास्तत्र दारुणाः । समुत्पेतुर्विनाशाय
कौरवाणां सुदारुणाः । न च तान् गणयामासुः सर्वे दैवेन
मोहिताः ॥ ९ ॥ प्रस्थितं सूतपुत्रञ्च जयेत्यूचुर्नराधिपाः । निर्जि-
तान् पाण्डवांश्चैव मेनिरे तत्र कौरवाः ॥ १० ॥ ततो रथस्थः

परवीरहन्ता भीष्मद्रोणावस्तवीर्य्यौ समीक्ष्य। समुज्ज्वलद्भास्कर-
पावकाभो वैकर्त्तनोऽसौ रथकुञ्जरो नृपः ॥ ११ ॥ स शल्यमाभाष्य
जगाद वाक्यं पार्थस्य कर्म्मातिमयं विचिन्त्य। मानेन दर्पेण विदह्य-
मानः क्रोधेन दीप्यन्निव निश्वसंश्च ॥ १२ ॥ नाहं महेन्द्रादपि
वज्रपाणेः क्रुद्धादपि भिम्यात्तधनू रथस्थः। दृष्ट्वा तु भीष्मप्रमुखान्
शयानानतीव मां ह्यस्थिरता जहाति ॥१३॥ महेन्द्रविष्णुप्रतिमा-
वनिन्दितौ रथाश्वनागप्रवरप्रमाथिनौ। अवध्यकल्पौ निहतौ यदा
परैस्ततो ममाप्यस्ति रणेऽद्य साध्वसम् ॥ १४ ॥ समीक्ष्य सङ्ख्ये-
ऽतिबलान्नराधिपान् ससूतमातङ्गरथान् परैर्हतान्। कथं न
सर्व्वानहितान् रणेऽवधीन्महास्त्रविद्ब्राह्मणपुङ्गवो गुरुः ॥ १५ ॥
स संस्मरन् द्रोणमहं महाहवे ब्रवीमि सत्यं कुरवो निबोधत। न
वो मदन्यः प्रसहेद्रणेऽर्ज्जुनं समागतं मृत्युमिवोग्ररूपिणम् ॥ १६ ॥
शिक्षाप्रसादश्च बलं धृतिश्च द्रोणे महास्त्राणि च सन्नतिश्च। स
चेदगान्मृत्युवशं महात्मा सर्व्वानन्यानातुरानद्य मन्ये ॥ १७ ॥ नेह
ध्रुवं किञ्चिदपि प्रचिन्तयन् विद्यां लोके कर्म्मणो नित्ययोगात्।
सूर्य्योदये को हि विमुक्तसंशयो भावं कुर्व्वीताद्य गुरौ निपातिते
॥ १८ ॥ न नूनमस्त्राणि बलं पराक्रमः क्रिया सुनीतं परमायु-
धानि वा। अलं मनुष्यस्य सुखाय वर्त्तितुं तथा हि युद्धे निहतः
परैर्गुरुः ॥ १९ ॥ हुताशनादित्यसमानतेजसं पराक्रमे विष्णुपुर-
न्दरोपमम्। नये बृहस्पत्युशनःसमं सदा न चैनमस्त्रं तदपात्
सुदुःसहम् ॥ २० ॥ संप्राक्रुष्टे रुदिते स्त्रीकुमारे पराभूते पौरुषे
धार्त्तराष्ट्रे। मया कृत्यमिति जानामि शल्य प्रयाहि तस्माद्विषता-
मनीकम् ॥ २१ ॥ यत्र राजा पाण्डवः सत्यसन्धो व्यवस्थितो भीम
सेनार्ज्जुनौ च। वासुदेवः सात्यकिः सृञ्जयाश्च यमौ च कस्तान्
विषहेन्मदन्यः ॥ २२ ॥ तस्मात् क्षिप्रं मद्रपते प्रयाहि रणे पाञ्चा-
लान् पाण्डवान् सृञ्जयांश्च। तान् वा हनिष्यामि समेत्य सङ्ख्ये

यास्यामि वा द्रोणपथा यमाय ॥ २३ ॥ न त्वेवाहं न गमिष्यामि मध्यं तेषां शूराणामिति मां शल्य विद्धि । मित्रद्रोहो मर्षणीयो न मेऽयं त्यक्त्वा प्राणाननुयास्यामि द्रोणम् ॥ २४ ॥ प्राज्ञस्य मूढस्य च जीवितान्ते नास्ति प्रमोक्षोऽन्तकसत्कृतस्य । अतो विद्वन्नभियास्यामि पार्थान् दिष्टं न शक्यं व्यतिवर्त्तितुं वै ॥ २५ ॥ कल्याणवृत्तिः सततं हि राजन् वैचित्रवीर्य्यस्य सुतो ममासीत् । तस्यार्थे सिद्ध्यर्थमहं त्यजामि प्रियान् प्राणान् दुस्त्यजं जीवितञ्च ॥ २६ ॥ वैयाघ्रचर्म्माणमकूजनाक्षं हैमत्रिकोषं रजतत्रिवेणुम् । रथप्रवर्हं तुरगप्रवर्हैर्युक्तं प्रादान्मह्यमिमं हि रामः ॥ २७ ॥ धनूंषि चित्राणि निरीक्ष्य शल्य ध्वजान् गदाः सायकांश्चोग्ररूपान् । असिञ्च दीप्तं परमायुधञ्च शङ्खञ्च शुभ्रं स्वनवन्तमुग्रम् ॥ २८ ॥ पताकिनं वज्रनिपातनिस्वनं सिताश्वयुक्तं शुभतूणशोभिनम् । इमं समास्थाय रथं रथर्षभं रणे हनिष्याम्यहमर्ज्जुनं बलात् ॥ २९ ॥ [illegible] सर्वहरोऽभिरक्षेत् सदाप्रमत्तः समरे पाण्डुपुत्रम् । [illegible] हनिष्यामि समेत्य युद्धे यास्यामि वा भीष्ममुखो यमाय [illegible] ॥ यमवरुणकुवेरवासवा यदि युगपत् सगणा महाहवे । जुगुपिषव इहैत्य पाण्डवं किमु बहुना सह तैर्ज्जयामि तम् ॥ ३१ ॥

सञ्जय उवाच । इति रणरभसस्य कत्थतस्तदुपनिशम्य वचः स मद्रराट् । अवहसदवमन्य वीर्य्यवान् प्रतिषिषिधे च जगाद चोत्तरम् ॥ ३२ ॥

शल्य उवाच । विरम विरम कर्ण कत्थनादतिरभसोऽसि चाप्ययुक्तवाक् । क्व च हि नरवरो धनञ्जयः क्व पुनरहो पुरुषाधमो भवान् ॥ ३३ ॥ यदुसदनमुपेन्द्रपालितं त्रिदिवमिवामरराजरक्षितम् । प्रसभमभिविलोड्य को हरेत् पुरुषवरावरजामृतेऽर्ज्जुनात् ॥ ३४ ॥ त्रिभुवनसृजमीश्वरेश्वरं क इह पुमान् भवमाह्वयेद्युधि । मृगवधकलहे ऋतेऽर्ज्जुनात् सुरपतिवीर्य्यसम

प्रभावतः ॥ ३५ ॥ असुरसुरमहोरगान्नरान् गरुडपिशाचयक्ष-राक्षसान् । इषुभिरजयदग्निगौरवात् स्वभिलषितञ्च हविर्द्दौ जयः ॥ ३६ ॥ स्मरसि ननु यदा परैर्हृतः स च धृतराष्ट्रसुतोऽपि मोक्षितः । दिनकरजहयैः प्रवीरमैर्यथा कुरुषु बहून् विनिहत्य तानरीन् ॥ ३७ ॥ प्रथममपि पलायिते त्वयि प्रियकलहा धृत-राष्ट्रसूनवः । स्मरसि ननु यदा प्रमोचिताः खचरगणानवजित्य पाण्डवैः ॥ ३८ ॥ समुदितबलवाहनाः पुनः पुरुषवरेण जिताः स्थ गोग्रहे । सगुरुगुरुसुताः सभीष्मकाः किमु न जितः स तदा त्वयार्जुनः ॥ ३९ ॥ इदमपरमुपस्थितं पुनस्तव निधनाय सुयुद्ध-मद्य वै । यदि न रिपुभयात् पलायसे समरगतोऽद्य हतोऽसि सूतज ॥ ४० ॥

सञ्जय उवाच । इति बहु परुषं प्रभाषति प्रमनसि मद्रपतौ रिपुस्तवम् । भृशमभिरुषितः परन्तपः कुरुपृतनापतिराह मद्र-पम् ॥ ४१ ॥

कर्ण उवाच । भवतु भवतु किं विकत्थसे ननु मम तस्य च युद्धमुद्यतम् । यदि स जयति मामिहाहवे तत इदमस्तु सुकत्थितं तव ॥ ४२ ॥

सञ्जय उवाच । एवमस्त्विति मद्रेश उक्त्वा नोत्तरमुक्तवान् । याहि शल्येति चाप्येनं कर्णः प्राह युयुत्सया ॥ ४३ ॥ स रथः प्रययौ शत्रून् श्वेताश्वः शल्यसारथिः । निघ्नन्नमित्रान् समरे तमो घ्नन् सविता यथा ॥ ४४ ॥ ततः प्रायात् प्रीतिमान् वै रथेन वैयाघ्रेण श्वेतयुजाथ कर्णः । स चालोक्य ध्वजिनीं पाण्डवानां धनञ्जयं त्वरया पर्य्यपृच्छत् ॥ ४५ ॥

इति कर्णपर्वणि कर्णशल्यसंवादे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

सञ्जय उवाच। प्रयानेव ततः कर्णो हर्षयन् वाहिनीं तव।
एकैकं समरे दृष्ट्वा पाण्डवं पर्य्यपृच्छत॥ १॥ यो ममाद्य महा-
त्मानं दर्शयेत् श्वेतवाहनम्। तस्मै दद्यामभिप्रेतं धनं यन्मनसे-
च्छति॥ २॥ स चेत्तदभिमन्येत तस्मै दद्यामहं पुनः। शकटं
रत्नपूर्णञ्च यो मे ब्रूयाद्धनञ्जयम्॥ ३॥ स चेत्तदभिमन्येत पुरु-
षोऽर्जुनदर्शिवान्। शतं दद्यां गवां तस्मै नैत्यकं कांस्यदोहनम्
॥ ४॥ शतं ग्रामवरांश्चैव दद्यामर्जुनदर्शिने। तथा तस्मै पुनर्दद्यां
श्वेतमश्वतरीरथम्। युक्तमञ्जनकेशीभिर्यो मे ब्रूयाद्धनञ्जयम्॥५॥
स चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान्। अन्यं तस्मै वरं दद्यां
सौवर्णं हस्तिषड्गवम्॥ ६॥ तथाप्यस्मै पुनर्दद्यां स्त्रीणां शत-
मलंकृतम्। श्यामानां निष्ककण्ठीनां गीतवाद्यविपश्चिताम्॥७॥
स चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान्। तस्मै दद्यां शतं नागान्
शतं ग्रामान् शतं रथान्॥ ८॥ सुवर्णस्य च मुख्यस्य हयाग्र्याणां
शतं शतान्। ऋद्ध्या गुणैः सुदान्तांश्च धुर्य्यवाहान् सुशिक्षितान्
॥ ९॥ तथा सुवर्णशृङ्गीणां गोधेनूनां चतुःशतम्। दद्यां तस्मै
सवत्सानां यो मे ब्रूयाद्धनञ्जयम्॥ १०॥ स चेत्तदभिमन्येत
पुरुषोऽर्जुनदर्शिवान्। अन्यं तस्मै वरं दद्यां श्वेतान् पञ्चशतान्
हयान्॥ ११॥ हेमभाण्डपरिच्छन्नान् सुमृष्टमणिभूषणान्।
सुदान्तानपि चैवाहं दद्यामष्टादशापरान्॥ १२॥ रथञ्च शुभ्रं
सौवर्णं दद्यां तस्मै स्वलङ्कृतम्। युक्तं परमकाम्बोजैर्यो मे ब्रूया-
द्धनञ्जयम्॥ १३॥ स चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान्। अन्यं
तस्मै वरं दद्यां कुञ्जराणां शतानि षट्॥ १४॥ काञ्चनैर्विविधै-
र्भाण्डैः संछन्नान् हेममालिनः। उत्पन्नानपरान्तेषु विनीतान्
हस्तिशिक्षकैः॥ १५॥ स चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान्।
अन्यं तस्मै वरं दद्यां वैश्यग्रामांश्चतुर्द्दश॥ १६॥ सुस्फीतान् धन-
संयुक्तान् प्रत्यासन्नवनोदकान्। अकुतोभयान् सुसम्पन्नान् राज-

भोज्यांश्चतुर्द्दश ॥ १७ ॥ दासीनां निष्ककण्ठीनां मागधीनां शतं
तथा । प्रत्यग्रवयसां दद्यां यो मे ब्रूयाद्धनञ्जयम् ॥ १८ ॥ स
चेत्तमभिमन्येत पुरुषोऽर्ज्जुनदर्शिवान् । अन्यं तस्मै वरं दद्यां
यमसौ कामयेत् स्वयम् ॥ १९ ॥ पुत्त्रदारान् विहारांश्च यदन्य-
द्वित्तमस्ति मे । तच्च तस्मै वरं दद्यां यद्यच्च मनसेच्छति ॥ २० ॥
हत्वा च सहितौ कृष्णौ तयोर्वित्तानि सर्व्वशः । तस्मै दद्यामहं यो
मे प्रब्रूयात् केशवार्ज्जुनौ ॥ २१ ॥ एता वाचः सुबहुशः कर्ण उच्चा-
रयन् युधि । दध्मौ सागरसम्भूतं सुस्वरं शङ्खमुत्तमम् ॥ २२ ॥
ता वाचः सूतपुत्त्रस्य यथायुक्ता निशम्य ह । दुर्य्योधनो महाराज
संहृष्टः सानुगोऽभवत् ॥ २३ ॥ ततो दुन्दुभिनिर्घोषो मृदङ्गानाञ्च
सर्व्वशः । सिंहनादः सवादित्रः कुञ्जराणाञ्च निस्वनः ॥ २४ ॥
प्रादुरासीत्तदा राजन् सैन्येषु पुरुषर्षभ । योधानां संप्रहृष्टानां
तथा समभवत् स्वनः ॥ २५ ॥ तथा प्रहृष्टे सैन्ये तु प्लवमानं महा-
रथम् । विकत्थमानञ्च तदा राधेयमरिकर्षणम् । मद्रराजः
प्रहस्येदं वचनं प्रत्यभाषत ॥ २६ ॥

इति कर्णपर्व्वणि कर्णावलेपे अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

शल्य उवाच । मा सूतपुत्त्र दानेन सौवर्णं हस्तिषड्गवम् ।
प्रयच्छ पुरुषायाद्य द्रक्ष्यसि त्वं धनञ्जयम् ॥ १ ॥ बाल्यादिह त्वं
त्यजसि वसु वैश्रवणो यथा । अयत्नेनैव राधेय द्रष्टास्यद्य धन-
ञ्जयम् ॥ २ ॥ परासृजसि यद्वित्तं किञ्चित्त्वं बहु मूढवत् । अपात्र-
दाने ये दोषास्तान्मोहान्नावबुध्यसे ॥ ३ ॥ यत्त्वं प्रेरयसे वित्तं बहु
तेन खलु त्वया । शक्यं बहुविधैर्यज्ञैर्यष्टुं सूत यजस्व तैः ॥ ४ ॥
यच्च प्रार्थयसे हन्तुं कृष्णौ मोहात् वृथैव तत् । न हि शुश्रुम
संमर्द्दे क्रोष्ट्रा सिंहौ निपातितौ ॥ ५ ॥ अप्रार्थितं प्रार्थयसे

सुहृदो न हि सन्ति ते। ये त्वां निवारयन्त्याशु प्रपतन्तं हुताशने ॥ ६ ॥ कार्य्याकार्य्यं न जानीषे कालपक्वोऽस्यसंशयम्। बहुबद्ध-मकर्त्तव्यं को हि ब्रूयाज्जिजीविषुः ॥ ७ ॥ समुद्रतरणं दोर्भ्यां कण्ठे बद्धा यथा शिलाम्। गिर्य्यग्राद्वा निपतनं तादृक् तव चिकीर्षितम् ॥ ८ ॥ सहितः सर्व्वयोधैस्त्वं व्यूढानीकैः सुरक्षितः। धनञ्जयेन युध्यस्व श्रेयश्चेत् प्राप्तुमिच्छसि ॥ ९ ॥ हितार्थं धार्त्तराष्ट्रस्य ब्रवीमि त्वां न हिंसया। श्रद्धत्स्वैवं मया प्रोक्तं यदि तेऽस्ति जिजीविषा ॥ १० ॥

कर्ण उवाच। स्वबाहुवीर्य्यमाश्रित्य प्रार्थयाम्यर्ज्जुनं रणे। त्वन्तु मित्रमुखः शत्रुर्म्मांभीषयितुमिच्छसि ॥ ११ ॥ न मामस्मादभिप्रायात् कश्चिदद्य निवर्त्तयेत्। अपीन्द्रो वज्रमुद्यम्य किमु मर्त्त्यः कथञ्चन ॥ १२ ॥

सञ्जय उवाच। इति कर्णस्य वाक्यान्ते शल्यः प्राहोत्तरं वचः। चुकोपयिषुरत्यर्थं कर्णं मद्रेश्वरः पुनः ॥ १३ ॥ यदा वै फाल्गुनवेगमुक्ता ज्याचोदिता हस्तवता विसृष्टाः। अन्वेतारः कङ्कपत्राः शिताग्रास्तदा तप्स्यस्यर्ज्जुनस्यानुयोगात् ॥ १४ ॥ यदा दिव्यं धनुरादाय पार्थः प्रतापयान् पृतनां सव्यसाची। त्वामर्द्दयिष्यन्ति शितैः पृषत्कैस्तदा पश्चात्तप्स्यसे सूतपुत्र ॥ १५ ॥ बालश्चन्द्रं मातुरङ्के शयानो यथा कश्चित् प्रार्थयतेऽपहर्त्तुम्। तद्वन्मोहात् द्योतमानं रथस्थं त्वं प्रार्थयस्यर्ज्जुनं जेतुमद्य ॥ १६ ॥ त्रिशूलमाश्रित्य सुतीक्ष्णधारं सर्व्वाणि गात्राणि निघर्षसि त्वम्। सुतीक्ष्णधारोपमकर्म्मणा त्वं युयुत्ससे योऽर्ज्जुनेनाद्य कर्ण ॥ १७ ॥ क्रुद्धं सिंहं केशरिणं बृहन्तं बालो मूढः क्षुद्रमृगोऽतरस्वी। समाह्वयेत्तद्वदेतत्तवाद्य समाह्वानं सूतपुत्रार्ज्जुनस्य ॥ १८ ॥ मा सूतपुत्राह्वय राजपुत्रं महावीर्य्यं केशरिणं यथैव। वने शृगालः पिशितस्य तृप्तो मा पार्थमासाद्य विनङ्क्ष्यसि त्वम् ॥ १९ ॥ ईषादन्तं महानागं प्रभिन्न-

करटामुखम् । शशकाह्वयसे युद्धे कर्ण पार्थं धनञ्जयम् ॥ २० ॥
बिलस्थं कृष्णसर्पं त्वं बाल्यात् काष्ठेन विध्यसि । महाविषं पूर्ण-
कोपं यत् पार्थं योद्धुमिच्छसि ॥ २१ ॥ सिंहं केशरिणं क्रुद्ध-
मतिक्रम्याभिनर्द्दसे । शृगाल इव मूढ़स्त्वं नृसिंहं कर्ण पाण्डवम्
॥ २२ ॥ सुपर्णं पतगश्रेष्ठं वैनतेयं तरस्विनम् । भोगीवाह्वयसे
पाते कर्ण पार्थं धनञ्जयम् ॥ २३ ॥ सर्व्वाम्भसां निधिं भीममूर्मि-
मन्तं झषान्वितम् । चन्द्रोदये विवर्द्धन्तमप्लवः सन्तितीर्षसि ॥ २४ ॥
ऋषभं दुन्दुभिग्रीवं तीक्ष्णशृङ्गं प्रहारिणम् । वत्स आह्वयसे
युद्धे कर्ण पार्थं धनञ्जयम् ॥ २५ ॥ महामेघं महाघोरं दर्दुरः
प्रतिनर्द्दसि । कामतोयप्रदं लोके नरपर्ज्जन्यमर्जुनम् ॥ २६ ॥
यथा च स्वगृहस्थः श्वा व्याघ्रं वनगतं भवेत् । तथा त्वं भषसे
कर्ण नरव्याघ्रं धनञ्जयम् ॥ २७ ॥ शृगालोऽपि वने कर्ण शशैः
परिवृतो वसन् । मन्यते सिंहमात्मानं यावत् सिंहं न पश्यति
॥ २८ ॥ तथा त्वमपि राधेय सिंहमात्मानमिच्छसि । अपश्यन्
शत्रुदमनं नरव्याघ्रं धनञ्जयम् ॥ २९ ॥ व्याघ्रं त्वं मन्यसेत्मानं
यावत् कृष्णौ न पश्यसि । समास्थितावेकरथे सूर्य्याचन्द्रमसाविव
॥ ३० ॥ यावद्गाण्डीवनिर्घोषं न शृणोषि महाहवे । तावदेव
त्वया कर्ण शक्यं वक्तुं यथेच्छसि ॥ ३१ ॥ रथशब्दधनुःशब्दैर्नाद-
यन्तं दिशो दश । नर्द्दन्तमिव शार्दूलं दृष्ट्वा क्रोष्टा भविष्यसि ॥ ३२॥
नित्यमेव शृगालस्त्वं नित्यं सिंहो धनञ्जयः । वीरप्रद्वेषणान्मूढ़
तस्मात् क्रोष्टेव लक्ष्यसे ॥ ३३ ॥ यथाखुः स्याद्विडालश्च श्वा व्याघ्रश्च
बलाबले । यथा शृगालः सिंहश्च यथा च शशकुञ्जरौ ॥ ३४ ॥
यथानृतञ्च सत्यञ्च यथा चापि विषामृते । तथा त्वमपि पार्थश्च
प्रख्यातावात्मकर्म्मभिः ॥ ३५ ॥

इति कर्णपर्व्वणि कर्णाधिक्षेपे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

सञ्जय उवाच। अधिक्षिप्तस्तु राधेयः शल्येनामिततेजसा। शल्यमाह सुसंक्रुद्धो वाक्यशल्यमवधारयन्॥ १॥

कर्ण उवाच। गुणान् गुणवतां शल्य गुणवान् वेत्ति नागुणः। त्वन्तु सर्वैर्गुणैर्हीनः किं ज्ञास्यसि गुणागुणम्॥ २॥ अर्जुनस्य महास्त्राणि क्रोधं वीर्य्यं धनुः शरान्। अहं शल्य विजानामि विक्रमञ्च महात्मनः॥ ३॥ तथा कृष्णस्य माहात्म्यमृषभस्य महीक्षिताम्। यथाहं शल्य जानामि न त्वं जानासि तत्तथा॥ ४॥ एवमेवात्मनो वीर्य्यमहं वीर्य्यञ्च पाण्डवे। जानन्नेवाह्वये युद्धे शल्य नाग्निं पतङ्गवत्॥ ५॥ अस्ति चायमिषुः शल्य सुमुखो रक्तभोजनः। एकतूणीशयः पत्री सुधौतः समलंकृतः॥ ६॥ शेते चन्दनचूर्णेन पूजितो बहुलाः समाः। आहेयो विषवानुग्रो नराश्वद्विपसङ्घहा॥ ७॥ घोररूपो महारौद्रस्तनुत्रास्थिविदारणः। निर्भिन्द्यां येन रुष्टोऽहमपि मेरुं महागिरिम्॥ ८॥ तमहं जातु नास्येयमन्यस्मिन् फाल्गुनादृते। कृष्णाद्वा देवकीपुत्रात् सत्यञ्चात्र शृणुष्व मे॥ ९॥ तेनाहमिषुणा शल्य वासुदेवधनञ्जयौ। योत्स्ये परमसंक्रुद्धस्तत् कर्म सदृशं मम॥ १०॥ सर्वेषां वृष्णिवीराणां कृष्णे लक्ष्मीः प्रतिष्ठिता। सर्वेषां पाण्डुपुत्राणां जयः पार्थे प्रतिष्ठितः। उभयं तत् समासाद्य कोऽतिवर्त्तितुमर्हति॥ ११॥ तावुभौ पुरुषव्याघ्रौ समेतौ स्यन्दने स्थितौ। मामेकमभिसंयातौ सुजातं पश्य शल्य मे॥ १२॥ पितृष्वसामातुलजौ भ्रातरावपराजितौ। मणी सूत्र इव प्रोतौ द्रष्टासि निहतौ मया॥ १३॥ अर्ज्जुने गाण्डिवं कृष्णे चक्रं तार्क्ष्यकपीध्वजौ। भीरूणां त्रासजननं शल्य हर्षकरं मम॥ १४॥ त्वन्तु दुष्प्रकृतिर्मूढो महायुद्धेष्व कोविदः। भयावदीर्णः संत्रासादबद्धं बहु भाषसे॥ १५॥ संस्तौषि तौ तु केनापि हेतुना त्वं कुदेशज। तौ हत्वा समरे हन्ता त्वामद्य सहबान्धवम्॥ १६॥ पापदेशज दुर्बुद्धे क्षुद्र

क्षत्रियपांसन । सुहृद्भूत्वा रिपुः किं मां कृष्णाभ्यां भीषयस्यलम् ॥ १७ ॥ तौ वा ममाद्य हन्तारौ हनिष्ये वापि तावहम् । नाहं बिभेमि कृष्णाभ्यां विजानन्नात्मनो बलम् ॥ १८ ॥ वासुदेवसहस्रं वा फाल्गुनानां शतानि वा । अहमेको हनिष्यामि जोषमास्स्व कुदेशज ॥ १९ ॥ स्त्रियो बालाश्च वृद्धाश्च प्रायः क्रीड़ागता जनाः । यागाथाः संप्रगायन्ति कुर्व्वन्तोऽध्ययनं यथा ॥ २० ॥ ता गाथाः शृणु मे शल्य मद्रकेषु दुरात्मसु । ब्राह्मणैः कथिताः पूर्व्वं यथा-वद्राजसन्निधौ । श्रुत्वा चैकमना मूढ़ क्षम वा ब्रूहि वोत्तरम् ॥२१॥ मित्रध्रुङ्मद्रको नित्यं यो नो द्वेष्टि स मद्रकः । मद्रके सङ्गतं नास्ति क्षुद्रवाक्ये नराधमे ॥ २२ ॥ दुरात्मा मद्रको नित्यं नित्य-मानृतिकोऽनृजुः । यावदन्तं हि दौरात्म्यं मद्रकेष्विति नः श्रुतम् ॥२३॥ पिता पुत्रश्च माता च श्वश्रुश्वशुरमातुलाः । जामाता दुहिता भ्राता नप्ता ते ते च बान्धवाः ॥ २४ ॥ वयस्याभ्यागता-श्चान्ये दासीदासञ्च सङ्गतम् । पुंभिर्विमिश्रा नार्य्यश्च ज्ञाताज्ञाताः स्वयेच्छया ॥ २५ ॥ येषां गृहेष्वशिष्टानां सक्तुमत्स्याशिनां तथा । पीत्वा सीधु सगोमांसं क्रन्दन्ति च हसन्ति च ॥ २६ ॥ गायन्ति चाप्यबद्धानि प्रवर्त्तन्ते च कामतः । कामप्रलापिनोऽन्योऽन्यं तेषु धर्म्मः कथं भवेत् । मद्रकेष्ववलिप्तेषु प्रख्याताशुभकर्म्मसु ॥ २७ ॥ नापि वैरं न सौहार्द्दं मद्रकेण समाचरेत् । मद्रके सङ्गतं नास्ति मद्रको हि सदामलः ॥ २८ ॥ मद्रकेषु च संसृष्टं शौचं गान्धार-केषु च । राजयाजकयाज्ये च नष्टं दत्तं हविर्भवेत् ॥ २९ ॥ शूद्रसंस्कारको विप्रो यथा याति पराभवम् । यथा ब्रह्मद्विषो नित्यं गच्छन्तीह पराभवम् । तथैव सङ्गतं कृत्वा नरः पतति मद्रकैः ॥ ३० ॥ मद्रके सङ्गतं नास्ति हतं वृश्चिक ते विषम् । आथर्व्वणेन मन्त्रेण यथा शान्तिः कृता मया ॥ ३१ ॥ इति वृश्चिक-दष्टस्य विषवेगहतस्य च । कुर्व्वन्ति भेषजं प्राज्ञाः सत्यं तच्चापि

दृश्यते ॥ ३२ ॥ एवं विद्वन् जोषमास्व शृणु चाप्योत्तरं वचः ॥३३॥
वासांस्युत्सृज्य नृत्यन्ति स्त्रियो या मद्यमोहिताः। मैथुनेऽसंयता-
श्चापि यथाकामचराश्च ताः ॥ ३४ ॥ तासां पुत्रः कथं धर्मं मद्रको
वक्तुमर्हति। यास्तिष्ठन्त्यः प्रमेहन्ति यथैवोष्ट्रदशेरकाः ॥ ३५ ॥
तासां विभ्रष्टधर्माणां निर्लज्जानां ततस्ततः। त्वं पुत्रस्तादृशीनां
हि धर्मं वक्तुमिहेच्छसि ॥ ३६ ॥ सुवीरकं याच्यमाना मद्रिका
कर्षति स्फिचौ। अदातुकामा वचनमिदं वदति दारुणम् ॥३७॥
मा मां सुवीरकं कश्चित् याचतां दयितं मम। पुत्रं दद्यां प्रति
दद्यां न तु दद्यां सुवीरकम् ॥ ३८ ॥ गौर्य्योऽबृहत्यो निर्ह्रीका
मद्रिकाः कम्बलावृताः। घस्मरा नष्टशौचाश्च प्राय इत्यनुशुश्रुम ॥
॥ ३९ ॥ एवमादि मयान्यैर्वा शक्यं वक्तुं भवेद्बहु। आकेशाग्रा-
न्नखाग्राच्च वक्तव्येषु कुकर्मसु ॥ ४० ॥ मद्रकाः सिन्धुसौवीरा धर्मं
विद्युः कथन्त्विह। पापदेशोद्भवा म्लेच्छा धर्माणामविचक्षणाः ॥४१॥
एष मुख्यतमो धर्मः क्षत्रियस्येति नः श्रुतम्। यदाजौ निहतः
शेते सद्भिः समभिपूजितः ॥ ४२ ॥ आयुधानां साम्पराये यन्मुच्येय-
महं ततः। ममैष प्रथमः कल्पो निधने स्वर्गमिच्छतः ॥ ४३ ॥
सोऽहं प्रियः सखा चास्मि धार्त्तराष्ट्रस्य धीमतः। तदर्थे हि मम
प्राणा यच्च मे विद्यते वसु ॥ ४४ ॥ व्यक्तं त्वमप्युपहतः पाण्डवैः
पापदेशज। यथाचामित्रवत् सर्वं त्वमस्मासु प्रवर्त्तसे ॥ ४५ ॥ कामं
न खलु शक्योऽहं त्वद्विधानां शतैरपि। संग्रामाद्विमुखः कर्त्तुं
धर्मज्ञ इव नास्तिकैः ॥ ४६ ॥ सारङ्ग इव घर्मार्त्तः कामं विलप
शुष्य च। न हि भीषयितुं शक्यः क्षत्रवृत्ते व्यवस्थितः ॥ ४७ ॥
तनुत्यजां नृसिंहानामाहवेष्वनिवर्त्तिनाम्। या गतिर्गुरुणा प्रोक्ता
पुरा रामेण तां स्मरे ॥ ४८ ॥ तेषां त्राणार्थमुद्युक्तं बधार्थं द्विषता-
मपि। विद्धि मामास्थितं वृत्तं पौरुरवसमुत्तमम् ॥ ४९ ॥ न
तद्भूतं प्रपश्यामि त्रिषु लोकेषु मद्रप। यो मामस्मादभिप्रायाद्वारये-

हिति मे मतिः ॥ ५० ॥ एवं विद्वान् जोषमास्व त्रासात् किं बहु भाषसे । मा त्वां हत्वा प्रदास्यामि क्रव्याद्भ्यो मद्रकाधम ॥५१॥ मित्रप्रतीक्षया शल्य धार्त्तराष्ट्रस्य चोभयोः । अपवादतितिक्षाभिस्त्रिभिरेतैर्हि जीवसि ॥ ५२ ॥ पुनश्चेदीदृशं वाक्यं मद्रराज वदिष्यसि । शिरस्ते पातयिष्यामि गदया वज्रकल्पया ॥ ५३ ॥ श्रोतारस्त्विदमद्येह द्रष्टारो वा कुरुध्वज । कर्णं वा जघ्नतुः कृष्णौ कर्णो वा निजघान तौ ॥ ५४ ॥ एवमुक्त्वा तु राधेयः पुनरेव विशाम्पते । अब्रवीन्मद्रराजानं याहि याहीत्यसम्भ्रमम् ॥ ५५ ॥

इति कर्णपर्व्वणि कर्णशल्यसंवादे चत्वारिंशोऽध्यायः ॥ ४० ॥

---

सञ्जय उवाच । मारिषाधिरथेः श्रुत्वा वाचो युद्धाभिनन्दिनः । शल्योऽब्रवीत् पुनः कर्णं निदर्शनमुदाहरन् ॥ १ ॥ जातोऽहं यज्वनां वंशे संग्रामेष्वनिवर्त्तिनाम् । राज्ञां मूर्द्धाभिषिक्तानां स्वयं धर्मपरायणः ॥ २ ॥ यथैव मत्तो मद्येन त्वं तथा लक्ष्यसे वृष । तथापि त्वां प्रमाद्यन्तं चिकित्सेयं सुहृत्तया ॥ ३ ॥ इमां काकोपमां कर्ण प्रोच्यमानां निबोध मे । श्रुत्वा यथेष्टं कुर्यास्त्वं निहीनकुलपांसन ॥ ४ ॥ नाहमात्मनि किञ्चिद्धै किल्बिषं कर्ण संस्मरे । येन मां त्वं महाबाहो हन्तुमिच्छस्यनागसम् ॥ ५ ॥ अवश्यन्तु मया वाच्यं बुध्यता त्वद्धिताहितम् । विशेषतो रथस्थेन राज्ञश्चैव हितैषिणा ॥ ६ ॥ समञ्च विषमञ्चैव रथिनश्च बलाबलम् । श्रमः खेदश्च सततं हयानां रथिना सह ॥ ७ ॥ आयुधस्य परिज्ञानं रुतञ्च मृगपक्षिणाम् । भारश्चाप्यतिभारश्च शल्यानाञ्च प्रतिक्रिया ॥ ८ ॥ अस्त्रयोगश्च युद्धश्च निमित्तानि तथैव च । सर्व्वमेतन्मया ज्ञेयं रथस्यास्य कुटुम्बिना । अतस्त्वां कथये कर्ण निदर्शनमिदं पुनः ॥ ९ ॥ वैश्यः किलसमुद्रान्ते प्रभूतधनधान्यवान् । यज्वा

ज्ञानपतिः क्षान्तः स्वकर्मस्थोऽभवच्छुचिः ॥ १० ॥ बहुपुत्रः प्रियापत्यः सर्वभूतानुकम्पकः । राज्ञो धर्मप्रधानस्य राष्ट्रे वसति निर्भयः ॥ ११ ॥ पुत्राणां तस्य बालानां कुमाराणां यशस्विनाम् । काको बहूनामभवदुच्छिष्टकृतभोजनः ॥ १२ ॥ तस्मै सदा प्रयच्छन्ति वैश्यपुत्राः कुमारकाः । मांसौदनं दधि क्षीरं पायसं मधुसर्पिषी ॥१३॥ स चोच्छिष्टभृतः काको वैश्यपुत्रैः कुमारकैः । सदृशान् पक्षिणो दृप्तः श्रेयसश्चावमन्यते ॥ १४ ॥ अथ हंसाः समुद्रान्ते कदाचिदतिपातिनः । गरुडस्य गतौ तुल्याश्चक्राङ्गा हृष्टचेतसः ॥ १५ ॥ कुमारकास्ततो हंसान् दृष्ट्वा काकमथाब्रुवन् । भवानेव विशिष्टो हि पतत्रिभ्यो विहङ्गम ॥ १६ ॥ प्रतार्य्यमानस्तैः सर्वैरल्पबुद्धिभिरण्डजः । तद्वचः सत्यमित्येव मौर्ख्याद्दर्पाच्च मन्यते ॥ १७ ॥ तान् सोऽभिपत्य जिज्ञासुः क एषां श्रेष्ठभागिति । उच्छिष्टदर्पितः काको बहूनां दूरपातिनाम् ॥ १८ ॥ तेषां यं प्रवरं मेने हंसानां दूरपातिनाम् । तमाह्वयत दुर्बुद्धिः पताव इति पक्षिणम् ॥ १९ ॥ तच्छ्रुत्वा प्राहसन् हंसा ये तत्रासन् समागताः । भाषतो बहु काकस्य बलिनः पततां वराः ॥ २० ॥ इदमूचुः स्म चक्राङ्गा वचः काकं विहङ्गमाः ॥ २१ ॥

हंसा ऊचुः । वयं हंसाश्चरामेमां पृथिवीं मानसौकसः । पक्षिणाञ्च वयं नित्यं दूरपातेन पूजिताः ॥ २२ ॥ कथं नु हंसं बलिनं चक्राङ्गं दूरपातिनम् । काको भूत्वा निपतने समाह्वयसि दुर्मते । कथं त्वं पतिता काक सहास्माभिर्ब्रवीहि तत् ॥ २३ ॥ अथ हंसवचो मूढः कुत्सयित्वा पुनः पुनः । प्रजगादोत्तरं काकः कत्थनो जातिलाघवात् ॥ २४ ॥

काक उवाच । शतमेकञ्च पातानां पतितास्मि न संशयः । शतयोजनमेकैकं विचित्रं विविधं तथा ॥ २५ ॥ उड्डीनमवडीनञ्च प्रडीनं डीनमेव च । निडीनमथ संडीनं तिर्य्यग्डीनगतानि

च ॥ २६ ॥ विडीनं परिडीनञ्च पराडीनं सुडीनकम् । अतिडीनं महाडीनं खडीनं परिडीनकम् ॥ २७ ॥ अवडीनं प्रडीनञ्च संडीनं डीन डीनकम् । संडीनोड्डीनडीनञ्च पुनर्डीनावडीनकम् ॥ २८ ॥ सन्तातं समुदीर्णञ्चततोऽन्यद्व्यतिरिक्तकम् । गतागतं प्रतिगतं बह्वीश्च निकुलीनिकाः । कर्त्तास्मि मिषतां वोऽद्य ततो द्रक्ष्यथ मे बलम् ॥ २९ ॥ तेषामन्यतमेनाहं पतिष्यामि विहायसम् । प्रदिशध्वं यथान्यायं केन हंसाः पताम्यहम् ॥ ३० ॥ ते वै ध्रुवं विनिश्चित्य पतध्वं तु मया सह । पातैरेभिः खलु खगाः पतता खे निराश्रये ॥ ३१ ॥ एवमुक्ते तु काकेन प्रहस्यैको विहङ्गमः उवाच काकं राधेय वचनं तन्निबोध मे ॥ ३२ ॥

हंस उवाच । शतमेकञ्च पातानां त्वं काक पतिता ध्रुवम् । एकमेव तु यं पातं विदुः सर्व्वे विहङ्गमाः ॥ ३३ ॥ तमहं पतिता काक नान्यं जानामि कञ्चन । पत त्वमपि रक्ताक्ष येन पातेन मन्यसे ॥ ३४ ॥ अथ काकाः प्रजहसुर्ये तत्रासन् समागताः । कथमेकेन पातेन हंसः पातशतं जयेत् ॥ ३५ ॥ एकेनैव शतस्यैकं पातेनाभिपतिष्यति । हंसस्य पतितं काको बलवानाशुविक्रमः ॥३६ प्रपेततुः स्पर्द्धया च ततस्तौ हंसवायसौ । एकपाती च चक्राङ्गः काकः पातशतेन च ॥ ३७ ॥ पेतिवानथ चक्राङ्गः पेतिवांश्चापि वायसः । विस्मापयिषुः पातैराचक्षाणाः स्वकां क्रियाम् ॥ ३८ ॥ अथ काकस्य चित्राणि पतितानि मुहुर्मुहुः । दृष्ट्वा प्रमुदिताः काका विनेदुरधिकैः स्वरैः ॥ ३९ ॥ हंसांश्चावहसन्ति स्म प्रावदन्नप्रियानि च । उत्पत्योत्पत्य च मुहुर्मुहूर्त्तमिति चेति च ॥४०॥ वृक्षाग्रेभ्यः स्थलेभ्यश्च निपतन्त्युत्पतन्ति च । कुर्व्वाणा विविधान्रावानाशंसन्तस्तथा जयम् ॥ ४१ ॥ हंसस्तु मृदुनैकेन विक्रान्तुमुपचक्रमे । पर्य्यहीयत काकाच्च मुहूर्त्तमिव मारिष ॥ ४२ ॥ मन्य च हंसांस्तानिदं वैचनमब्रुवन् । योऽसावुत्पतितो हंस

सोऽसावेवं प्रहीयते ॥ ४३ ॥ अथ हंसः स तत्श्रुत्वा प्रापतत् पश्चिमां दिशम्। उपर्य्युपरि वेगेन सागरं मकरालयम् ॥ ४४ ॥ ततो भीः प्राविशत् काकं तदा तत्र विचेतसम्। द्वीपद्रुमानपश्यन्तं निपातार्थं श्रमान्वितम्। निपतेयं क्व नु श्रान्त इति तस्मिन् जलार्णवे ॥ ४५ ॥ अविषह्यः समुद्रो हि बहुसत्त्वगणालयः। महाभूतशतोद्भासी नभसोऽपि विशिष्यते ॥ ४६ ॥ गाम्भीर्य्याद्धि समुद्रस्य न विशेषं कुलाधम। दिगम्बराम्भसां काक समुद्रस्था विदुर्जनाः। विदूरपातात्तोयस्य किं पुनः काक वायसः ॥ ४७ ॥ अथ हंसोऽप्यतिक्रम्य मुहूर्त्तमिति चेति च। अवेक्षमाणस्तं काकं नाशक्नोद्व्यपसर्पितुम् ॥ ४८ ॥ अतिक्रम्य तु चक्राङ्गः काकं तं समुदैक्षत। यावन्नत्वा पतत्येष काको मामिति चिन्तयन् ॥ ४९ ॥ ततः काको भृशं श्रान्तो हंसमभ्यागमत्तदा ॥ ५० ॥ तं तथा सीयमानन्तु हंसो दृष्ट्वाब्रवीदिदम्। उज्जिहीर्षुर्निमज्जन्तं स्मरन् सत्पुरुषव्रतम् ॥ ५१ ॥

हंस उवाच। बहूनि पतितानि त्वमाचक्षाणो मुहुर्मुहुः। पातस्य व्याहरंश्चेदं न नो गुह्यं प्रभाषसे ॥ ५२ ॥ किन्नाम पतितं काक यत्त्वं पतसि साम्प्रतम्। जलं स्पृशसि पक्षाभ्यां तुण्डेन च पुनः पुनः ॥ ५३ ॥ प्रब्रूहि कतमो यत्र पाते वर्त्तसि वायस। एह्येहि काक शीघ्रं त्वमेष त्वां प्रतिपालये ॥ ५४ ॥

शल्य उवाच। स पक्षाभ्यां स्पृशन्नार्त्तस्तुण्डेन च जलं तदा दृष्टो हंसेन दुष्टात्मन्निदं हंसं ततोऽब्रवीत् ॥ ५५ ॥ अपश्यन्नम्भसः पारं निपतंश्च श्रमान्वितः। पातवेगप्रमथितो हंसं काकोऽब्रवीदिदम् ॥ ५६ ॥ वयं काकाः क्व ता नाम चरामः काकवासिकाः। हंस प्राणैः प्रपद्ये त्वामुदकान्तं नयस्व माम् ॥ ५७ ॥ स पक्षाभ्यां स्पृशन्नार्त्तस्तुण्डेन च महार्णवम्। काको दृढपरिश्रान्तः सहसा निपपात ह ॥ ५८ ॥ सागराम्भसि तं दृष्ट्वा पतितं दीनचेतसम्।

म्रियमाणमिदं काकं हंसो वाक्यमुवाच ह ॥ ५९ ॥ शतमेकञ्च पातानां पतास्यहमनुत्तरः । श्लाघमानस्त्वमात्मानं काक भाषितवानसि ॥ ६० ॥ स त्वमेकशतं पातं पतन्नभ्यधिको मया । कथमेवं परिश्रान्तः पतितोऽसि महार्णवे ॥ ६१ ॥ प्रत्युवाच ततः काकः सीदमान इदं वचः । उपरिष्टात्तदा हंसमभिवीक्ष्य प्रसादयन् ॥६२

काक उवाच । उच्छिष्टदर्पितो हंस मन्येत्मानं सुपर्णवत् । अवमन्ये बहूंश्चाहं काकानन्यांश्च पक्षिणः ॥ ६३ ॥ प्राणैर्हंस प्रपद्ये त्वां द्वीपान्तं प्रापयस्व माम ॥६४॥ यद्यहं स्वस्तिमान् हंस स्वदेशं प्राप्नुयां विभो । न कञ्चिदवमन्येयमापदो मां समुद्धर ॥६५॥ तमेवं वादिनं दीनं विलपन्तमचेतनम् । काककाकेति वासन्तं निमज्जन्तं महार्णवे ॥ ६६ ॥ अनुक्त्वा वायसं हंसो जलक्लिन्नं सुदुर्द्दशम् । पद्भ्यामुत्क्षिप्य वेपन्तं पृष्ठमारोपयच्छनैः ॥ ६७ ॥ आरोप्य पृष्ठं हंसस्तं काकं तूर्णं विचेतसम् । आजगाम पुनर्द्वीपं स्पर्द्धयोत्पेततुर्यतः ॥ ६८ ॥ संस्थाप्य तञ्चापि पुन समाश्वास्य च खेचरम् । गतो यथेप्सितं देशं हंसो मन इवाशुगः ॥ ६९ ॥ एवमुच्छिष्टपुष्टः स काको हंसपराजित । बलवीर्य्यमदं कर्ण त्यक्त्वा क्षान्तिमुपागत ॥ ७० ॥ उच्छिष्टभोजनः काको यथा वैश्यकुले तु सः । एवं त्वमुच्छिष्टभृतो धार्त्तराष्ट्रैर्न संशयः । सदृशान् श्रेयसश्चापि सर्वान् कर्णावमन्यसे ॥ ७१ ॥ द्रोणद्रौणिकृपैर्गुप्तो भीष्मेणान्यैश्च कौरवैः । विराटनगरे पार्थमेकं किं नावधीस्तदा ॥ ७२ ॥ यत्र व्यस्ताः समस्ताश्च निर्ज्जिताः स्थ किरीटिना । शृगाला इव सिंहेन क्व ते वीर्य्यमभूत्तदा ॥ ७३ ॥ भ्रातरञ्च हतं दृष्ट्वा समरे सव्यसाचिना । पश्यतां कुरुवीराणां प्रथमं त्वं पलायितः ॥ ७४ ॥ तथा द्वैतवने कर्ण गन्धर्वैः समभिद्रुतः । कुरून् समग्रानुत्सृज्य प्रथमं त्वं पलायितः ॥ ७५ ॥ हत्वा जित्वा च गन्धर्वांश्चित्रसेनमुखान्रणे । कर्ण दुर्य्योधनं पार्थः

सभायां समभीषयत्॥ ७६॥ पुनः प्रभावः पार्थस्य पौराणः केशवस्य च। कथितः कर्ण रामेण सभायां राजसंसदि॥ ७७॥ सततञ्च त्वमश्रौषीर्वचनं द्रोणभीष्मयोः। अवध्यौ वदतोः कृष्णौ सन्निधौ च महीक्षिताम्॥ ७८॥ कियत्तु तत्र [illegible]ामि येन येन धनञ्जयः। त्वत्तोऽतिरिक्तः सर्वेभ्यो भूते[illegible] ब्राह्मणो यथा॥ ७९॥ इदानीमेव द्रष्टासि प्रधाने स्यन्दने स्थितौ। पुत्रञ्च वसुदेवस्य कुन्तीपुत्रञ्च पाण्डवम्॥ ८०॥ [illegible]थाश्रयत चक्राङ्गं वायसो बुद्धिमाश्रितः। तथाश्रयस्व वार्ष्णेयं पाण्डवञ्च धनञ्जयम्॥ ८१॥ यदा त्वं युधि विक्रान्तौ वासुदेवधन[illegible]। द्रष्टास्येकरथे कर्ण तदा नैवं वदिष्यसि॥ ८२॥ यदा श[illegible] पार्थो दर्पं ते वारयिष्यति। तदा त्वमन्तरं द्रष्टा आत्मनश्चा[illegible] च॥८३॥ देवासुरमनुष्येषु प्रख्यातौ यौ नरोत्तमौ। तौ मावमंस्[illegible]ख्यौ त्वं खद्योत इव रोचनौ॥ ८४॥ सूर्य्याचन्द्रमसौ यद्वत्तद्व[illegible] केशवौ। प्रकाशेनातिविख्यातौ त्वन्तु खद्योतवन्नृषु॥ ८५॥ [illegible]ं विद्वान्मावमंस्थाः सूतपुत्राच्युतार्जुनौ। नृसिंहौ तौ मह[illegible] नौ जोषमास्स्व विकत्थने॥ ८६॥

इति कर्णपर्वणि हंसकाकीयोपाख्याने एकचत्वारिंशोऽध्यायः॥ ४१॥

---

सञ्जय उवाच। मद्राधिपस्याधिरथिर्महात्मा वचो निशम्याप्रियमप्रतीतः। उवाच शल्यं विदितं ममैतत् यथाविधावर्जुनवासुदेवौ॥ १॥ शौरे रथं वाहयतोऽर्जुनस्य बलं महास्त्राणि च पाण्डवस्य। अहं विजानामि यथावदद्य परोक्षभूतं तव तत्तु शल्य॥ २॥ तौ चाप्यहं शस्त्रभृतां वरिष्ठौ व्यपेतभीर्योधयिष्यामि कृष्णौ। सन्तापयत्यभ्यधिकन्तु रामाच्छापोऽद्य मां ब्राह्मणसत्त-

माश्च ॥ ३ ॥ अवसं वै ब्राह्मणच्छद्मनाहं रामे पुरा दिव्यमस्त्रं
चिकीर्षुः । तत्रापि मे देवराजेन विघ्नो हितार्थिना फाल्गुनस्यैव
शल्य । कृतो विभेदेन ममोरुमेत्य प्रविश्य कीटस्य तनुं विरूपाम्
॥ ४ ॥ ममोरुमेत्य प्रबिभेद कीटः सुप्ते गुरौ तत्र शिरो निधाय ।
ऊरुप्रभेदाच्च महान् बभूव शरीरतो मे घनशोणितौघः ॥ ५ ॥
गुरोर्भयाच्चापि न चेलिवानहं ततश्चावबुद्धो ददृशेऽथ विप्रः । स
धैर्ययुक्तं प्रसमीक्ष्य मां वै न त्वं विप्रः कोऽसि सत्यं वदेति ॥ ६ ॥
तस्मै तदात्मानमहं यथावदाख्यातवान् सूतवदित्य शल्य । स मां
निशम्याथ महातपस्वी संशप्तवान् रोषपरीतचेताः ॥ ७ ॥ सूतो-
पधावाप्तमिदं तवास्त्रं न कर्मकाले प्रतिभास्यति त्वाम् । अन्यत्र
तस्मात्तव मृत्युकालादब्राह्मणे ब्रह्म न हि ध्रुवं स्यात् ॥ ८ ॥ तदद्य
पर्य्याप्तमतीव चास्त्रमस्मिन् संग्रामे तुमुलेऽतीव भीमे ॥ ९ ॥ योऽयं
शल्य भरतेष्पपन्नः प्रकर्षणः सर्वहरोऽतिभीमः । सोऽभिमन्ये
क्षत्रियाणां प्रवीरान् प्रतापिता बलवान् वै विमर्द्दः ।१०॥ शल्यो-
ग्रधन्वानमहं वरिष्ठं तरस्विनं भीममसह्यवीर्य्यम् । सत्यप्रतिज्ञं
युधि पाण्डवेयं धनञ्जयं मृत्युमुखं नयिष्ये ॥ ११ ॥ अस्त्रं हि मे
तत् प्रतिपन्नमद्य येन क्षेप्स्ये समरे शत्रुपूगान् । प्रतापिनं बल-
वन्तं कृतास्त्रं तमुग्रधन्वानममितौजसञ्च । क्रूरं शूरं रौद्रममित्र-
साहं धनञ्जयं संयुगेऽहं हनिष्ये ॥ १२ ॥ अपाम्पतिर्वेगवानप्रमेयो
निमज्जयिष्यन् बहुलाः प्रजाश्च । महावेगं सङ्कुरुते समुद्रो वेला
चैनं धारयत्यप्रमेयम् ॥ १३ ॥ प्रमुञ्चन्तं बाणसङ्घानमोघान् मर्म-
च्छिदो वीरहनः सुपत्रान् । कुन्तीपुत्रं प्रतियोत्स्यामि युद्धे ज्याः
कर्षतामुत्तममद्य लोके ॥ १४ ॥ एवं बलेनातिबलं महास्त्रं समुद्र-
कल्पं सुदुरापमुग्रम् । शरौघिणं पार्थिवान्मज्जयन्तं वेलेव पार्थ-
मिषुभिः संसहिष्ये ॥ १५ ॥ अद्याहवे यस्य न तुल्यमन्यं मन्ये
मनुष्यं धनुराददानम् । सुरासुरान् यो युधि वै जयेत तेनाद्य

मे पश्य युद्धं सुघोरम् ॥ १६ ॥ अतीव मानी पाण्डवो युद्धकामो ह्यमानुषैरेष्यति मे महास्त्रैः। अस्याहमस्त्रैः प्रतिहत्य सङ्ख्ये शरोत्तमैः पातयिष्यामि पार्थम् ॥१७॥ दिवाकरेणाभिसमं तपन्तं समाप्तरश्मिं यशसा ज्वलन्तम्। तमोनुदं मेघ इवातिमात्रं धनञ्जयं छादयिष्यामि बाणैः ॥ १८ ॥ वैश्वानरं धूमशिखं ज्वलन्तं तेजस्विनं लोकमिमं दहन्तम्। मेघो यथा शरवर्षैस्तथाहं कुन्तीपुत्रं शमयिष्यामि युद्धे ॥ १९ ॥ आशीविषं दुर्द्धरं वै सुघोरं सुतीक्ष्णदंष्ट्रं ज्वलनप्रभावम्। क्रोधप्रदीप्तमहितं दहन्तं कुन्तीपुत्रं शमयिष्यामि भल्लैः ॥ २० ॥ प्रमाथिनं बलवन्तं प्रहारिणं प्रभञ्जनं मातरिश्वानमुग्रम्। युद्धे सहिष्ये हिमवानिवाचलो धनञ्जयं क्रुद्धममृष्यमाणम् ॥ २१ ॥ विशारदं रथमार्गेषु शक्तं धुर्य्यं नित्यं समरेषु प्रवीरम्। लोके वरं सर्वधनुर्द्धराणां धनञ्जयं संयुगे संसहिष्ये ॥ २२ ॥ अद्याहवे यस्य न तुल्यमन्यं मन्ये मनुष्यं धनुराददानम्। सर्वामिमां यः पृथिवीं विजिग्ये तथा विद्वान् योत्स्यमानोऽस्मि तेन ॥ २३ ॥ यः सर्वभूतानि सदैवकानि प्रस्थेऽजयत् खाण्डवे सव्यसाची। को जीवितं रक्षमाणो हि तेन युयुत्सेदह मामृते मानुषोऽन्यः ॥ २४ ॥ मानी दृढास्त्रः कृतहस्तयोगो दिव्यास्त्रवित् श्वेतहयः प्रमाथी। तस्याहमद्यातिरथस्य कायात् शिरो हरिष्यामि शितैः पृषत्कैः ॥ २५ ॥ योत्स्याम्यहं शल्य धनञ्जयेन मृत्युं पुरस्कृत्य रणे जयं वा। अन्यो हि नास्त्येकरथेन मर्त्यो युध्येत यः पाण्डवं मृत्युकल्पम् ॥ २६ ॥ तस्याहवे पौरुषं पाण्डवस्य ब्रूयां हृष्टः समितौ क्षत्रियाणाम्। किं त्वं मूर्खः प्रसभं मूढचेताः ममावोचः पौरुषं फाल्गुनस्य ॥ २७ ॥ अप्रियो यः पुरुषो निष्ठुरो हि क्षुद्रः क्षेप्ता क्षमिणश्चाक्षमावान्। हन्यामहं तादृशानां शतानि क्षमाम्यहं क्षमया कालयोगात् ॥ २८ ॥ अवोचस्त्वं पाण्डवार्थेऽप्रियाणि प्रधर्षयन्मां मूढवत् पापकर्मा।

मय्यार्जवे जिह्ममतिर्हतस्त्वं मित्रद्रोही माप्तपदं हि मैवम् ॥ २९ ॥ कालस्त्वयं प्रत्युपयाति दारुणो दुर्योधनो युद्धमुपागमद्यत्। तस्यार्थसिद्धिं ह्यभिकाङ्क्षमाणस्तमन्यये यत्र नैकान्त्यमस्ति ॥ ३० ॥ मित्रं मिदेर्नन्दतेः प्रीयतेर्वा संत्रायतेर्मिनुतेर्मोदतेर्वा। ब्रवीमि ते सर्वमिदं ममास्ति तच्चापि सर्वं समवेत्ति राजा ॥ ३१ ॥ शत्रुः शदेः शासतेर्वा श्यतेर्वा शृणोतेर्वा श्वसतेः सीदतेर्वा। उपसर्गाद्बहुधा सूदतेश्च प्रायेण सर्वं त्वयि तच्च मह्यम् ॥ ३२ ॥ दुर्योधनार्थं तव च प्रियार्थं यशोऽर्थमात्मार्थमपीश्वरार्थम्। तस्मादहं पाण्डववासुदेवौ योत्स्ये यत्नात् कर्म तत् पश्य मेऽद्य ॥३३॥ अस्त्राणि पश्याद्य ममो त्तमानि ब्राह्माणि दिव्यान्यथ मानुषाणि। आसादयिष्याम्यहमुग्रवीर्यं द्विपो द्विपं मत्तमिवातिमत्तः ॥ ३४ ॥ अस्त्रं ब्राह्मं मनसा तद्धजय्यं क्षेप्स्ये पार्थायाप्रमेयं जयाय। तेनापि मे नैव मुच्येत युद्धे न चेत् पतेद्विषमे मेऽद्य चक्रम् ॥ ३५ ॥ वैवस्वताद्दण्डहस्ताद्वरुणाद्वापि पाशिनः। सगदाद्वा धनपतेः सवज्राद्वापि वासवात् ॥ ३६ ॥ अन्यस्मादपि कस्माच्चिदमित्रादाततायिनः। इति शल्य विजानीहि यथा नाहं बिभेम्यतः ॥ ३७ ॥ तस्मान्न मे भयं पार्थान्नापि चैव जनार्दनात्। सह युद्धं हि मे ताभ्यां साम्पराये भविष्यति ॥ ३८ ॥ कदाचिद्विजयस्याहमस्त्रहेतोरटन्नृप। अज्ञानादिक्षिपन् बाणान् घोररूपान् भयानकान् ॥ ३९ ॥ होमधेन्वा वत्समस्य प्रमत्त इषुणाहमम्। चरन्तं विजने शल्य ततोऽनुव्याजहार माम् ॥ ४० ॥ यस्मात्त्वया प्रमत्तेन होमधेन्वा हतः सुतः। श्वभ्रे ते पततां चक्रमिति मां ब्राह्मणोऽब्रवीत्। युध्यमानस्य संग्रामे प्राप्तस्यैकायनं भयम् ॥ ४१ ॥ तस्माद्बिभेमि बलवद्ब्राह्मणव्याहृतादहम्। एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥ ४२ ॥ अदां तस्मै गोसहस्रं बलीवर्दांश्च षट्शतान्। प्रसादं न लभे शल्य ब्राह्मणाद्मद्रकेश्वर ॥ ४३ ॥ ईषादन्तान्

सप्तशतान् दासीदासशतानि च । ददतो द्विजमुख्यो मे प्रसादं न
चकार सः ॥ ४४ ॥ कृष्णानां श्वेतवत्सानां सहस्राणि चतुर्दश ।
आहरन्न लभे तस्मात् प्रसादं द्विजसत्तमात् ॥ ४५ ॥ ऋद्धं गृहं
सर्वकामैर्यच्च मे वसु किञ्चन । तत् सर्वमस्मै सत्कृत्य प्रयच्छामि
न चेच्छति ॥ ४६ ॥ ततोऽब्रवीन्मां याचन्तमपराद्धं प्रयत्नतः ।
व्याहृतं यन्मया सूत तत्तथा न तदन्यथा ॥ ४७ ॥ अनृतोक्तं प्रजां
हन्यात्ततः पापमवाप्नुयाम् । तस्माद्धर्माभिरक्षार्थं नानृतं वक्तु-
मुत्सहे ॥ ४८ ॥ मा त्वं ब्रह्मगतिं हिंस्याः प्रायश्चित्तं कृतं त्वया ।
मद्वाक्यं नानृतं लोके कश्चित् कुर्य्यात् समाप्नुहि ॥ ४९ ॥ इत्येतत्ते
मया प्रोक्तं क्षिप्तेनापि सुहृत्तया । जानामि त्वां विक्षिपन्तं जोष-
मास्स्वोत्तरं शृणु ॥ ५० ॥

इति कर्णपर्वणि कर्णशल्यसंवादे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

सञ्जय उवाच । ततः पुनर्महाराज मद्रराजमरिन्दमः ।
अभ्यभाषत राधेयः सन्निवार्य्योत्तरं वचः ॥ १ ॥ यत्त्वं निदर्शनार्थं
मां शल्य जल्पितवानसि । नाहं शक्यस्त्वया वाचा वि[illegible]यितु-
माहवे ॥ २ ॥ यदि मां देवताः सर्वा योधयेयुः सवासवाः ।
तथापि मे भयं न स्यात् किमु पार्थात् सकेशवात् ॥ ३ ॥ नाहं
भीषयितुं शक्यो वाङ्मात्रेण कथञ्चन । अन्यं जानीहि यः शक्य-
स्त्वया भीषयितुं रणे ॥ ४ ॥ नीचस्य बलमेतावत् पारुष्यं यत्
त्वमात्थ माम् । अशक्तो मद्गुणान् वक्तुं वल्गसे बहु दुर्मते ॥ ५ ॥
न हि कर्णः समुद्भूतो भयार्थमिह मद्रक । विक्रमार्थमहं जातो
यशोऽर्थञ्च तथात्मनः ॥ ६ ॥ सखिभावेन सौहार्दान्मित्रभावेन चैव
हि । कारणैस्त्रिभिरेतैस्त्वं शल्य जीवसि साम्प्रतम् ॥ ७ ॥ राज्ञश्च
धृतराष्ट्रस्य कार्य्यं सुमहदुद्यतम् । मयि तच्चाहितं शल्य तेन

जीवसि मे क्षणम् ॥ ८ ॥ कृतश्च समयः पूर्वं क्षन्तव्यं विप्रियं वचः । समयः परिपाल्यो वै तेन जीवसि मद्रक ॥ ९ ॥ ऋते शल्यसहस्रेण विजयेयं परानहम् । मित्रद्रोहस्तु पापीयानिति जीवसि साम्प्रतम् ॥ १० ॥

इति कर्णपर्वणि कर्णशल्यसंवादे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

शल्य उवाच । ननु प्रलापाः कर्णैते यान् ब्रवीषि परान् प्रति । ऋते कर्णसहस्रेण शक्यं जेतुं परान् युधि ॥ १ ॥

सञ्जय उवाच । तथा ब्रुवन्तं परुषं कर्णो मद्राधिपं तदा । परुषं द्विगुणं भूयः प्रोवाचाप्रियदर्शनः ॥ २ ॥

कर्ण उवाच । इदन्तु मे त्वमेकाग्रः शृणु मद्रजनाधिप । सन्निधौ धृतराष्ट्रस्य प्रोच्यमानं मया श्रुतम् ॥ ३ ॥ देशांश्च विविधांश्चित्रान् पूर्ववृत्तांश्च पार्थिवान् । ब्राह्मणाः कथयन्तः स्म धृतराष्ट्रमुपासते ॥ ४ ॥ तत्र वृद्धः पुरावृत्ताः कथाः कश्चिद्द्विजोत्तमः । वाह्लीकदेशान् मद्रांश्च कुत्सयन् वाक्यमब्रवीत् ॥ ५ ॥ वहिष्कृता हिमवता गङ्गया च वहिष्कृताः । सरस्वत्या यमुनया कुरुक्षेत्रेण चापि ये ॥ ६ ॥ पञ्चानां सिन्धुषष्ठानां नदीनां येऽन्तराश्रिताः । तान् धर्मवाह्यानशुचीन् वाह्लीकान् परिवर्ज्जयेत् ॥ ७ ॥ गोवर्द्धनो नाम वटः सुभाण्डं नाम चत्वरम् । एतद्राजकुलद्वारमाकुमारात् स्मराम्यहम् ॥ ८ ॥ कार्य्येणात्यर्थगूढेन वाह्लकेषूषितं मया । ततस्तेषां समाचारः संवासाद्विदितो मया ॥ ९ ॥ शाकलं नाम नगरमापगा नाम निम्नगा । जर्त्तिका नाम वाह्लीकास्तेषां वृत्तं सुनिन्दितम् ॥ १० ॥ धानागौड़ासवं पीत्वा गोमांसं लशुनैः सह । अपूपमांसवाटयानामाशिनः शीलवर्ज्जिताः ॥ ११ ॥ हसन्त्यथ च नृत्यन्ति स्त्रियो मत्ता विवाससः । नगरागारवप्रेषु वहिर्माल्यानु-

लेपनाः ॥ १२ ॥ मत्तावगीतैर्विविधैः खरोष्ट्रनिनदोपमैः। अनावृता मैथुने ताः कामचाराश्च सर्वशः। आहुरन्योऽन्यसूक्तानि प्रब्रुवाना मदोत्कटाः॥ १३ ॥ हे हते हे हतेत्येवं स्वामिभर्त्तृहतेति च। आक्रोशन्त्यः प्रनृत्यन्ति व्रात्याः पर्वस्वसंयताः॥ १४ ॥ तासां किलावलिप्तानां निवसन् कुरुजाङ्गले। कश्चिद्वाहीकदुष्टानां नातिहृष्टमना जगौ ॥ १५ ॥ सा नूनं बृहती गौरी सूक्ष्मकम्बलवासिनी। मामनुस्मरती शेते वाहीकं कुरुवासिनम्॥ १६ ॥ शतद्रुकां नदीं तीर्त्त्वा ताञ्च रम्यामिरावतीम्। गत्वा स्वदेशं द्रक्ष्यामि स्थूलशङ्खाः शुभाः स्त्रियः ॥ १७ ॥ मनःशिलोज्ज्वलापाङ्गो गौर्य्यस्त्रिककुदञ्जनाः। कम्बलाजिनसम्वीताः कुर्वन्त्यः प्रियदर्शनाः ॥ १८ ॥ मृदङ्गानकशङ्खानां मर्द्दलानाञ्च निस्वनैः। खरोष्ट्राश्वतरैश्चैव मत्ता यास्यामहे सुखम्॥ १९ ॥ शमीपीलुकरीराणां वनेषु सुखवर्त्मसु। अपूपान् सक्तुपिण्डांश्च प्राश्नन्तो मथितान्वितान् ॥२०॥ पथिषु प्रबला भूत्वा कदा सम्पततोऽध्वगान्। चेलापहारं कुर्वाणास्ताड़यिष्याम भूयशः॥ २१ ॥ एवं शीलेषु व्रात्येषु वाहीकेषु दुरात्मसु। कश्चेतयानो निवसेन्मुहूर्त्तमपि मानवः ॥ २२ ॥ ईदृशा ब्राह्मणेनोक्ता वाहीका मोघचारिणः। येषां षड्भागहर्त्ता त्वमुभयोः शुभपापयोः॥ २३ ॥ इत्युक्त्वा ब्राह्मणः साधुरुत्तरं पुनरुक्तवान्। वाहीकेष्वविनीतेषु प्रोच्यमानं निबोधत ॥ २४ ॥ तत्र स्म राक्षसी गाति सदा कृष्णचतुर्द्दशीम्। नगरे शाकले स्फीते आहत्य निशि दुन्दुभिम्॥ २५ ॥ कदा वाहेयिका गाथाः पुनर्गास्यामि शाकले। गव्यस्य तृप्ता मांसस्य पीत्वा गौड़ं सुरासवम्॥ २६ ॥ गौरीभिः सह नारीभिर्वृहतीभिरलङ्कृता। पलाण्डुगण्डूषयुतान् खादन्ती चेड़ुकान् बहून् ॥२७॥ वाराहं कौक्कुटं मांसं गव्यं गार्द्दभमौष्ट्रिकम्। ऐड़ञ्च ये न खादन्ति तेषां जन्म निरर्थकम्॥ २८ ॥ इति गायन्ति ये मत्ताः शीधुना

याकलाश्च ये। सबालवृद्धाः क्रन्दन्तस्तेषु धर्मः कथं भवेत् ॥ २९ ॥
इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते। यदन्योऽप्युक्त-
वानस्मान् ब्राह्मणः कुरुसंसदि ॥ ३० ॥ पञ्च नद्यो वहन्त्येता यत्र
पीलुवनान्युत। शतद्रुश्च विपाशा च तृतीयैरावती तथा ॥ ३१ ॥
चन्द्रभागा वितस्ता च सिन्धुषष्ठा वहिर्गिरेः। आरट्टा नाम ते
देशा नष्टधर्मा न तान् व्रजेत् ॥ ३२ ॥ व्रात्यानां दासमीयानां
वेदेहानामयज्वनाम्। न देवाः प्रतिगृह्णन्ति पितरो ब्राह्मणा-
स्तथा ॥ ३३ ॥ तेषां प्रनष्टधर्माणां वाहीकानामिति श्रुतिः।
ब्राह्मणेन तथा प्रोक्तं विदुषा साधुसंसदि ॥ ३४ ॥ काष्ठकुण्डेषु
वाहीका मृण्मयेषु च भुञ्जते। सक्तुदाटयावलिप्तेषु श्वावलीढेषु
निर्घृणाः ॥ ३५ ॥ आविकञ्चौष्ट्रिकञ्चैव क्षीरं गार्द्दभमेव च।
तद्विकारांश्च वाहीकाः खादन्ति च पिबन्ति च ॥ ३६ ॥ पुत्र-
सङ्करिणो जाल्माः सर्व्वान्नक्षीरभोजनाः। आरट्टा नाम वाहीका
वर्ज्जनीया विपश्चिता ॥ ३७ ॥ हन्त शल्य विजानीहि हन्त भूयो
ब्रवीमि ते। यदन्योऽप्युक्तवान् मह्यं ब्राह्मणः कुरुसंसदि ॥ ३८ ॥
युगन्धरे पयः पीत्वा प्रोष्य चाप्यच्युतस्थले। तद्वद्भूतिलये स्नात्वा
कथं स्वर्गं गमिष्यति ॥ ३९ ॥ पञ्च नद्यो वहन्त्येता यत्र निःसृत्य
पर्व्वतात्। आरट्टा नाम वाहीका न तेष्वार्य्यो द्व्यहं वसेत् ॥ ४० ॥
वहिश्च नाम हीकश्च विपाशायां पिशाचकौ। तयोरपत्यं वाहीका
नैषा सृष्टिः प्रजापतेः। ते कथं विविधान् धर्मान् ज्ञास्यन्ते हीन-
योनयः ॥ ४१ ॥ कारस्करान्माहिषकान् कालिङ्गान् केरलांस्तथा।
कर्क्कोटकान् वीरकांश्च दुर्धर्मांश्च विवर्ज्जयेत् ॥ ४२ ॥ इति तीर्थां-
नुसर्त्तारं राक्षसी काचिदब्रवीत्। एकरात्रशयी गेहे महोलूखल-
मेखला ॥ ४३ ॥ आरट्टा नाम ते देशा वाहीका नाम ते जनाः।
ब्राह्मणापसदा यत्र तुल्यकालाः प्रजापतेः ॥ ४४ ॥ वेदा न तेषां
वेद्यञ्च यज्ञं यजनमेव च। व्रात्यानां दासमीयानामन्नं देवा न

भुञ्जते ॥ ४५ ॥ प्रस्थला मद्रगान्धारा आरट्टा नामतः खशाः ।
वसातिसिन्धुसौवीरा इति प्रायो विकुत्सिताः ॥ ४६ ॥

इति कर्णपर्वणि कर्णशल्यसंवादे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

कर्ण उवाच । हन्त शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
उच्यमानं मया सम्यक् त्वमेकाग्रमनाः शृणु ॥ १ ॥ ब्राह्मणः किल
नो गेहमभ्यागच्छत् पुरातिथिः । आचारं तत्र संप्रेक्ष्य प्रीतो
वचनमब्रवीत् ॥ २ ॥ मया हिमवतः शृङ्गमेकेनाध्युषितं चिरम् ।
दृष्टाश्च बहवो देशा नानाधर्मसमावृताः ॥ ३ ॥ न च केन च
धर्मेण विरुध्यन्ते प्रजा इमाः । सर्वे हि तेऽब्रुवन् धर्मं यदुक्तं
वेदपारगैः ॥ ४ ॥ अटता तु ततो देशान् नानाधर्मसमाकुलान् ।
आगच्छता महाराज वाहीकेषु निशामितम् ॥ ५ ॥ तत्र वै
ब्राह्मणो भूत्वा ततो भवति क्षत्रियः । वैश्यः शूद्रश्च वाहीकस्ततो
भवति नापितः ॥ ६ ॥ नापितश्च पुनर्भूत्वा ततो भवति ब्राह्मणः ।
द्विजो भूत्वा तु तत्रैव पुनर्दासोऽभिजायते ॥ ७ ॥ भवन्त्येककुले
विप्राः प्रहृष्टाः कामचारिणः । गान्धारा मद्रकाश्चैव वाहीका-
श्चाल्पचेतसः ॥८॥ एतन्मया श्रुतं तत्र धर्मसङ्करकारकम् । कृत्स्ना-
मटित्वा पृथिवीं वाहिकेषु विपर्ययः ॥ ९ ॥ हन्त शल्य विजा-
नीहि हन्त भूयो ब्रवीमि ते । यदप्यन्योऽब्रवीद्वाक्यं वाहीका-
नाञ्च कुत्सितम् ॥ १० ॥ सती पुरा हृता काचिदारट्टात् किल
दस्युभिः । अधर्मतश्चोपयाता सा तानभ्यशपत्ततः ॥ ११ ॥ बालां
बन्धुमतीं यन्मामधर्मेणोपगच्छथ । तस्मान्नार्यो भविष्यन्ति बन्धक्यो
वै कुलस्य वः ॥ १२ ॥ न चैवास्मात् प्रमोक्ष्यध्वं घोरात् पापा-
न्नराधमाः । तस्मात्तेषां भागहरा भागिनेया न सूनवः ॥ १३ ॥
कुरवः सहपाञ्चालाः शाल्वा मत्स्याः सनैमिषाः । कोसलाः काश-

श्चोऽङ्गाश्च कालिङ्गा मागधास्तथा ॥ १४ ॥ चेदयश्च महाभागा
धर्मं जानन्ति शाश्वतम्। नानादेशेषु सन्तश्च प्रायो वाह्लीकवर्जिताः ॥ १५ ॥ ब्राह्मणं मत्स्येभ्यः कुरुपाञ्चालदेश्या आनैमिषाच्चेदयो
ये विशिष्टाः। धर्मं पुराणमुपजीवन्ति सन्तो मद्रानृते पाञ्चनदांश्च
जिह्मान् ॥ १६ ॥ एवं विद्वान् धर्मकथासु राजंस्तूष्णीभूतो जड़-
वच्छल्य भूयाः। त्वं तस्य गोप्ता च जनस्य राजा षड्भागहर्ता
शुभदुष्कृतस्य ॥ १७ ॥ अथ वा दुष्कृतस्य त्वं हर्त्ता तेषामरक्षिता।
रक्षिता पुण्यभाग्राजा प्रजानां त्वं त्वपुण्यभाक् ॥ १८ ॥ पूज्यमाने
पुरा धर्मे सर्वदेशेषु शाश्वते। धर्मं पाञ्चनदं दृष्ट्वा धिगित्याह
पितामहः ॥ १९ ॥ व्रात्यानां दासमीयानां कृतेऽप्यशुभकर्मणाम्।
ब्रह्मणा निर्मिते धर्मे कस्तान् धिक्कर्त्तुमर्हति ॥ २० ॥ इति पाञ्च-
नदं धर्ममवमेने पितामहः। स्वधर्मस्थेषु वर्णेषु सोऽप्येतान्नाभ्य-
पूजयत् ॥ २१ ॥ हन्त शल्य विजानीहि हन्त भूयो ब्रवीमि ते।
कल्माषपादः सरसि निमज्जन्राक्षसोऽब्रवीत् ॥ २२ ॥ क्षत्रियस्य मलं
भैक्ष्यं ब्राह्मणस्याव्रतं मलम्। मलं पृथिव्या वाह्लीकाः स्त्रीणां
मद्रस्त्रियो मलम् ॥ २३ ॥ निमज्जमानमुद्धृत्य कश्चिद्राजा निशा-
चरम्। अपृच्छत्तेन चाख्यातं प्रोक्तवांस्तन्निबोध मे ॥ २४ ॥
मानुषाणां मलं म्लेच्छा म्लेच्छानामौष्ट्रिका मलम्। औष्ट्रिकाणां
मलं षण्डाः षण्डानां राजयाजकाः ॥ २५ ॥ राजयाजकयाज्यानां
मद्रकाणाञ्च यन्मलम्। तद्भवेद्वै तव मलं यद्यस्मांस्त्वं न मुञ्चसि
॥ २६ ॥ इति रक्षोपसृष्टेषु विषवीर्य्यहतेषु च। राक्षसं भेषजं
प्रोक्तं संसिद्धवचनोत्तरम् ॥ २७ ॥ ब्राह्मं पाञ्चालाः कौरवेयास्तु
धर्मं सत्यं मत्स्याः शूरसेनाश्च यज्ञम्। प्राच्या दासा वृषला
दाक्षिणात्याः स्तेना वाह्लीकाः सङ्करा वै सुराष्ट्राः ॥ २८ ॥ कृत-
घ्नता परवित्तापहारो मद्यपानं गुरुदारावमर्दः। वाक्पारुष्यं
गोवधो रात्रिचर्य्या वहिर्गेहं परवस्त्रोपभोगः। येषां धर्मस्तान्

प्रति नास्त्यधर्मो ह्यारट्टकान् पाञ्चनदान् धिगस्तु ॥ २९ ॥ पाञ्चालेभ्यः कुरवो नैमिषाश्च मत्स्याश्चैतेऽप्यथ जानन्ति धर्मम् । अथोदीच्याश्चाङ्गका मागधाश्च शिष्टान् धर्मानुपजीवन्ति वृद्धाः॥३०। प्राचीं दिशं श्रिता देवा जातवेदःपुरोगमाः । दक्षिणां पितरो गुप्तां यमेन शुभकर्मणा ॥ ३१ ॥ प्रतीचीं वरुणः पाति पालयन् सुरान् बली । उदीचीं भगवान् सोमो ब्राह्मणैः सह रक्षति ॥३२। तथा रक्षःपिशाचाश्च हिमवन्तं नगोत्तमम् । गुह्यकाश्च महाराज पर्वतं गन्धमादनम् । ध्रुवः सर्वाणि भूतानि विष्णुः पाति जनार्दनः ॥३३॥ इङ्गितज्ञाश्च मगधाः प्रेक्षितज्ञाश्च कोशलाः । अर्द्धोक्ताः कुरुपाञ्चालाः शाल्वाः कृत्स्नानुशासनाः ॥ ३४ ॥ पार्वतीयाश्च विषमा यथैव शिवयस्तथा । सर्वज्ञा यवना राजन् शूराश्चैव विशेषतः ॥ ३५ ॥ म्लेच्छाः स्वसंज्ञानियता नानुक्ता इतरे जनाः । प्रतिबद्धास्तु वाहीका न च केचन मद्रकाः । स त्वमेतादृशः शल्य नोत्तरं वक्तुमर्हसि ॥ ३६ ॥ पृथिव्यां सर्वदेशानां मद्रको मलमुच्यते । तथा स्त्रीणाञ्च सर्वासां मद्रिका मलमुच्यते ॥ ३७ ॥ शीधोः पानं गुरुतल्पावमर्द्दो भ्रूणहत्या परवित्तापहारः । येषां धर्मस्तान् प्रति नास्त्यधर्म आरट्टकान् पाञ्चनदान् धि[illegible]स्तु ॥ ३८ ॥ एतज्ज्ञात्वा जोषमास्स्व प्रतीपं मा स्म वै कृथाः । मा त्वां पूर्वमहं हत्वा हनिष्ये केशवार्जुनौ ॥ ३९ ॥

शल्य उवाच । आतुराणां परित्यागः स्वदारसुतविक्रयः । अङ्गेषु वर्त्तते कर्ण येषामधिपतिर्भवान् ॥४०॥ रथातिरथसङ्ख्यायां यत्त्वां भीष्मस्तदाब्रवीत् । तान् विदित्वात्मनो दोषान्निर्मन्युर्भव मा क्रुधः ॥ ४१ ॥ सर्वत्र ब्राह्मणाः सन्ति क्षत्रियाः सन्ति सर्वतः । वैश्याः शूद्रास्तथा कर्ण स्त्रियः साध्व्यश्च सुव्रताः ॥ ४२ ॥ रमन्ते चोपहासेन पुरुषाः पुरुषैः सह । अन्योऽन्यमतितक्षन्तो देशे देशे समैथुनाः ॥ ४३ ॥ परवाच्येषु निपुणः सर्वो भवति सर्वदा ।

आत्मवाच्यं न जानीते जानन्नपि च मुह्यति ॥ ४४ ॥ सर्व्वत्र सन्ति राजानः स्वं स्वं धर्ममनुव्रताः । दुर्मनुष्यान्निगृह्णन्ति सन्ति सर्व्वत्र धार्मिकाः ॥ ४५ ॥ न कर्ण देशसामान्यात् सर्व्वः पापं निषेवते । यादृशाः स्वस्वभावेन देवा अपि न तादृशाः ॥ ४६ ॥

सञ्जय उवाच । ततो दुर्य्योधनो राजा कर्णशल्याववारयत् । सखिभावेन राधेयं शल्यं स्वाजन्यकेन च ॥ ४७ ॥ ततो निवारितः कर्णो धार्त्तराष्ट्रेण मारिष । कर्णोऽपि नोत्तरं प्राह शल्योऽप्यभिमुखः परान् ॥४८॥ ततः प्रहस्य राधेयः पुनर्याहीत्यचोदयत् ॥४९॥

इति कर्णपर्व्वणि कर्णशल्यसंवादे पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

सञ्जय उवाच । ततः परानीकसहं व्यूहमप्रतिमं कृतम् । समीक्ष्य कर्णः पार्थानां धृष्टद्युम्नाभिरक्षितम् ॥ १ ॥ प्रययौ रथघोषेण सिंहनादरवेण च । वादित्राणाञ्च निनदैः कम्पयन्निव मेदिनीम् ॥ २ ॥ वेपमान इव क्रोधाद्युद्धशौण्डः परन्तपः । प्रतिव्यूह्य महातेजा यथावद्भरतर्षभ ॥ ३ ॥ व्यधमत् पाण्डवीं सेनामासुरीं मघवानिव । युधिष्ठिरञ्चाभ्यहनदपसव्यञ्चकार ह ॥ ४ ॥

धृतराष्ट्र उवाच । कथं सञ्जय राधेयः प्रत्यव्यूहत पाण्डवान् । धृष्टद्युम्नमुखान् सर्व्वान् भीमसेनाभिरक्षितान् । सर्व्वानेव महेष्वासानजय्यानमरैरपि ॥ ५ ॥ के च पक्षौ प्रपक्षौ वा मम सैन्यस्य सञ्जय । प्रविभज्य यथान्यायं कथं वा समवस्थिताः ॥ ६ ॥ कथं पाण्डुसुताश्चापि प्रत्यव्यूहन्त मामकान् । कथञ्चैव महद्युद्धं प्रावर्त्तत सुदारुणम् ॥ ७ ॥ क्व च वीभत्सुरभवत् यत् कर्णोऽयाद्युधिष्ठिरम् । को ह्यर्जुनस्य सान्निध्ये शक्तोऽभ्येतुं युधिष्ठिरम् ॥८॥ सर्व्वभूतानि यो ह्येकः खाण्डवे जितवान् पुरा । कस्तमन्यस्तु राधेयात् प्रतियुध्येज्जिजीविषुः ॥ ९ ॥

सञ्जय उवाच । शृणु व्यूहस्य रचनामर्जुनस्त्र यथागतः ।
परिवार्य्य नृपं स्वं स्वं संग्रामस्त्राभवर्य्यथा ॥ १० ॥ कृपः शारद्वतो
राजन्मागधाश्च तरस्विनः । सात्वतः कृतवर्म्मा च दक्षिणं पक्ष-
माश्रिताः ॥ ११ ॥ तेषां प्रपक्षौ शकुनिरुलूकश्च महारथः ।
सादिभिर्विमलप्रासैस्तवानीकमरक्षताम् ॥ १२ ॥ गान्धारिभिरसं-
भ्रान्तैः पार्वतीयैश्च दुर्ज्जयैः । शलभानामिव व्रातैः पिशाचैरिव
दुर्द्दृशैः ॥ १३ ॥ चतुस्त्रिंशत्सहस्राणि रथानामनिवर्त्तिनाम् ।
संशप्तका युद्धशौण्डा वामं पार्श्वमपालयन् । समन्वितास्तव सुतैः
कृष्णार्ज्जुनजिघांसवः ॥ १४ ॥ तेषां प्रपक्षाः काम्बोजाः शकाश्च
यवनैः सह । निदेशात् सूतपुत्रस्य सरथाः शाश्वपत्तयः । आह्व-
यन्तोऽर्ज्जुनं तस्थुः केशवञ्च महाबलम् ॥ १५ ॥ मध्ये सेनामुखे
कर्णो व्यवातिष्ठत दंशितः । चित्रवर्म्माङ्गदः स्रग्वी पालयन् वाहिनी-
मुखम् ॥ १६ ॥ रक्ष्यमाणः सुसंरब्धैः पुत्रैः शस्त्रभृतां वरः ।
वाहिनीप्रमुखे वीरः संप्रकर्षन्नशोभत ॥ १७ ॥ अभ्यवर्त्तन्महाबाहु-
सूर्य्यवैश्वानरप्रभः । महाद्विपस्कन्धगतः पिङ्गाक्षः प्रियदर्शनः ॥१८॥
दुःशासनो वृतःसैन्यैः स्थितो व्यूहस्य पृष्ठतः । तमन्वयान्महा-
राज स्वयं दुर्य्योधनो नृपः । चित्राश्वैश्चित्रसन्नाहैः सोदर्य्यैरभि-
रक्षितः ॥ १९ ॥ रक्ष्यमाणो महावीर्य्यैः सहितैर्मद्रकेकयैः ।
अशोभत महाराज देवैरिव शतक्रतुः ॥ २० ॥ अश्वत्थामा कुरू-
णाञ्च ये प्रवीरा महारथाः । नित्यमत्ताश्च मातङ्गाः शूरैर्म्लेच्छैः
समन्विताः । अन्वयुस्तद्रथानीकं क्षरन्त इव तोयदाः ॥ २१ ॥ ते
ध्वजैर्वैजयन्तीभिर्ज्वलद्भिः परमायुधैः । सादिभिश्चास्थिता रेजु-
र्द्रुमवन्त इवाचलाः ॥ २२ ॥ तेषां पदातिनागानां पादरक्षाः
सहस्रशः । पट्टिशासिधराः शूरा बभूवुरनिवर्त्तिनः ॥ २३ ॥
सादिभिस्यन्दनैर्नागैरधिकं समलंकृतैः । स व्यूहराजो विबभौ
देवासुरचमूपमः ॥ २४ ॥ बार्हस्पत्यः सुविहितो नायकेन विप-

स्थिता । नृत्यतीव महाव्यूहः परेषां भयमादधत् ॥ २५ ॥ तस्य पक्षप्रपक्षेभ्यो निष्पतन्ति युयुत्सवः । पत्त्यश्वरथमातङ्गाः प्रावृषीव बलाहकाः ॥ २६ ॥ ततः सेनामुखे कर्णं दृष्ट्वा राजा युधिष्ठिरः । धनञ्जयममित्रघ्नमेकवीरमुवाच ह ॥ २७ ॥ पश्यार्जुन महाव्यूहं कर्णेन विहितं रणे । युक्तं पक्षैः प्रपक्षैश्च परानीकं प्रकाशते ॥ २८ ॥ तदेतद्वै समालोक्य प्रत्यमित्रं महाबलम् । यथा नाभिभवत्यस्मांस्तथा नीतिर्विधीयताम् ॥ २९ ॥ एवमुक्तोऽर्जुनो राज्ञा प्राञ्जलिर्नृपमब्रवीत् । यथा भवानाह तथा तत् सर्वं न तदन्यथा ॥ ३० ॥ यस्त्वस्य विहितो घातस्तं करिष्यामि भारत । प्रधानवध एवास्य विनाशस्तं करोम्यहम् ॥ ३१ ॥

युधिष्ठिर उवाच । तस्मात्त्वमेव राधेयं भीमसेनः सुयोधनम् । वृषसेनञ्च नकुलः सहदेवोऽपि सौबलम् ॥ ३२ ॥ दुःशासनं शतानीको हार्दिक्यं शिनिपुङ्गवः । पाण्ड्यो द्रोणसुतं यातु स्वयं योत्स्याम्यहं कृपम् ॥ ३३ ॥ द्रौपदेया धार्त्तराष्ट्रान् शिष्टान् सह शिखण्डिना । ते ते च तांस्तान् सहितानस्माकं घ्नन्तु मामकाः ॥३४॥

सञ्जय उवाच । इत्युक्तो धर्मराजेन तथेत्युक्त्वा धनञ्जयः । व्यादिदेश स्वसैन्यानि स्वयञ्चागाच्चमूमुखम् ॥ ३५ ॥ अग्निर्वैश्वानरः पूर्वो ब्रह्मेशः सम्भितां गतः । तस्माद्यः प्रथमो जातस्तं देवा ब्राह्मणं विदुः ॥३६॥ ब्रह्मेशानेन्द्रवरुणान् क्रमशो योऽवहत् पुरा । तमाद्यं रथमास्थाय प्रयातौ केशवार्जुनौ ॥ ३७ ॥ अथ तं रथमायान्तं दृष्ट्वा चाद्भुतदर्शनम् । उवाचाधिरथिं शल्यः पुनस्तं युद्धदुर्मदम् ॥ ३८ ॥ अयं स रथ आयाति श्वेताश्वः कृष्णसारथिः । दुर्वारः सर्वसैन्यानां विपाकः कर्मणामिव । निघ्नन्नमित्रान् कौन्तेयो यं कर्ण परिपृच्छसि ॥ ३९ ॥ श्रूयते तुमुलः शब्दो यथा मेघस्वनो महान् । ध्रुवमेतौ महात्मानौ वासुदेवधनञ्जयौ ॥ ४० ॥ एष रेणुः समुद्भूतो दिवमावृत्य तिष्ठति । चक्रनेमिप्रणुन्नेव कम्पते

कर्ण मेदिनी ॥ ४१ ॥ प्रवात्येष महावायुरभितस्तव वाहिनीम् ।
क्रव्यादा व्याहरन्त्येते मृगाः क्रन्दन्ति भैरवम् ॥ ४२ ॥ पश्य कर्ण
महाघोरं भयदं लोमहर्षणम् । कबन्धं मेघसङ्काशं भानुमावृत्य
संस्थितम् ॥ ४३ ॥ पश्य यूथैर्बहुविधैर्मृगाणां सर्वतो दिशम् ।
बलिभिः कर्ण शार्दूलैरादित्योऽभिनिरीक्ष्यते ॥ ४४ ॥ पश्य कङ्कांश्च
गृध्रांश्च समवेतान् सहस्रशः । स्थितानभिमुखान् घोरानन्योऽन्य-
मभिभाषतः ॥ ४५ ॥ रञ्जिताश्चामरा युक्तास्तव कर्ण महारथे ।
प्रदराः प्रज्वलन्त्येते ध्वजश्चैव प्रकम्पते ॥ ४६ ॥ सवेपथून् हयान्
पश्य महाकायान्महाजवान् । प्लवमानान् दर्शनीयानाकाशे गरु-
डानिव ॥ ४७ ॥ ध्रुवमेषु निमित्तेषु भूमिमाश्रित्य पार्थिवाः ।
स्वप्स्यन्ति निहताः कर्ण शतशोऽथ सहस्रशः ॥ ४८ ॥ शङ्खानां
तुमुलः शब्दः श्रूयते लोमहर्षणः । आनकानाञ्च राधेय मृदङ्गा-
नाञ्च सर्वशः ॥ ४९ ॥ बाणशब्दान् बहुविधान् नराश्वरथनिस्व-
नान् । ज्यातलत्रेषु शब्दांश्च शृणु कर्ण महात्मनाम् ॥ ५० ॥ हेम-
रूप्यप्रसृष्टानां वाससां शिल्पनिर्मिताः । नानावर्णा रथे भान्ति
श्वसनेन प्रकम्पिताः ॥५१॥ सहेमचन्द्रतारार्काः पताकाः किङ्किणी-
युताः । पश्य कर्णार्जुनस्यैताः सौदामिन्य इवाम्बुदे ॥ ५२ ॥
ध्वजाः कणकणायन्ते वातेनाभिसमीरिताः । विभ्राजन्ति रणे कर्ण
विमाने देवता यथा । सपताका रथाश्चैते पाञ्चालानां महात्मनाम्
॥ ५३ ॥ पश्य कुन्तीसुतं वीरं बीभत्सुमपराजितम् । प्रधर्षयितु-
मायान्तं कपिप्रवरकेतनम् ॥ ५४ ॥ एष ध्वजाग्रे पार्थस्य प्रेक्ष-
णीयः समन्ततः । दृश्यते वानरो भीमो द्विषतां भयवर्द्धनः ॥ ५५ ॥
एतच्चक्रं गदा शार्ङ्गं शङ्खः कृष्णस्य धीमतः । अत्यर्थं भ्राजते कृष्णे
कौस्तुभस्तु मणिस्ततः ॥ ५६ ॥ एष शार्ङ्गगदापाणिर्वासुदेवोऽति-
वीर्य्यवान् । वाहयन्नेति तुरगान् पाण्डरान् वातरंहसः ॥ ५७ ॥
एतत् कूजति गाण्डीवं विकृष्टं सव्यसाचिना । एते हस्तवता मुक्ता

घ्नन्त्यभिवान् स्थिताः शराः ॥ ५८ ॥ विशालायतताम्राक्षैः पूर्ण-चन्द्रनिभाननैः। एषा भूः कीर्य्यते राज्ञां शिरोभिरपलायिनाम् ॥ ५९ ॥ एते परिघसङ्काशाः पुष्पगन्धानुलेपनाः। उद्यतायुध-शौण्डानां पात्यन्ते सायुधा भुजाः ॥ ६० ॥ निरस्तनेत्रजिह्वान्त्रा वाजिनः सह सादिभिः। पतिताः पात्यमानाश्च क्षितौ क्षीणाश्च शेरते ॥ ६१ ॥ एते पर्व्वतशृङ्गाणां तुल्यरूपा हता द्विपाः। सं-छिन्नभिन्नाः पार्थेन प्रपतन्त्यद्रयो यथा ॥ ६२ ॥ गन्धर्व्वनगराकारा रथा हतनरेश्वराः। विमानानीव पुण्यान्ते स्वर्गिणां निपतन्त्यमी ॥ ६३ ॥ व्याकुलीकृतमत्यर्थं पश्य सैन्यं किरीटिना। नानामृग-सहस्राणां यूथं केशरिणा यथा ॥ ६४ ॥ घ्नन्त्येते पार्थिवान् वीराः पाण्डवाः समभिद्रुताः। नागाश्वरथपत्त्यौघांस्तावकान् समभि-घ्नतः ॥ ६५ ॥ एष सूर्य्य इवाम्भोदैश्छन्नः पार्थो न दृश्यते। ध्वजाग्रं दृश्यते तस्य ज्याशब्दश्चापि श्रूयते ॥ ६६ ॥ अद्य द्रष्टासि तं वीरं श्वेताश्वं कृष्णसारथिम्। निघ्नन्तं शात्रवान् सङ्ख्ये यं कर्ण परिपृच्छसि ॥ ६७ ॥ अद्य तौ पुरुषव्याघ्रौ लोहिताक्षौ परन्तपौ। वासुदेवार्जुनौ कर्ण द्रष्टास्येकरथे स्थितौ ॥ ६८ ॥ सारथिर्यस्य वार्ष्णेयो गाण्डीवं यस्य कार्म्मुकम्। तञ्चेद्धन्तासि राधेय त्वन्नो राजा भविष्यसि ॥ ६९ ॥ एष संशप्तकाहूतस्तानेवा-भिमुखो गतः। करोति कदनञ्चैषां संग्रामे द्विषतां बली ॥ ७० ॥ इति ब्रुवाणं मद्रेशं कर्णः प्राहातिमन्युवान्। पश्य संशप्तकैः क्रुद्धैः सर्व्वतः समभिद्रुतः ॥ ७१ ॥ एष सूर्य्य इवाम्भोदैश्छन्नः पार्थो न दृश्यते। एतदन्तोऽर्जुनः शल्य निमग्नो योधसागरे ॥ ७२ ॥

शल्य उवाच। वरुणं कोऽम्भसा हन्यादिन्धनेन च पावकम्। कोऽनिलं वा निगृह्णीयात् पिबेद्वा को महार्णवम् ॥ ७३ ॥ ईदृग्रूप-महं मन्ये पार्थस्य युधि निग्रहम्। न हि शक्योऽर्जुनो जेतुं युधि सेन्द्रैः सुरासुरैः ॥ ७४ ॥ अथ वा परितोषस्ते वाचोक्त्वा सुमना

भव। न स शक्यो युधा जेतुमन्यं कुरु मनोरथम् ॥ ७५ ॥
बाहुभ्यामुद्धरेद्भूमिं दहेत क्रुद्ध इमाः प्रजाः। पातयेत्त्रिदिवाद्देवान्
योऽर्जुनं समरे जयेत् ॥ ७६ ॥ पश्य कुन्तीसुतं वीरं भीममक्लिष्ट-
कारिणम्। प्रभासन्तं महाबाहुं स्थितं मेरुमिवापरम् ॥ ७७ ॥
अमर्षी नित्यसंरब्धश्चिरवैरमनुस्मरन्। एष भीमो जयप्रेप्सुर्युधि
तिष्ठति वीर्य्यवान् ॥ ७८ ॥ एष धर्मभृतां श्रेष्ठो धर्मराजो युधि-
ष्ठिरः। तिष्ठत्यसुकरः सङ्ख्ये परैः परपुरञ्जयः ॥ ७९ ॥ एतौ
च पुरुषव्याघ्रावश्विनाविव सोदरौ। नकुलः सहदेवश्च तिष्ठतो
युधि दुर्जयौ ॥ ८० ॥ दृश्यन्त एते कार्ष्णेयाः पञ्च पञ्चाचला इव।
व्यवस्थिता योद्धुकामाः सर्व्वेऽर्जुनसमा युधि ॥ ८१ ॥ एते द्रुपद-
पुत्राश्च धृष्टद्युम्नपुरोगमाः। स्फीताः सत्यजितो वीरास्तिष्ठन्ति
परमौजसः ॥ ८२ ॥ असाविन्द्र इवासह्यः सात्यकिः सात्वतां वरः।
युयुत्सुरुपयात्यस्मान् क्रुद्धान्तकसमः पुरः ॥ ८३ ॥ इति संवदतो
रेव तयोः पुरुषसिंहयोः। ते सेने समसज्जेतां गङ्गायमुनवद्भृ-
शम् ॥ ८४ ॥

इति कर्णपर्व्वणि कर्णशल्यसंवादे षट्चत्वारिंशोऽध्यायः ॥ ॥

---

धृतराष्ट्र उवाच। तथा व्यूढेष्वनीकेषु संसक्तेषु च सञ्जय।
संशप्तकान् कथं पार्थो गतः कर्णश्च पाण्डवान् ॥ १ ॥ एतद्विस्तरशो
युद्धं प्रब्रूहि कुशलो ह्यसि। न हि तृप्यामि वीराणां शृण्वानो
विक्रमान्रणे ॥ २ ॥

सञ्जय उवाच। तथास्थितमवज्ञाय प्रत्यमित्रबलं महत्।
अव्यूहतार्जुनो व्यूहं पुत्रस्य तव दुर्नये ॥ ३ ॥ तत् सादिनाग-
कलिलं पदातिपथसंकुलम्। धृष्टद्युम्नमुखं व्यूढमशोभत महद्-
बलम् ॥ ४ ॥ पारावतसवर्णाश्वश्चन्द्रादित्यसमद्युतिः। पार्षतः

प्रथमो धन्वी कालो विग्रहवानिव ॥ ५ ॥ पार्श्वतस्त्वभितस्तस्थु-
र्द्रौपदेया युयुत्सवः। दिव्यवर्मायुधधराः शार्दूलसमविक्रमाः।
सानुगा दीप्तवपुषश्चन्द्रं तारागणा इव ॥ ६ ॥ अथ व्यूढेष्वनीकेषु
प्रेक्ष्य संशप्तकान्रणे। क्रुद्धोऽर्जुनोऽभिदुद्राव व्याक्षिपन् गाण्डिवं
धनुः ॥ ७ ॥ अथ संशप्तकाः पार्थमभ्यधावन् वधैषिणः। विजये
धृतसङ्कल्पा मृत्युं कृत्वा निवर्त्तनम् ॥ ८ ॥ तन्नराश्वौघबहुलं मत्त-
नागरथाकुलम्। पत्तिमच्छूरवीरौघं द्रुतमर्ज्जुनमार्द्दयत् ॥ ९ ॥
स संप्रहारस्तुमुलस्तेषामासीत् किरीटिना। तस्यैव नः श्रुतो
यादृङ्निवातकवचैः सह ॥ १० ॥ रथानश्वान् ध्वजान्नागान् पत्ती-
न्रणगतानपि। इषून् धनूंषि खड्गांश्च चक्राणि च परश्वधान्
॥ ११ ॥ सायुधानुद्यतान् बाहून् विविधान्यायुधानि च। चिच्छेद
द्विषतां पार्थः शिरांसि च सहस्रशः ॥ १२ ॥ तस्मिन् सैन्यमहावर्त्ते
पातालतलसन्निभे। निमग्नं तं रथं मत्वा नेदुः संशप्तकास्तदा
॥ १३ ॥ स पुरस्तादरीन् हत्वा पुनरुत्तरतोऽवधीत्। दक्षिणेन
च पश्चाच्च क्रुद्धो रुद्रः पशूनिव ॥ १४ ॥ अथ पाञ्चालचेदीनां सृञ्ज-
यानाञ्च मारिष। त्वदीयैः सह संग्राम आसीत् परमदारुणः
॥ १५ ॥ कृपश्च कृतवर्मा च शकुनिश्चापि सौबलः हृष्टसेनाः
सुसंरब्धा रथानीकप्रहारिणः ॥ १६ ॥ कोशलैः काशिमत्स्यैश्च
कारुषैः कैकयैरपि। शूरसेनैः शूरवरैर्युयुधुर्युद्धदुर्मदाः ॥ १७ ॥
तेषामन्तकरं युद्धं देहपाप्मासुनाशनम्। क्षत्रविट्शूद्रवीराणां
धर्म्यं स्वर्ग्यं यशस्करम् ॥ १८ ॥ दुर्य्योधनोथ सहितो भ्रातृभि-
र्भरतर्षभ। गुप्तः कुरुप्रवीरैश्च मद्राणाञ्च महारथैः ॥ १९ ॥
पाण्डवैः सह पाञ्चालैश्चेदिभिः सात्यकेन च। युध्यमानं रणे कर्णं
कुरुवीरोऽभ्यपालयत् ॥ २० ॥ कर्णोऽपि निशितैर्वाणैर्विनिहत्य
महाचमूम्। प्रमथ्य च रथश्रेष्ठान् युधिष्ठिरमपीड़यत् ॥ २१ ॥
विवर्मायुधदेहासून् कृत्वा शत्रून् सहस्रशः। युक्त्वा स्वर्गयशोभ्याञ्च

स्त्रेभ्यो मुहुर्मुहुराक्षपत् ॥ २२ ॥ एवं मारिष संग्रामो नरवाजिरथ-
क्षयः। कुरूणां सृञ्जयानाञ्च देवासुरसमोऽभवत् ॥ २३ ॥

इति कर्णपर्वणि संकुलयुद्धे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

धृतराष्ट्र उवाच। यत्तत् प्रविश्य पार्थानां सैन्यं कुर्वत् जन-
क्षयम्। कर्णो राजानमभ्यर्च्छत्तमाचक्ष्व सञ्जय ॥ १ ॥ के च
प्रवीराः पार्थानां युधि कर्णमवारयन्। कांश्च प्रमथ्याधिरथिर्युधि-
ष्ठिरमपीड़यत् ॥ २ ॥

सञ्जय उवाच। धृष्टद्युम्नमुखान् पार्थान् दृष्ट्वा कर्णो व्यव-
स्थितान्। समभ्यधावत्त्वरितः पाञ्चालान् शत्रुकर्षणः ॥ ३ ॥ तं
तूर्णमभिधावन्तं पाञ्चाला जितकाशिनः। प्रत्युद्ययुर्महात्मानं हंसा
इव महार्णवम् ॥ ४ ॥ ततः शङ्खसहस्राणां निस्वनो हृदयङ्गमः।
प्रादुरासीदुभयतो भेरीशब्दश्च दारुणः ॥ ५ ॥ नानावादित्रनादश्च
द्विपाश्वरथनिस्वनः। सिंहनादश्च वीराणामभवद्दारुणस्तदा ॥ ६ ॥
साद्रिद्रुमार्णवा भूमिः सवाताम्बुदमम्बरम्। सार्केन्दुग्रहन[illegible]त्रा
द्यौश्च व्यक्तं विघूर्णिता ॥ ७ ॥ इति भूतानि तं शब्दं [illegible]न्वते ते
च विव्यथुः। यानि चाप्यल्पसत्त्वानि प्रायस्तानि मृतानि च ॥ ८ ॥
अथ कर्णो भृशं क्रुद्धः शीघ्रमस्त्रमुदीरयन्। जघान पाण्डवीं
सेनामासुरीं मघवानिव ॥ ९ ॥ स पाण्डवबलं कर्णः प्रविश्य
विसृजन् शरान्। प्रभद्रकाणां प्रवरानहनत् सप्तसप्ततिम् ॥ १० ॥
ततः सुपुङ्खैर्निशितै रथश्रेष्ठो रथेषुभिः। अवधीत् पञ्चविंशत्या
पाञ्चालान् पञ्चविंशतिम् ॥ ११ ॥ सुवर्णपुङ्खैर्नाराचैः परकायविदा-
रणैः। चेदिकानवधीद्वीरः शतशोऽथ सहस्रशः ॥ १२ ॥ तं तथा
समरे कर्म कुर्वाणमतिमानुषम्। परिवव्रुर्महाराज पाञ्चालानां
रथव्रजाः ॥ १३ ॥ ततः सन्धाय विशिखान् पञ्च भारत दुःसहान्।

पाञ्चालानवधीत् पञ्च कर्णो वैकर्त्तनो वृषः ॥ १४ ॥ भानुदेवं चित्रसेनं सेनाबिन्दुञ्च भारत। तपनं शूरसेनञ्च पाञ्चालानहनद्रणे ॥ १५ ॥ पाञ्चालेषु च शूरेषु वध्यमानेषु सायकैः। हाहाकारो महानासीत् पाञ्चालानां महाहवे ॥ १६ ॥ परिवव्रुर्महाराज पाञ्चालानां रथा दश। पुनरेव च तान् कर्णो जघानाशु पतत्रिभिः ॥ १७ ॥ चक्ररक्षौ तु कर्णस्य पुत्रौ मारिष दुर्ज्जयौ। सुषेणः सत्यसेनश्च त्यक्त्वा प्राणानयुध्यताम् ॥ १८ ॥ पृष्ठगोप्ता तु कर्णस्य ज्येष्ठः पुत्रो महारथः। वृषसेनः स्वयं कर्णं पृष्ठतः पर्य्यपालयत् ॥ १९ ॥ धृष्टद्युम्नः सात्यकिश्च द्रौपदेया वृकोदराः। जनमेजयः शिखण्डी च प्रवीराश्च प्रभद्रकाः ॥ २० ॥ चेदिकैकयपाञ्चाला यमौ मत्स्याश्च दंशिताः। समभ्यधावन्राधेयं जिघांसन्तः प्रहारिणम् ॥ २१ ॥ त एनं विविधैः शस्त्रैः शरधाराभिरेव च। अभ्यवर्षन् विमर्द्दन्तं प्रावृषीवाम्बुदा गिरिम् ॥ २२ ॥ पितरन्तु परीप्सन्तः कर्णपुत्राः प्रहारिणः। त्वदीयाश्चापरे राजन् वीरा वीरानवारयन् ॥ २३ ॥ सुषेणो भीमसेनस्य छित्त्वा भल्लेन कार्म्मुकम्। नाराचैः सप्तभिर्विद्ध्वा हृदि भीमं ननाद ह ॥ २४ ॥ अथान्यद्धनुरादाय सुदृढ़ं भीमविक्रमः। सज्यं वृकोदरः कृत्वा सुषेणस्याच्छिनद्धनुः ॥ २५ ॥ विव्याध चैनं दशभिः क्रुद्धो नृत्यन्निवेषुभिः। कर्णञ्च तूर्णं विव्याध सप्तत्या निशितैः शरैः ॥ २६ ॥ भानुसेनञ्च दशभिः साश्वसूतायुधध्वजम्। पश्यतां सुहृदां मध्ये कर्णपुत्रमपातयत् ॥ २७ ॥ क्षुरप्रणुन्नं तत्तस्य शिरश्चन्द्रनिभाननम्। शुभदर्शनमेवासीन्नालभ्रष्टमिवाम्बुजम् ॥ २८ ॥ हत्वा कर्णसुतं भीमस्तावकान् पुनरार्द्दयत्। कृपहार्द्दिक्ययोश्छित्त्वा चापौ तावप्यथार्द्दयत् ॥ २९ ॥ दुःशासनं त्रिभिर्विद्ध्वा शकुनिं षड्भिरायसैः। उलूकञ्च पतत्रिञ्च चकार विरथावुभौ ॥ ३० ॥ हा सुषेण हतोऽसीति ब्रुवन्नादत्त सायकम्। यमस्य कर्णश्छित्त्वेद

त्रिभिश्चैनमताड़यत् ॥ ३१ ॥ अथान्यं परिजग्राह सुपर्वाणं सुतेजनम् । सुषेणायाहजङ्कीमस्तमप्यस्याच्छिनद्वृषः ॥ ३२ ॥ पुनः कर्णस्त्रिंशता भीमसेनमथेषुभिः । पुत्रं परीप्सन् विव्याध क्रूरं क्रूरैर्जिघांसया ॥ ३३ ॥ सुषेणस्तु धनुर्गृह्य भारसाधनमुत्तमम् । नकुलं पञ्चभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ ३४ ॥ नकुलस्तन्तु विंशत्या विद्ध्वा भारसहैर्दृढैः । ननाद बलवन्नादं कर्णस्य भयमादधत् ॥ ३५ ॥ तं सुषेणो महाराज विद्ध्वा दशभिराशुगैः । चिच्छेद च धनुः शीघ्रं क्षुरप्रेण महारथ ॥ ३६ ॥ अथान्यद्धनुरादाय नकुलः क्रोधमूर्च्छितः । सुषेणं नवभिर्बाणैर्वारयामास संयुगे ॥ ३७ ॥ स तु बाणैर्दिशो राजन्नाच्छाद्य परवीरहा । आजघ्ने सारथिञ्चास्य सुषेणञ्च ततस्त्रिभिः । चिच्छेद चास्य सुदृढं धनुर्भल्लैस्त्रिभिस्त्रिधा ॥ ३८ ॥ अथान्यद्धनुरादाय सुषेणः क्रोधमूर्च्छितः । अविध्यन्नकुलं षष्ट्या सहदेवञ्च सप्तभिः ॥ ३९ ॥ तद्युद्धं सुमहद्घोरमासीद्देवासुरोपमम् । निघ्नतां सायकैस्तूर्णमन्योऽन्यस्य वधं प्रति ॥ ४० ॥ सात्यकिर्वृषसेनस्य सूतं हत्वा त्रिभिः शरैः । धनुश्चिच्छेद भल्लेन जघानाश्वांश्च सप्तभिः ॥ ४१ ध्वजमेकेषुणोन्मथ्य त्रिभिस्तं हृद्यताड़यत् । अथावसन्नः [illegible] रथे मुहूर्त्तात् पुनरुत्थितः ॥ ४२ ॥ स रणे युयुधानेन विसूताश्वरथध्वजः । कृतो जिघांसुः शैनेयं खड्गचर्मभृदभ्ययात् ॥४३॥ तस्य चाप्लवतः शीघ्रं वृषसेनस्य सात्यकिः । वराहकर्णैर्दशभिरविध्यदसिचर्मणी ॥ ४४ ॥ दुःशासनस्तु तं दृष्ट्वा विरथं व्यायुधं कृतम् । आरोप्य स्वरथं तूर्णमपोवाह रथान्तरम् ॥ ४५ ॥ अथान्यं रथमास्थाय वृषसेनो महारथः । द्रौपदेयांस्त्रिसप्तत्या युयुधानञ्च पञ्चभिः ॥४६ भीमसेनं चतुःषष्ट्या सहदेवञ्च पञ्चभिः । नकुलं त्रिंशता बाणैः शतानीकञ्च सप्तभिः ॥ ४७ ॥ शिखण्डिनञ्च दशभिर्धर्मराजं शतेन च एतांश्चान्यांश्च राजेन्द्र प्रवीरान् जयगृद्धिनः ॥ ४८ ॥ अभ्य-

हेयमहेष्वासः कर्णपुत्रो विशाम्पते। कर्णस्य युधि दुर्धर्षस्ततः पृष्ठमपालयत् ॥ ४९ ॥ दुःशासनश्च शैनेयो नवैर्नवभिराशुगैः। विसूताश्वरथं कृत्वा ललाटे त्रिभिरार्पयत् ॥ ५० ॥ स त्वन्यं रथमास्थाय विधिवत् कल्पितं पुनः। युयुधे पाण्डवैः सार्द्धं कर्णस्याप्याययन् बलम् ॥ ५१ ॥ धृष्टद्युम्नस्ततः कर्णमविध्यद्दशभिः शरैः। द्रौपदेयास्त्रिसप्तत्या युयुधानस्तु सप्तभिः ॥ ५२ ॥ भीमसेनश्चतुःषष्ट्या सहदेवश्च सप्तभिः। नकुलस्त्रिंशता वाणैः शतानीकश्च सप्तभिः। शिखण्डी दशभिर्वीरो धर्मराजः शतेन च ॥५३॥ एते चान्ये च राजेन्द्र प्रवीरा जयगृद्धिनः। अभ्यर्द्दयन्महेष्वासं सूतपुत्रं महामृधे ॥ ५४ ॥ तान् सूतपुत्रो विशिखैर्दशभिर्दशभिः शरैः। रथेनानुचरन् वीरः प्रत्यविध्यदरिन्दमः ॥ ५५ ॥ तत्रास्त्रवीर्य्यं कर्णस्य लाघवञ्च महात्मनः। अपश्याम महाराज तदद्भुतमिवाभवत् ॥ ५६ ॥ न ह्याददानं ददृशुः सन्दधानञ्च सायकान्। विमुञ्चन्तञ्च संरम्भाद्ददृशुस्ते हतानरीन् ॥ ५७ ॥ द्यौर्वियद्भूर्दिशश्चैव प्रपूर्णा निशितैः शरैः। अरुणाभ्रावृताकारं तस्मिन्देशे वभौ वियत् ॥ ५८ ॥ नृत्यन्निव हि राधेयश्चापहस्तः प्रतापवान्। यैर्विद्धः प्रत्यविध्यत्तानेकैकं त्रिगुणैः शरैः ॥ ५९ ॥ दशभिर्दशभिश्चैनान् पुनर्विद्धा ननाद च। साश्वसूतरथच्छत्रास्ततस्ते विवरं ददुः ॥ ६० ॥ तान् प्रमथ्य महेष्वासान्राधेयः शरवृष्टिभिः। राजानीकमसंबाधं प्राविशच्छत्रुकर्षणः ॥ ६१ ॥ स रथांस्त्रिंशतं हत्वा चेदीनामनिवर्त्तिनाम्। राधेयो निशितैर्वाणैस्ततोऽभ्यर्च्छद्युधिष्ठिरम् ॥ ६२ ॥ ततस्ते पाण्डवा राजन् शिखण्डी च ससात्यकिः। राधेयात् परिरक्षन्तो राजानं पर्य्यवारयन् ॥६३॥ तथैव तावकाः सर्वे कर्णं दुर्वारणं रणे। यत्ताः शूरा महेष्वासाः पर्य्यरक्षन्त सर्वशः ॥ ६४ ॥ नानावादित्रघोषाश्च प्रादुरासन् विशाम्पते। सिंहनादश्च सञ्जज्ञे शूराणामभिगर्ज्जताम् ॥ ६५ ॥ ततः

पुनः समाजग्मुरभीताः कुरुपाण्डवाः । युधिष्ठिरमुखाः पार्थाः सूतपुत्रमुखा वयम् ॥ ६६ ॥

इति कर्णपर्वणि संकुलयुद्धे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

सञ्जय उवाच । विदार्य्य कर्णस्तां सेनां धर्म्म मुपाद्रवत् । रथहस्त्यश्वपत्तीनां सहस्रैः परिवारितः ॥ १ ॥ नानायुधसहस्राणि प्रेषितान्यरिभिर्वृषः । छित्त्वा बाणशतैरुग्रैस्तानविध्यदसंभ्रमात् ॥ २ ॥ निचकर्त्त शिरांस्येषां बाहूनूरूंश्च सूतजः । ते हता वसुधां पेतुर्भग्नाश्चान्ये विदुद्रुवुः ॥ ३ ॥ द्रविडान्ध्रनिषादाश्च पुनः सात्यकिचोदिताः । अभ्यद्रवन् जिघांसन्तः पत्तयः कर्णमाहवे ॥ ४ ॥ ते विबाहुशिरस्त्राणाः प्रहताः कर्णसायकैः । पेतुः पृथिव्यां युगपच्छिन्नं शालवनं यथा ॥ ५ ॥ एवं योधशतान्याजौ सहस्राण्ययुतानि च । हतानीयुर्महीं देहैर्यशसापूर्य्य रोदसी ॥ ६ ॥ अथ वैकर्त्तनं कर्णं रणे क्रुद्धमिवान्तकम् । रुरुधुः पाण्डुपाञ्चाला व्याधिं मन्त्रौषधैरिव ॥ ७ ॥ स तान् प्रमृद्याभ्यपतत् पुनरेव युधिष्ठिरम् । मन्त्रौषधिक्रियातीतो व्याधिरत्युल्बणो यथा ॥ ८ ॥ स राजगृद्धिभी रुद्धः पाण्डुपाञ्चालकेकयैः । नाशकत्तानतिक्रान्तुं मृत्युर्ब्रह्मविदो यथा ॥ ९ ॥ ततो युधिष्ठिरः कर्णमदूरस्थं निवारितम् । अब्रवीत् परवीरघ्नं क्रोधसंरक्तलोचनः ॥ १० ॥ कर्ण कर्ण वृथादृष्टे सूतपुत्र वचः शृणु । सदा स्पर्द्धसि संग्रामे फाल्गुनेन तरस्विना ॥ ११ ॥ तथास्मान् बाधसे नित्यं धार्त्तराष्ट्रमते स्थितः । यद्बलं यच्च ते वीर्य्यं प्रद्वेषो यश्च पाण्डुषु ॥ १२ ॥ तत् सर्वं दर्शयाद्यत्वं पौरुषं महदास्थितः । युद्धश्रद्धाञ्च तेऽद्याहं विनेष्यामि महाहवे ॥ १३ ॥ एवमुक्त्वा महाराज कर्णं पाण्डुसुतस्तदा । सुवर्णपुङ्खैर्दशभिर्विव्याधायसमयैः शरैः ॥ १४ ॥ तं सूत-

[illegible] खण्डम् ।

... LIB ... 2 JAN 97 COOCH BEHAR.

# MAHABHARATAM

## KARNA PARVA

TEXT

PUBLISHED AND DISTRIBUTED GRATIS

BY

PRATAPA CHANDRA ROY, C. I. E.

# श्रीमहाभारतम् ।

श्रीमन्महर्षिवेदव्यासविरचितम् ।

कर्णपर्व्व ।

सि, आइ, इ, उपाधिधारिणा

रायश्रीप्रतापचन्द्रेण

प्रकाशितम्

मूल्यं विना वितीर्णञ्च ।

"[illegible]"

---

तृतीयसंस्करणम् ।

कलिकाता बीडन ष्ट्रीटान्तर्गत

१ नं राजा गुरुदास ष्ट्रीट् भारतयन्त्रे

श्रीकालिदास सेनेन मुद्रितम् ।

शकाब्दाः १८११ ।

२७श खण्ड ।

पुत्रो दशभिः प्रत्यविध्यदरिन्दमः। वत्सदन्तैर्महेष्वासः प्रहसन्निव भारत ॥ १५ ॥ सोऽवज्ञाया तु निर्विद्धः सूतपुत्रेण मारिष। प्रजज्वाल महाबाहुर्हविषेव हुताशनः ॥ १६ ॥ ततो विस्फार्य्य सुमहच्चापं हेमपरिष्कृतम्। समाधत्त शितं वाणं गिरीणामपि दारणम् ॥ १७ ॥ ततः पूर्णायतोत्कर्षं यमदण्डनिभं शरम्। मुमोच त्वरितो राजा सूतपुत्रजिघांसया ॥ १८ ॥ स तु वेगवता मुक्तो वाणो वज्राग्निस्वन। विभेद सहसा कर्णं सव्यपार्श्वे महारथम् ॥ १९ ॥ स तु तेन प्रहारेण पीड़ितः प्रमुमोह वै। स्रस्तगात्रो महाबाहुर्धनुरुत्सृज्य स्यन्दने ॥ २० ॥ ततो हाहा-कृतं सर्वं धार्त्तराष्ट्रबलं महत्। विवर्णमुखभूयिष्ठं दृष्ट्वा कर्णं तथागतम् ॥ २१ ॥ सिंहनादश्च सञ्जज्ञे क्ष्वेड़ाः किलकिलास्तथा। पाण्डवानां महाराज दृष्ट्वा राज्ञः पराक्रमम् ॥ २२ ॥ प्रतिलभ्य तु राधेयः संज्ञां नातिचिरादिव। दध्रे राजन् विनाशाय मनः क्रूरपराक्रमः ॥ २३ ॥ स हेमविकृतं चापं विस्फार्य्य विजयं महत्। अवारयदमेयात्मा पाण्डवं निशितैः शरैः ॥ २४ ॥ ततः क्षुराभ्यां पाञ्चाल्यौ चक्ररक्षौ महात्मनः। जघान चन्द्रदेवञ्च दण्डधारञ्च संयुगे ॥ २५ ॥ तावुभौ धर्म्मराजस्य प्रवीरौ परि-पार्श्वतः। रथाभ्यासे चकाशेते चन्द्रस्येव पुनर्वसू ॥ २६ ॥ युधि-ष्ठिरः पुनः कर्णमविध्यत्त्रिंशता शरैः। सुषेणं सत्यसेनञ्च त्रिभि-स्त्रिभिरताड़यत् ॥ २७ ॥ शल्यं नवत्या विव्याध त्रिसप्तत्याथ सूतजम्। तांश्चास्य गोप्तॄन् विव्याध त्रिभिस्त्रिभिरजिह्मगैः ॥ २८ ॥ ततः प्रहस्याधिरथिर्विधुन्वानः स्वकार्मुकम्। छित्त्वा भल्लेन राजानं विद्ध्वा षष्ट्यानदत्तदा ॥ २९ ॥ ततः प्रवीराः पाण्डूनामभ्यधाव-न्नमर्षिताः। युधिष्ठिरं परीप्सन्तः कर्णमभ्यर्द्दयञ्छरैः ॥ ३० ॥ सात्यकिश्चेकितानश्च युयुत्सुः पाण्ड्य एव च। धृष्टद्युम्नः शिखण्डी च द्रौपदेयाः प्रभद्रकाः ॥ ३१ ॥ यमौ च भीमसेनश्च शिशुपालस्य

चालजः। कारूषा मत्स्यशूराश्च कैकयाः काशिकोशलाः ॥ ३२ ॥ एते च त्वरिता वीरा वसुषेणमताड़यन् ॥ जनमेजयश्च पाञ्चाल्यः कर्णं विव्याध सायकैः ॥ ३३ ॥ वराहकर्णनाराचैर्नालीकैर्निशितैः शरैः। वत्सदन्तैर्विपाठैश्च क्षुरप्रैश्चटकामुखैः ॥ ३४ ॥ नानाप्रहरणैश्चोग्रै रथहस्त्यश्वसादिभिः। सर्व्वतोऽभ्यद्रवन् कर्णं परिवार्य्य जिघांसया ॥ ३५ ॥ स पाण्डवानां प्रवरैः सर्व्वतः समभिद्रुतः। उदीरयन् ब्राह्ममस्त्रं शरैरापूरयद्दिशः ॥ ३६ ॥ ततः शरमहाज्वालो वीर्य्योष्मा कर्णपावकः। निर्द्दहन् पाण्डववनं वीरः पर्य्यचरद्रणे ॥ ३७ ॥ स सन्धाय महास्त्राणि महेष्वासो महामनाः। प्रहस्य पुरुषेन्द्रस्य शरैश्चिच्छेद कार्म्मुकम् ॥ ३८ ॥ ततः सन्धाय नवतिं निमेषान्नतपर्व्वणः। बिभेद कवचं राज्ञो रणे कर्णः शितैः शरैः ॥ ३९ ॥ तद्वर्म हेमविकृतं रत्नचित्रं बभौ पतत्। सविद्युदभ्रं सवितुः श्लिष्टं वातहतं यथा ॥ ४० ॥ तदङ्गात् पुरुषेन्द्रस्य भ्रष्टं वर्म व्यरोचत। रत्नैरलंकृतं मुख्यैर्व्यभ्रं निशि यथाम्बरम् ॥ ४१ ॥ छिन्नवर्म्मा शरैः पार्थो रुधिरेण समुक्षितः। क्रुद्धः सर्व्वायसीं शक्तिं चिक्षेपाधिरथिं प्रति ॥ ४२ ॥ तां ज्वलन्तीमिवाकाशे शरैश्चिच्छेद सप्तभिः। सा छिन्ना भूमिमगमन्महेष्वासस्य सायकैः ॥ ४३ ॥ ततो बाह्वोर्ललाटे च हृदि चैव युधिष्ठिरः। चतुर्भिस्तोमरैः कर्णं ताड़यित्वानदन्मुदा ॥ ४४ ॥ उद्भिन्नरुधिरः कर्णः क्रुद्धः सर्प इव श्वसन्। ध्वजं चिच्छेद भल्लेन त्रिभिर्विव्याध पाण्डवम्। इषुधी चास्य चिच्छेद रथञ्च तिलशोऽच्छिनत् ॥ ४५ ॥ कालवालास्तु ये पार्थं दन्तवर्णावहन् हयाः। तैर्युक्तं रथमास्थाय प्रायाद्राजा पराङ्मुखः ॥ ४६ ॥ एवं पार्थोऽभ्यपायात् स निहतः पार्ष्णिसारथिः। अशक्नुवन् प्रमुखतः स्थातुं कर्णस्य दुर्म्मनाः ॥ ४७ ॥ अभिद्रुत्य तु राधेयः स्कन्धे संस्पृश्य पाणिना। अब्रवीत् प्रहसन्राजन् कुत्सयन्निव पाण्डवम् ॥ ४८ ॥

कथं नाम कुले जातः क्षत्रधर्मे व्यवस्थितः। प्रजह्यात् समरं भीतः प्राणांस्त्वं महाहवे ॥ ४९ ॥ न भवान् क्षत्रधर्मेषु कुशलो, हीति मे मतिः। ब्राह्मे बले भवान् युक्तः स्वाध्याये यज्ञकर्मणि ॥ ५० ॥ मास्म युध्यस्व कौन्तेय मास्म वीरान् समासदः। मा चैनानप्रियं ब्रूहि मा वै व्रज महारणम् ॥ ५१ ॥ एवमुक्त्वा ततः पार्थं विसृज्य च महाबलः। न्यहनत् पाण्डवीं सेनां वज्रहस्त इवासुरीम् ॥ ५२ ॥ ततोऽपायाद्द्रुतं राजन् व्रीड़न्निव जनेश्वरः ॥ ५३ ॥ अथापयातं राजानं मत्वान्वीयुस्तमच्युतम्। चेदि-पाण्डवपाञ्चालाः सात्यकिश्च महारथः। द्रौपदेयास्तथा शूरा माद्रीपुत्रौ च पाण्डवौ ॥ ५४ ॥ ततो युधिष्ठिरानीकं दृष्ट्वा कर्णः पराङ्मुखम्। कुरुभिः सहितो वीरः प्रहृष्टः पृष्ठतोऽन्वगात् ॥५५॥ भेरीशङ्खमृदङ्गानां कार्म्मुकाणाञ्च निस्वनैः। बभूव धार्त्तराष्ट्राणां सिंहनादरवस्तथा ॥ ५६ ॥ युधिष्ठिरस्तु कौरव्य रथमारुह्य सत्वरः। श्रुतकीर्त्तेर्महाराज दृष्टवान् कर्णविक्रमम् ॥ ५७ ॥ काल्यमानं बलं दृष्ट्वा धर्मराजो युधिष्ठिरः। स्वान् योधानब्रवीत् क्रुद्धो निघ्नतैनान् किमासत ॥ ५८ ॥ ततो राज्ञाभ्यनुज्ञाताः पाण्डवानां महारथाः। भीमसेनमुखाः सर्वे पुत्रांस्ते प्रत्युपाद्रवन् ॥५९॥ अभवत्तुमुलः शब्दो योधानां तव भारत। रथहस्त्यश्वपत्तीनां शस्त्राणाञ्च ततस्ततः ॥ ६० ॥ उत्तिष्ठत प्रहरत प्रैतातिपततेति च। इति ब्रुवाणा ह्यन्योन्यं जघ्नुर्योधा महारणे ॥ ६१ ॥ अभ्रच्छायेव तत्रासीच्छरवृष्टिभिरम्बरे। समावृतैर्नरवरैर्निघ्नद्भिरितरेतरम् ॥ ६२ ॥ विपताकध्वजच्छत्रा व्यश्वसूतायुधा रणे। व्यङ्गाङ्गावयवाः पेतुः क्षितौ क्षीणाः क्षितीश्वराः ॥ ६३ ॥ प्रवणादिव शैलानां शिखराणि द्विपोत्तमाः। सारोहा निहताः पेतुर्वज्रभिन्ना इवाद्रयः ॥ ६४ ॥ छिन्नभिन्नविपर्य्यस्तैर्वर्मालङ्कारभूषणैः। सारोहास्तुरगाः पेतुर्हतवीराः सहस्रशः ॥ ६५ ॥ विप्रविद्धायुधा

श्चाश्च द्विरदाश्वरथैर्हताः । प्रतिवीरैश्च संमर्द्य पत्तिसङ्घाः सहस्रशः ॥६६॥ विशालायतताम्राक्षैः पद्मेन्दुसदृशाननैः । शिरोभिर्युद्धशौण्डानां सर्वतः संवृता मही ॥ ६७ ॥ यथा भुवि तथा व्योम्नि निस्वनं शुश्रुवुर्जनाः । विमानैरप्सरःसङ्घैर्गीतवादित्रनिस्वनैः ॥ ६८ ॥ हतानभिमुखान् वीरान् वीरैः शतसहस्रशः । आरोप्यारोप्यगच्छन्ति विमानेष्वप्सरोगणाः ॥ ६९ ॥ तद्दृष्ट्वा महदाश्चर्य्यं प्रत्यक्षं स्वर्गलिप्सया । प्रहृष्टमनसः शूराः क्षिप्रं जघ्नुः परस्परम् ॥ ७० ॥ रथिनो रथिभिः सार्द्धं चित्रं युयुधुराहवे । पत्तयः पत्तिभिर्नागाः सह नागैर्हयैर्हयाः ॥ ७१ ॥ एवं प्रवृत्ते संग्रामे गजवाजिनरक्षये । सैन्येन रजसा व्याप्ते स्वे स्वान् जघ्नुः परे परान् ॥ ७२ ॥ कचाकचि युद्धमासीद्दन्तादन्ति नखानखि । मुष्टियुद्धं नियुद्धञ्च देहपाप्मासुनाशनम् ॥ ७३ ॥ तथावर्त्तति संग्रामे गजवाजिरनरक्षये । नराश्वगजदेहेभ्यः प्रसृता लोहितापगा ॥ ७४ ॥ नराश्वगजदेहान् सा व्यवाह पतितान् बहून् ॥ ७५ ॥ रथ्याश्वगजसम्बाधे नराश्वरथसादिनाम् । लोहितोदा महाघोरा मांसशोणितकर्दमा । नराश्वगज[illegible]न् सा वहन्ती भीरुभीषणा ॥ ७६ ॥ तस्याः पारमपारञ्च व्रजन्ति विजयैषिणः । गाधेन चाप्लवन्ति स्म निमज्योन्मज्य चापरे ॥ ७७ ॥ ते तु लोहितदिग्धाङ्गा रक्तवर्मायुधाम्बराः । सस्नुस्तस्यां पपुस्तस्यां मम्लुश्च भरतर्षभ ॥ ७८ ॥ रथानश्वान्नरान्नागानायुधाभरणानि च । वसनान्यथ वर्माणि वध्यमानान् हतानपि । खं द्यां भूमिं दिशश्चैव प्रायः पश्याम लोहिताः ॥ ७९ ॥ लोहितस्य तु गन्धेन स्पर्शेन च रसेन च । रूपेण चातिरिक्तेन शब्देन च विसर्पता । विषादः सुमहानासीत् प्रायः सैन्यस्य मारिष ॥ ८० ॥ तत्तु विप्रहतं सैन्यं भीमसेनमुखास्तदा । भूयः समाद्रवन् वीराः सात्यकिप्रमुखास्तदा ॥ ८१ ॥ तेषामापततां वेगमविषह्यं निरीक्ष्य च ।

पुत्राणां ते महत् सैन्यमासीद्राजन् पराङ्मुखम् ॥ ८२ ॥ तत्
प्रकीर्णरथाश्वेभं नरवाजिसमाकुलम्। विध्वस्तचर्मकवचं प्रविद्धा-
युधकार्मुकम् ॥ ८३ ॥ व्यद्रवत्तावकं सैन्यं लोड्यमानं समन्ततः।
सिंहार्द्दितमिवारण्ये यथा गजकुलं तथा ॥ ८४ ॥

इति कर्णपर्व्वणि संकुलयुद्धे एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

---

सञ्जय उवाच। तानभिद्रवतो दृष्ट्वा पाण्डवांस्तावकं बलम्।
दुर्य्योधन महाराज वारयामास सर्व्वशः ॥ १ ॥ योधांश्च स्वबल-
श्चैव समन्ताद्भरतर्षभ। क्रोशतस्तव पुत्रस्य न स्म राजन्न्यवर्त्तत॥२॥
ततः पक्षः प्रपक्षश्च शकुनिश्चापि सौबलः। तदा सशस्त्राः कुरवो
भीममभ्यद्रवन्रणे ॥ ३ ॥ कर्णोऽपि दृष्ट्वा द्रवतो धार्त्तराष्ट्रान् स-
राजकान्। मद्रराजमुवाचेदं याहि भीमरथं प्रति ॥ ४ ॥ एव-
मुक्तस्तु कर्णेन शल्यो मद्राधिपस्तदा। हंसवर्णान् हयानग्र्यान्
प्रैषीद्यत्र वृकोदरः ॥ ५ ॥ ते प्रेषिता महाराज शल्येनाहव-
शोभिना। भीमसेनरथं प्राप्य समसज्जन्त वाजिनः ॥ ६ ॥ दृष्ट्वा
कर्णं समायान्तं भीमः क्रोधसमन्वितः। मतिं चक्रे विनाशाय
कर्णस्य भरतर्षभ ॥ ७ ॥ सोऽब्रवीत् सात्यकिं वीरं धृष्टद्युम्नञ्च
पार्षतम्। यूयं रक्षत राजानं धर्मात्मानं युधिष्ठिरम्। संशया-
न्महतो मुक्तं कथञ्चित् प्रेक्षतो मम ॥ ८ ॥ अग्रतो मे कृतो राजा
छिन्नसर्व्वपरिच्छदः। दुर्य्योधनस्य प्रीत्यर्थं राधेयेन दुरात्मना॥९॥
अन्तमद्य गमिष्यामि तस्य दुःखस्य पार्षत। हन्तास्म्यद्य रणे
कर्णं स वा मां निहनिष्यति। संग्रामेण सुघोरेण सत्यमेतद्-
ब्रवीमि ते ॥ १० ॥ राजानमद्य भवतां न्यासभूतं ददामि वै।
तस्य संरक्षणे सर्व्वे यतध्वं विगतज्वराः ॥ ११ ॥ एवमुक्त्वा महा-
बाहुः प्रायाद्राधेयमभि प्रति। सिंहनादेन महता सर्व्वाः सन्ना-

दयन्दिषः ॥ १२ ॥ दृष्ट्वा त्वरितमायान्तं भीमं युद्धाभिनन्दिनम्। सूतपुत्रमथोवाच मद्राणामीश्वरो विभुः ॥ १३ ॥

शल्य उवाच। पश्य कर्ण महाबाहुं संक्रुद्धं पाण्डुनन्दनम्। दीर्घकालार्जितं क्रोधं मोक्तुकामं त्वयि ध्रुवम् ॥ १४ ॥ ईदृशं नास्य रूपं मे दृष्टपूर्वं कदाचन। अभिमन्यौ हते कर्ण राक्षसे च घटोत्कचे ॥ १५ ॥ त्रैलोक्यस्य समस्तस्य शक्तः क्रुद्धो निवारणे। बिभर्त्ति यादृशं रूपं युगान्ताग्निसमप्रभम् ॥ १६ ॥

सञ्जय उवाच। इति ब्रुवति राधेयं मद्राणामीश्वरे नृप। अभ्यवर्त्तत वै कर्णं क्रोधदीप्तो वृकोदरः ॥ १७ ॥ तथागतन्तु संप्रेक्ष्य भीमं युद्धाभिनन्दिनम्। अब्रवीद्वचनं शल्यं राधेयः प्रहसन्निव ॥ १८ ॥ यदुक्तं वचनं मेऽद्य त्वया मद्रजनेश्वर। भीमसेनं प्रति विभो तत् सत्यं नात्र संशयः ॥ १९ ॥ एष शूरश्च वीरश्च क्रोधनश्च वृकोदरः। निरपेक्षः शरीरे च प्राणतश्च बलाधिकः ॥ २० ॥ अज्ञातवासं वसता विराटनगरे तदा। द्रौपद्याः प्रियकामेन केवलं बाहुसंश्रयात्। गूढभावं समाश्रित्य कीचकः सगणो हतः ॥ २१ ॥ सोऽद्य संग्रामशिरसि सन्नद्धः क्रोधमूर्च्छितः। किङ्करोद्यतदण्डेन मृत्युनापि व्रजेद्रणे ॥ २२ ॥ चिरकालाभिलषितो ममायन्तु मनोरथः। अर्जुनं समरे हन्यां मां वा हन्याद्धनञ्जयः ॥ २३ ॥ स मे कदाचिदद्यैव भवेद्भीमसमागमात् ॥ २४ ॥ निहते भीमसेने तु यदि वा विरथीकृते। अभियास्यति मां पार्थस्तन्मे साधु भविष्यति। अत्र यन्मन्यसे प्राप्तं तच्छीघ्रं संप्रधारय ॥ २५ ॥ एतच्छ्रुत्वा तु वचनं राधेयस्यामितौजसः। उवाच वचनं शल्यः सूतपुत्रं तथागतम् ॥ २६ ॥ अभियाहि महाबाहो भीमसेनं महाबलम्। निरस्य भीमसेनन्तु ततः प्राप्स्यसि फाल्गुनम् ॥ २७ ॥ यस्ते कामोऽभिलषितश्चिरात्प्रभृति हृद्गतः। स वै संपत्स्यते कर्ण सत्यमेतद्ब्रवीमि ते ॥ २८ ॥ एवमुक्ते ततः कर्णः शल्य

पुनरभाषत । हन्तार्जुनमहं सङ्ख्ये मां वा हन्याद्धनञ्जयः । युद्धे मनः समाधाय याहि यत्र वृकोदरः ॥ २९ ॥

सञ्जय उवाच । ततः प्रायाद्रथेनाशु शल्यस्तत्र विशाम्पते । यत्र भीमो महेष्वासो व्यद्रावयत वाहिनीम् ॥ ३० ॥ ततस्तूर्य्यनिनादश्च भेरीणाञ्च महास्वनः । उदतिष्ठच्च राजेन्द्र कर्णभीमसमागमे ॥ ३१ ॥ भीमसेनोऽथ संक्रुद्धस्तव सैन्यं दुरासदम् । नाराचैर्विमलैस्तीक्ष्णैर्दिशः प्राद्रावयद्बली ॥ ३२ ॥ स सन्निपातस्तुमुलो घोररूपो विशाम्पते । आसीद्रौद्रो महाराज कर्णपाण्डवयोर्मृधे । ततो मुहूर्त्ताद्राजेन्द्र पाण्डवः कर्णमाद्रवत् ॥३३॥ तमापतन्तं संप्रेक्ष्य कर्णो वैकर्त्तनो वृषः । आजघान सुसंक्रुद्धो नाराचेन स्तनान्तरे ॥ ३४ ॥ पुनश्चैनममेयात्मा शरवर्षैरवाकिरत् । स विद्धः सूतपुत्रेण छादयामास पत्रिभिः ॥ ३५ ॥ विव्याध निशितैः कर्णं नवभिर्नतपर्व्वभिः । तस्य कर्णो धनुर्मध्ये द्विधा चिच्छेद पत्रिभिः ॥ ३६ ॥ अथैनं छिन्नधन्वानं प्रत्यविध्यत् स्तनान्तरे । नाराचेन सुतीक्ष्णेन सर्व्वावरणभेदिना ॥ ३७ ॥ सोऽन्यत् कार्मुकमादाय सूतपुत्रं वृकोदरः । राजन्मर्मसु मर्मज्ञो विव्याध निशितैः शरैः । ननाद बलवन्नादं कम्पयन्निव मेदिनीम् ॥ ३८ ॥ तं कर्णः पञ्चविंशत्या नाराचानां समार्पयत् । मदोत्कटं वने दृप्तमुल्काभिरिव कुञ्जरम् ॥ ३९ ॥ ततः सायकभिन्नाङ्गः पाण्डवः क्रोधमूर्च्छितः । संरम्भामर्षताम्राक्षः सूतपुत्रवधेप्सया ॥ ४० ॥ स कार्मुके महावेगं भारसाधनमुत्तमम् । गिरीणामपि भेत्तारं सायकं समयोजयत् ॥ ४१ ॥ विकृष्य बलवच्चापमाकर्णादतिमारुतिः । तं मुमोच महेष्वासः क्रुद्धः कर्णजिघांसया ॥ ४२ ॥ स विसृष्टो बलवता बाणो वज्राशनिस्वनः । अदारयद्रणे कर्णं वज्रवेगो यथाचलम् ॥ ४३ ॥ स भीमसेनाभिहतः सूतपुत्रः कुरूद्वह । निषसाद रथोपस्थे विसंज्ञः पृतनापतिः ॥ ४४ ॥ ततो

महाधिपो दृष्ट्वा विसंज्ञं सूतनन्दनम्। अपोवाह रथेनाजौ कर्ण-माहवशोभिनम् ॥ ४५ ॥ ततः पराजिते कर्णे धार्त्तराष्ट्रीं महा-चमूम्। व्यद्रावयद्भीमसेनो यथेन्द्रो दानवान् पुरा ॥ ४६ ॥

इति कर्णपर्वणि कर्णापयाने पञ्चाशोऽध्यायः ॥ ५० ॥

---

धृतराष्ट्र उवाच। सुदुष्करमिदं कर्म कृतं भीमेन सञ्जय। येन कर्णो महाबाहुरथोपस्थे निपातितः ॥ १ ॥ कर्णो ह्येको रणे हन्ता पाण्डवान् सृञ्जयैः सह। इति दुर्य्योधनः सूत प्राब्रवीन्मां मुहुर्मुहुः ॥ २ ॥ पराजितन्तु राधेयं दृष्ट्वा भीमेन संयुगे। ततः परं किमकरोत् पुत्रो दुर्य्योधनो मम ॥ ३ ॥

सञ्जय उवाच। विमुखं प्रेक्ष्य राधेयं सूतपुत्रं महाहवे। पुत्रस्तव महाराज सोदर्य्यान् समभाषत ॥ ४ ॥ शीघ्रं गच्छत भद्रं वो राधेयं परिरक्षत। भीमसेनभयागाधे मज्जन्तं व्यसना-र्णवे ॥ ५ ॥ ते तु राज्ञा समादिष्टा भीमसेनं जिघांसवः। अभ्य-वर्त्तन्त संक्रुद्धाः पतङ्गाः पावकं यथा ॥ ६ ॥ श्रुतर्वा दुर्धरः क्राथो विवित्सुर्विकटः समः। निषङ्गी कवची पाशी तथा नन्दोप-नन्दकौ ॥ ७ ॥ दुष्प्रधर्षः सुबाहुश्च वातवेगसुवर्च्चसौ। धनुर्ग्राहो दुर्मदश्च जलसन्धः शलः सहः ॥ ८ ॥ एते रथैः परिवृता वीर्य्य-वन्तो महाबलाः। भीमसेनं समासाद्य समन्तात् पर्य्यवारयन् ॥ ९ ॥ ते व्यमुञ्चन् शरव्रातान् नानालिङ्गान् समन्ततः ॥ १० ॥ स तैरभ्यर्द्द्यमानस्तु भीमसेनो महाबलः। तेषामापततां क्षिप्रं पुत्राणां ते जनाधिप। रथैः पञ्चशतैः सार्द्धं पञ्चाशद्हनद्रथान् ॥ ११ ॥ विवित्सोस्तु ततः क्रुद्धो भल्लेनापहरच्छिरः। भीमसेनो महाराज तत् पपात ततो भुवि। सकुण्डलशिरस्त्राणं पूर्णचन्द्रो-पमं तदा। तं दृष्ट्वा निहतं शूरं भ्रातरः सर्वतः प्रभो। अभ्य-

द्रवन्त समरे भीमं भीमपराक्रमम् ॥ १३ ॥ ततोऽपराभ्यां भल्लाभ्यां पुत्रयोस्ते महाहवे । जहार समरे प्राणान् भीमो भीमपराक्रमः ॥ १४ ॥ तौ धरामन्वपद्येतां वातरुग्णाविव द्रुमौ । विकटश्च सहस्राभो देवपुत्रोपमौ नृप ॥ १५ ॥ ततस्तु त्वरितो भीमः क्राथं निन्ये यमक्षयम् । नाराचेन सुतीक्ष्णेन स हतो न्यपतद्भुवि ॥१६॥ हाहाकारस्ततस्तीव्रः सम्बभूव जनेश्वर । वध्यमानेषु वीरेषु तव पुत्रेषु धन्विषु ॥ १७ ॥ तेषां संलुलिते सैन्ये पुनर्भीमो महाबलः । नन्दोपनन्दौ समरे प्रैषयद्यमसादनम् ॥ १८ ॥ ततस्ते प्राद्रवन् भीताः पुत्रास्ते विह्वलीकृताः । भीमसेनं रणे दृष्ट्वा कालान्तकयमोपमम् ॥ १९ ॥ पुत्रांस्ते निहतान् दृष्ट्वा सूतपुत्रः सुदुर्मनाः । हंसवर्णान् हयान् भूयः प्राहिणोद्यत्र पाण्डवः ॥२०॥ ते प्रेषिता महाराज मद्रराजेन वाजिनः । भीमसेनरथं प्राप्य समसज्जन्त वेगिताः ॥ २१ ॥ स सन्निपातस्तुमुलो घोररूपो विशाम्पते । आसीद्रौद्रो महाराज कर्णपाण्डवयोर्मृधे ॥ २२ ॥ दृष्ट्वा मम महाराज तौ समेतौ महारथौ । आसीद्बुद्धिः कथं युद्धमेतदद्य भविष्यति ॥ २३ ॥ ततो भीमो रणश्लाघी छादयामास पत्रिभिः । कर्णं रणे महाराज पुत्राणां तव पश्यताम् ॥ २४ ॥ ततः कर्णो भृशं क्रुद्धो भीमं नवभिरायसैः । विव्याध परमास्त्रज्ञो भल्लैः सन्नतपर्व्वभिः ॥ २५ ॥ आहतः स महाबाहुर्भीमो भीमपराक्रमः । आकर्णपूर्णैर्विशिखैः कर्णं विव्याध सप्तभिः ॥ २६ ॥ ततः कर्णो महाराज आशीविष इव श्वसन् । शरवर्षेण महता छादयामास पाण्डवम् ॥ २७ ॥ भीमोऽपि तं शरव्रातैश्छादयित्वा महारथम् । पश्यतां कौरवेयाणां विननाद महाबलः ॥ २८ ॥ ततः कर्णो भृशं क्रुद्धो दृढमादाय कार्म्मुकम् । भीमं विव्याध दशभिः कङ्कपत्रैः शिलाशितैः । कार्म्मुकञ्चास्य चिच्छेद भल्लेन निशितेन च ॥ २९ ॥ ततो भीमो महाबाहुर्हेमपट्टपरिष्कृतम् ।

परिघं घोरमादाय मृत्युदण्डमिवापरम्। कर्णस्य निधनाकाङ्क्षी चिक्षेपातिबलोऽनदन् ॥ ३० ॥ तमापतन्तं परिघं वज्राशनिसमस्वनम्। चिच्छेद बहुधा कर्णः शरैराशीविषोपमैः ॥ ३१ ॥ ततः कार्मुकमादाय भीमो दृढ़तरं तदा। छादयामास विशिखैः कर्णं परबलार्दनः ॥ ३२ ॥ ततो युद्धमभूद्घोरं कर्णपाण्डवयोर्मृधे। हरीन्द्रयोरिव मुहुः परस्परवधैषिणोः ॥ ३३ ॥ ततः कर्णो महाराज भीमसेनं त्रिभिः शरैः। आकर्णमूलं विव्याध दृढ़मायम्य कार्मुकम् ॥ ३४ ॥ सोऽतिविद्धो महेष्वासः कर्णेन बलिनाम्वरः। घोरमादत्त विशिखं कर्णकायविदारणम् ॥ ३५ ॥ तस्य छित्त्वा तनुत्राणं भित्त्वा कायञ्च सायकः। प्राविशद्धरणीं राजन् वल्मीकमिव पन्नगः ॥ ३६ ॥ स तेनातिप्रहारेण व्यथितो विह्वलन्निव। सञ्चचाल रथे कर्णः क्षितिकम्पे यथाचलः ॥ ३७ ॥ ततः कर्णो महाराज रोषामर्षसमन्वितः। भीमं तं पञ्चविंशत्या नाराचानां समार्पयत ॥ ३८ ॥ आजघ्ने बहुभिर्बाणैर्ध्वजमेकेषुणाहनत्। सारथिञ्चास्य भल्लेन प्रेषयामास मृत्यवे ॥ ३९ ॥ छित्त्वा च कार्मुकं तूर्णं पाण्डवस्याशु पत्रिणा। विरथं भीमकर्माणं भीमं तमथाकरोत् ॥ ४० ॥ विरथो भरतश्रेष्ठ प्रहसन्ननिलोपमः। गदां गृह्य महाबाहुरपतत् स्यन्दनोत्तमात् ॥ ४१ ॥ अवप्लुत्य तु वेगेन तव सैन्यं विशाम्पते। व्यधमद्गदया भीमः शरत्काले यथानिलः ॥ ४२ ॥ नागान् सप्तशतान् राजन्नीषादन्तान् प्रहारिणा। व्यधमत् सहसा भीमः क्रुद्धरूपः परन्तपः ॥ ४३ ॥ दन्तवेष्टेषु नेत्रेषु कुम्भेषु च कटेषु च। मर्म्मस्वपि च मर्म्मज्ञस्तान्नागानहनद्बली ॥ ४४ ॥ ततस्ते प्राद्रवन् भीताः प्रतीपं प्रहिताः पुनः। महामात्रैस्तमाववुर्मेघा इव दिवाकरम् ॥ ४५ ॥ तान् स सप्तशतान् नागान् सारोहायुधकेतनान्। भूमिष्ठो गदया जघ्ने वज्रेणेन्द्र इवाचलान् ॥ ४६ ॥ ततः सुबलपुत्रस्य नागानतिबलान्

पुनः । पोथयामास कौन्तेयो ह्यपञ्चाशदरिन्दमः ॥ ४७ ॥ तथा रथशतं साग्रं पत्तींश्च शतशोऽपरान् । न्यहनत् पाण्डवो युद्धे तापयंस्तव वाहिनीम् ॥ ४८ ॥ प्रताप्यमानं सूर्य्येण भीमेन च महात्मना । तव सैन्यं सञ्चुकोच चर्म्माग्नावर्च्छितं यथा ॥ ४९ ॥ ते भीमभयसन्त्रस्तास्तावका भरतर्षभ । विहाय समरे भीमं दुद्रुवुर्वै दिशो दश ॥ ५० ॥ रथाः पञ्चशताश्चान्ये ह्लादिनश्च सुवर्म्मिणः । भीममभ्यद्रवन् घ्नन्तः शरपूगैः समन्ततः ॥ ५१ ॥ तान् ससूतरथान् वीरान् सपताकाध्वजायुधान् । पोथयामास गदया भीमो विष्णुरिवासुरान् ॥ ५२ ॥ ततः शकुनिनिर्द्दिष्टाः सादिनः शूरसम्मताः । त्रिसहस्राभ्ययुर्भीमं शक्त्यृष्टिप्रासपाणयः ॥ ५३ ॥ प्रत्युद्गम्य जवेनाशु सादिनोऽश्वांस्तदारिहा । विविधान् विचरन्मार्गान् गदया समपोथयत् ॥ ५४ ॥ तेषामासीन्महाशब्दस्ताड्यितानाञ्च सर्व्वशः । अश्मभिर्विध्यमानानां नागानामिव भारत ॥ ५५ ॥ एवं सुबलपुत्रस्य त्रिसाहस्रान् हयोत्तमान् । हत्वान्यं रथमास्थाय क्रुद्धो राधेयमभ्ययात् ॥ ५६ ॥ कर्णोऽपि समरे राजन् धर्म्मपुत्रमरिन्दमम् । स शरैश्छादयामास सारथिञ्चाप्यपातयत् ॥ ५७ ॥ ततः स प्रद्रुतं संख्ये रथं दृष्ट्वा महारथः । अन्वधावत किरन् बाणैः कङ्कपत्रैरजिह्मगैः ॥ ५८ ॥ राजानमभिधावन्तं शरैरावृत्य रोदसी । क्रुद्धः प्राच्छादयामास शरजालेन मारुतिः ॥ ५९ ॥ संनिवृत्तस्ततस्तूर्णं राधेयः शत्रुकर्षणः । भीमं प्राच्छादयामास समन्तान्निशितैः शरैः ॥ ६० ॥ भीमसेनरथव्यग्रं कर्णं भारत सात्यकिः । अभ्यर्द्दयदमेयात्मा पार्ष्णिग्रहणकारणात् ॥ ६१ ॥ अभ्यवर्त्तत कर्णस्तमर्द्दितोऽपि शरैर्भृशम् ॥ ६२ ॥ तावन्योऽन्यं समासाद्य वृषभौ सर्व्वधन्विनाम् । विसृजन्तौ शरांश्चित्रान् विभ्राजेतां मनस्विनौ ॥ ६३ ॥ ताभ्यां वियति राजेन्द्र विततं भीमदर्शनम् । क्रौञ्चपृष्ठारुणं रौद्रं बाणजालं व्यदृश्यत ॥ ६४ ॥ नैव

सूर्यप्रभां राजन् न दिशः प्रदिशस्तथा। प्राच्छादिता वयं ते वा शरैर्मुक्तैः सहस्रशः ॥ ६५ ॥ मध्याह्ने तपतो राजन् भास्करस्य महाप्रभाः। छन्नाः सर्वाः शरौघैस्तैः कर्णपाण्डवयोस्तदा ॥ ६६ ॥ सौबलं कृतवर्माणं द्रौणिमाधिरथिं कृपम्। संसक्तान् पाण्डवैर्दृष्ट्वा निवृत्ताः कुरवः पुनः ॥ ६७ ॥ तेषामापततां शब्दस्तीव्र आसीद्विशाम्पते। उद्वृत्तानां यथा वृष्ट्या सागराणां भयावहः ॥ ६८ ॥ ते सेने भृशसंसक्ते दृष्ट्वान्योऽन्यं महाहवे। हर्षेण महता युक्ते परिगृह्य परस्परम् ॥ ६९ ॥ ततः प्रववृते युद्धं मध्यं प्राप्ते दिवाकरे। यादृशं न कदाचिद्धि दृष्टपूर्वं न च श्रुतम् ॥ ७० ॥ बलौघस्तु समासाद्य बलौघं सहसा रणे। उपासर्पत वेगेन वार्योघ इव सागरम् ॥ ७१ ॥ आसीन्निनादः सुमहान् बलौघानां परस्परम्। गर्जतां सागरौघानां यथा स्यान्निस्वनो महान् ॥ ७२ ॥ ते तु सेने समासाद्य वेगवत्यौ परस्परम्। एकीभावमनुप्राप्ते नद्याविव समागते ॥ ७३ ॥ ततः प्रववृते युद्धं घोररूपं महाभयम्। कुरूणां पाण्डवानां च लिप्सतां सुमहद्यशः ॥ ७४ ॥ शूराणां गर्जतां तत्र ह्यविच्छेदकृता गिरः। श्रूयन्ते विविधा राजन्नामान्युद्दिश्य भारत ॥ ७५ ॥ यस्य यद्धि रणे न्यङ्गं पितृतो मातृतोऽपि वा। कर्मतः शीलतो वापि स तत् श्रावयते युधि ॥ ७६ ॥ तान् दृष्ट्वा समरे शूरांस्तर्जमानान् परस्परम्। अभवन्मे मती राजन्नैषामस्तीति जीवितम् ॥ ७७ ॥ तेषां दृष्ट्वा तु क्रुद्धानां वपूंष्यमिततेजसाम्। अभवन्मे भयं तीव्रं कथमेतद्भविष्यति ॥ ७८ ॥ ततस्ते पाण्डवा राजन् कौरवाश्च महारथाः। ततक्षुः सायकैस्तीक्ष्णैर्निघ्नन्तो हि परस्परम् ॥ ७९ ॥

इति कर्णपर्वणि संकुलयुद्धे एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

सञ्जय उवाच। क्षत्रियास्ते महाराज परस्परवधैषिणः।
अन्योऽन्यं समरे जघ्नुः कृतवैराः परस्परम् ॥ १ ॥ रथौघाश्च हयौघाश्च नरौघाश्च समन्ततः। गजौघाश्च महाराज संसक्ताश्च परस्परम् ॥ २ ॥ गदानां परिघानाञ्च कुणपानाञ्च क्षिप्यताम्। प्रासानां भिन्दिपालानां भुशुण्डीनाञ्च सर्व्वशः। सम्पातं चानुपश्याम: सङ्ग्रामे भृशदारुणे ॥ ३ ॥ शलभा इव सम्पेतुः शरवृष्टयः सुदारुणाः ॥ ४ ॥ नागा नागान् समासाद्य व्यधमन्त परस्परम्। हया हयांश्च समरे रथिनो रथिनस्तथा ॥ ५ ॥ पत्तयः पत्तिसङ्घांश्च हयसङ्घांश्च पत्तयः। पत्तयो रथमातङ्गान् रथा हस्त्यश्वमेव च। नागाश्च समरे त्र्यङ्गं ममृदुः शीघ्रगा नृप ॥ ६ ॥ वध्यतां तत्र शूराणां क्रोशताञ्च परस्परम्। घोरमायोधनं जज्ञे पशूनां वैशसं यथा ॥ ७ ॥ रुधिरेण समास्तीर्णा भाति भारत मेदिनी। शक्रगोपगणाकीर्णा प्रावृषीव यथा धरा ॥ ८ ॥ यथा वा वाससी शुक्ले महारजनरञ्जिते। बिभृयाद्युवती श्यामा तद्वदासीद्वसुन्धरा। मांसशोणितचित्रेव शातकुम्भमयीव च ॥ ९ ॥ छिन्नानां चोत्तमाङ्गानां बाहूनाञ्चोरुभिः सह। कुण्डलानां प्रविद्धानां भूषणानाञ्च भारत ॥ १० ॥ निष्काणामथ शूराणां शरीराणाञ्च धन्विनाम्। वर्म्मणां सपताकानां सङ्घास्तत्रापतन् भुवि ॥ ११ ॥ गजा गजान् समासाद्य विषाणैरार्द्दयन्नृप। विषाणाभिहतास्तत्र भ्राजन्ते द्विरदास्तथा ॥ १२ ॥ रुधिरेणावसिक्ताङ्गा गैरिकाप्रस्रवा इव। यथा भ्राजन्ति स्यन्दन्तः पर्व्वता धातुमण्डिताः ॥ १३ ॥ तोमरान् भुजनिर्मुक्तान् प्रतीपानास्थितान् बहून्। हस्तैर्विचेरुस्ते नागा बभञ्जुश्चापरे तथा ॥ १४ ॥ नाराचैश्छिन्नवर्म्माणो भ्राजन्ति स्म गजोत्तमाः। हिमागमे महाराज व्यभ्रा इव महीधराः ॥ १५ ॥ शरैः कनकपुङ्खैश्च चिता रेजुर्गजोत्तमाः। उल्काभिः संप्रदीप्ताग्राः पर्व्वता इव मारिष ॥ १६ ॥

केचिदभ्याहता नागैर्नागा नगविभोपमाः । विनेशुः समरे तस्मिन् पक्षवन्त इवाद्रय ॥ १७ ॥ अपरे प्राद्रवन्नागाः शल्यार्त्ता व्रणतापिताः । प्रतिमानैश्च कुम्भैश्च पेतुरुर्व्यां महाहवे ॥ १८ ॥ विनेदुः सिंहवच्चान्ये नदन्तो भैरवान्रवान् । बभ्रमुर्बहवो राजंश्चुक्रुशुश्चापरे गजाः ॥ १९ ॥ हयाश्च निहता बाणैः स्वर्णभाण्डपरिच्छदाः । निषेदुश्चैव मम्लुश्च बभ्रमुश्च दिशो दश ॥ २० ॥ अपरे कृष्यमाणाश्च विचेष्टन्तो महीतले । भावान् बहुविधांश्चक्रुस्ताडिताः शरतोमरैः ॥ २१ ॥ नरास्तु निहता भूमौ कूजन्तस्तत्र मारिष । दृष्ट्वा च बान्धवानन्ये पितॄनन्ये पितामहान् ॥ २२ ॥ धावमानान् परांश्चान्यान् दृष्ट्वान्ये तत्र भारत । ख्यातानि गोत्रनामानि शशंसुरितरेतरम् ॥ २३ ॥ तेषां छिन्ना महाराज भुजाः कनकभूषणाः । उद्वेष्टन्ते विचेष्टन्ते पतन्ति चोत्पतन्ति च ॥ २४ ॥ निपतन्ति तथैवान्ये स्फुरन्ति च सहस्रशः । वेगांश्चान्ये रणे चक्रुः पञ्चास्या इव पन्नगाः ॥ २५ ॥ ते भुजा भोगिभोगाभाश्चन्दनाक्ता विशाम्पते । लोहिताद्रा भृशं रेजुस्तपनीयध्वजा इव ॥ २६ ॥ वर्त्तमाने तथा घोरे सङ्कुले सर्वतो दिशम् । अविज्ञाताः स्म युध्यन्ते विनिघ्नन्तः परस्परम् ॥ २७ ॥ भौमेन रजसाकीर्णे शस्त्रसम्पातसंकुले । नैव स्वे न परे राजन् व्यज्ञायन्त तमोवृताः ॥ २८ ॥ तथा तदभवद्युद्धं घोररूपं भयानकम् । शोणितोदा महानद्यः प्रसस्रुस्तत्र चासकृत् ॥ २९ ॥ शीर्षपाषाणसंछन्नाः केशशैवलशाद्वलाः । अस्थिमीनसमाकीर्णा धनुःशरगदोडुपाः ॥ ३० ॥ मांसशोणितपङ्किन्यो घोररूपाः सुदारुणाः । नदीः प्रावर्त्तयामासुः शोणितौघप्रवर्त्तिनीः ॥ ३१ ॥ भीरुवित्रासकारिण्यः शूराणां हर्षवर्द्धनाः । ता नद्यो घोररूपास्तु नयन्त्यो यमसादनम् । अवगाढा मज्जयन्तः क्षत्रस्याजनयन् भयम् ॥ ३२ ॥ क्रव्यादानां नरव्याघ्र नर्दतां तत्र तत्र ह । घोरमायोधनं जज्ञे प्रेतराजपुरोपमम् ।

शमम् ॥ ३३ ॥ उत्थितान्यगणेयानि कबन्धानि समन्ततः ॥ ३४ ॥ नृत्यन्ति वै भूतगणाः सुतृप्ता मांसशोणितैः । पीत्वा च शोणितं तत्र वसां पीत्वा च भारत ॥३५॥ मेदोमज्जावसामत्तास्तृप्ता मांसस्य चैव हि । धावमानाः स्म दृश्यन्ते काकगृध्रबकास्तथा ॥ ३६ ॥ शूरास्तु समरे राजन् भयं त्यक्त्वा सुदुस्त्यजम् । योधव्रतं समास्थाय चक्रुः कर्म्माण्यभीतवत् ॥ ३७ ॥ शरशक्तिसमाकीर्णे क्रव्याद-गणसंकुले । व्यचरन्त रणे शूराः ख्यापयन्तः स्वपौरुषम् ॥ ३८ ॥ अन्योऽन्यं श्रावयन्ति स्म नामगोत्राणि भारत । पितृनामानि च रणे गोत्रनामानि वा विभो ॥ ३९ ॥ श्रावयाणाश्च बहवस्तत्र योधा विशाम्पते । अन्योऽन्यमवमृद्नन्तः शक्तितोमरपट्टिशैः ॥ ४० ॥ वर्त्त-माने तथा युद्धे घोररूपे सुदारुणे । व्यषीदत् कौरवी सेना भिन्ना नौरिव सागरे ॥ ४१ ॥

इति कर्णपर्व्वणि संकुलयुद्धे द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

---

सञ्जय उवाच । वर्त्तमाने तथा युद्धे क्षत्रियाणां निमज्जने । गाण्डीवस्य महाघोषः श्रूयते युधि मारिष ॥ १ ॥ संशप्तकानां कदनमकरोद्यत्र पाण्डवः । कोशलानां तथा राजन्नारायणबलस्य च ॥ २ ॥ संशप्तकास्तु समरे शरवृष्टीः समन्ततः । अपातयन् पार्थमूर्द्ध्नि जयगृद्धाः प्रमन्यवः ॥ ३ ॥ ता वृष्टीः सहसा राजं स्तरसा वारयन् प्रभुः । व्यगाहत रणे पार्थो विनिघ्नन्रथिनां वरान् ॥ ४ ॥ विगाह्य तु रथानीकं कङ्कपत्रैः शिलाशितैः । आस-साद ततः पार्थः सुशर्म्माणं महारथम् ॥ ५ ॥ स तस्य शरवर्षाणि ववर्ष रथिनां वरः । यथा संशप्तकाश्चैव पार्थं वाणैः समार्पयन् ॥ ६ ॥ सुशर्म्मा तु ततः पार्थं विद्ध्वा दशभिराशुगैः । जनार्द्दनं

त्रिभिर्बाणैरदीनात्मा द्विषद्भिः समुपाद्रवत्॥ ततोऽपरेण भल्लेन केतुं विव्याध
मारिष ॥ ७॥ स वानरवरो राजन् विश्वकर्मकृतो महान्।
ननाद सुमहानादं भीषयाणो ऽगर्ज्ज च॥८॥ कपेस्तु निनदं
श्रुत्वा सन्त्रस्ता तव वाहिनी। भयं विपुलमाधाय निश्चेष्टा सम-
पद्यत॥९॥ ततः सा शुशुभे सेना निश्चेष्टावस्थिता नृप। नाना-
पुष्पसमाकीर्णं यथा चैत्ररथं वनम्॥१०॥ प्रतिलभ्य ततः संज्ञां
योधास्ते कुरुसत्तम। अर्जुनं सिषिचुर्बाणैः पर्वतं जलदा इव
॥११॥ परिवव्रुस्ततः सर्वे पाण्डवस्य महारथम्। निघ्नन्तं
प्रवक्रुशुर्ध्यमानाः शितैः शरैः॥१२॥ ते हयान्रथचक्रे च
रथेषाश्चापि मारिष। निगृह्य बलवत् सर्वे सिंहनादमथोऽनदन्
॥१३॥ अपरे जगृहुश्चैव केशवस्य महाभुजौ। पार्थमन्ये महा-
राज रथस्थं जगृहुर्मुदा॥१४॥ केशवस्तु ततो बाहू विधुन्वन्
रणमूर्द्धनि। पातयामास तान् सर्वान् दुष्टहस्तीव हस्तिपान्॥१५॥
ततः क्रुद्धो रणे पार्थः संवृतस्तैर्महारथैः। निगृहीतं रथं दृष्ट्वा
केशवञ्चाप्यभिद्रुतम्। रथारूढांश्च सुबहून् पदातींश्चाप्यपातयत्
॥१६॥ आसन्नांश्च तथा योधान् शरैरासन्नयोधिभिः। च्छादया-
मास समरे केशवञ्चेदमब्रवीत्॥१७॥ पश्य कृष्ण महा...हो
संशप्तकगणान् बहून्। कुर्वाणान् दारुणं कर्म वध्यमानान् सह-
स्रशः॥१८॥ रथबन्धमिमं घोरं पृथिव्यां नास्ति कश्चन। यः
सहेत पुमांल्लोके मदन्यो यदुपुङ्गव॥१९॥ इत्येवमुक्त्वा बीभत्सु-
र्देवदत्तमथाधमत्। पाञ्चजन्यञ्च कृष्णोऽपि पूरयन्निव रोदसी॥२०॥
तन्तु शङ्खस्वनं श्रुत्वा संशप्तकवरूथिनी। सञ्चचाल महाराज
वित्रस्ता चाभवद्भृशम्॥२१॥ पादबन्धं ततश्चक्रे पाण्डवः पर-
वीरहा। नागमस्त्रं महाराज संप्रोदीर्य्य मुहुर्मुहुः॥२२॥ ते
बद्धाः पादबन्धेन पाण्डवेन महात्मना। निश्चेष्टाश्चाभवन्राजन्
अश्मसारमया इव॥२३॥ निश्चेष्टांस्तु ततो योधानवधीत् पाण्डु-

नन्दनः। यथेन्द्र समरे दैत्यांस्तारकस्य वधे पुरा ॥ २४ ॥ ते बध्यमानाः समरे मुमुचुस्तं रथोत्तमम्। आयुधानि च सर्व्वाणि विस्रष्टुमुपचक्रमुः ॥ २५ ॥ ते बद्धाः पादबन्धेन न शेकुश्चेष्टितुं नृप। ततस्तानवधीत् पार्थः शरैः सन्नतपर्व्वभिः ॥ २६ ॥ सर्व्वे योधा हि समरे भुजगैर्व्वेष्टिताभवन्। यानुद्दिश्य रणे पार्थः पाद्बन्धं चकार ह ॥ २७ ॥ ततः सुशर्म्मा राजेन्द्र गृहीतां वीक्ष्य वाहिनीम्। सौपर्णमस्त्रं त्वरितः प्रादुश्चक्रे महारथाः ॥ २८ ॥ ततः सुपर्णाः संपेतुर्भक्षयन्तो भुजङ्गमान्। ते वै विदुद्रुवुर्नागा दृष्ट्वा तान् खचरान्नृप ॥ २९ ॥ बभौ बलं तद्विमुक्तं पादबन्धा-द्विशाम्पते। मेघवृन्दाद्यथा मुक्तो भास्करस्तापयन् प्रजाः ॥ ३० ॥ विप्रमुक्तास्तु ते योधाः फाल्गुनस्य रथं प्रति। ससृजुर्बाणसङ्घाश्च शस्त्रसङ्घाश्च मारिष। विविधानि च शस्त्राणि प्रत्यविध्यन्त सर्व्वशः ॥ ३१ ॥ तां महास्त्रमयीं वृष्टिं संछिद्य शरवृष्टिभिः। न्यवधीच्च ततो योधान् वासविः परवीरहा ॥ ३२ ॥ सुशर्म्मा तु ततो राजन् बाणेनानतपर्व्वणा। अर्जुनं हृदये विद्धा विव्याधान्यैस्त्रिभिः शरैः ॥ ३३ ॥ स गाढ़विद्धो व्यथितो रथोपस्थ उपाविशत्। तत उच्चुक्रुशुः सर्व्वे हतः पार्थ इति स्म ह ॥ ३४ ॥ ततः शङ्खनिनादाश्च भेरीशब्दाश्च पुष्कलाः। नानावादित्रनिनादाः सिंहनादाश्च जज्ञिरे ॥ ३५ ॥ प्रतिलभ्य ततः संज्ञां श्वेताश्वः कृष्णसारथिः। ऐन्द्र-मस्त्रममेयात्मा प्रादुश्चक्रे त्वरान्वितः ॥ ३६ ॥ ततो बाणसहस्राणि समुत्पन्नानि मारिष। सर्व्वदिक्षु व्यदृश्यन्त सूदयन्ति नृपद्विपान्। हयांश्चरथांश्च समरे शस्त्रैः शतसहस्रशः ॥ ३७ ॥ वध्यमाने ततः सैन्ये भयं सुमहदाविशत् ॥ ३८ ॥ संशप्तकगणानाञ्च गोपालानाञ्च भारत। न हि तत्र पुमान् कश्चिद्योऽर्जुनं प्रत्ययुध्यत ॥ ३९ ॥ पश्यतां तत्र वीराणामहन्यत बलं तव। हन्यमानमपश्यंश्च निश्चेष्टाः स्म पराक्रमे ॥ ४० ॥ अयुतं तत्र योधानां हत्वा पाण्डुसुतो रणे।

व्यभ्राजत महाराज विधूमोऽग्निरिव ज्वलन् ॥ ४१ ॥ षट्‌द्विप-सहस्राणि यानि दृष्टानि भारत। रथानामयुतञ्चैव शिवाहस्ताश्च दन्तिनः ॥ ४२ ॥ ततः संशप्तका भूयः परिवव्रुर्धनञ्जयम्। मर्त्तव्यमिति निश्चित्य जयं वापि निवर्त्तनम् ॥ ४३ ॥ तत्र युद्धं महच्चासीत्तावकानां विशाम्पते। शूरेण बलिना सार्द्धं पाण्डवेन किरीटिना ॥ ४४ ॥

इति कर्णपर्वणि संकुलयुद्धे द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

---

सञ्जय उवाच। कृतवर्मा कृपो द्रौणिः सूतपुत्रश्च मारिष। उलूकः सौबलश्चैव राजा च सह सोदरैः ॥ १ ॥ सीदमानां चमूं दृष्ट्वा पाण्डुपुत्रभयार्द्दितम्। समुज्जहार वेगेन भिन्नां नावमिवार्णवे ॥ २ ॥ ततो युद्धमतीवासीन्मुहूर्त्तमिव भारत। भीरूणां त्रासजननं शूराणां हर्षवर्द्धनम् ॥ ३ ॥ कृपेण शरवर्षाणि प्रविमुक्तानि संयुगे। सृञ्जयांश्छादयामासुः शलभानां व्रजा इव ॥४॥ शिखण्डीच ततः क्रुद्धो गौतमं त्वरितो ययौ। ववर्ष शरवर्षाणि समन्ताद्द्विजपुङ्गवम् ॥ ५ ॥ कृपस्तु शरवर्षन्तद्विनिहत्य महास्त्रवित्। शिखण्डिनं रणे क्रुद्धो विव्याध दशभिः शरैः ॥ ६ ॥ ततः शिखण्डी कुपितः शरैः सप्तभिराहवे। कृपं विव्याध सुभृशं कङ्कपत्रैरजिह्मगैः ॥ ७ ॥ ततः कृपः शरैस्तीक्ष्णैः सोऽतिविद्धो महारथः। व्यश्वसूतरथं चक्रे शिखण्डिनमथो द्विजः ॥ ८ ॥ हताश्वात्तु ततो यानादवप्लुत्य महारथः। खड्‌गञ्चर्म तथा गृह्य सत्वरं ब्राह्मणं ययौ ॥ ९ ॥ तमापतन्तं सहसा शरैः सन्नतपर्वभिः। छादयामास समरे तदद्भुतमिवाभवत् ॥ १० ॥ तत्राद्भुतमपश्याम शिलानां प्लवनं यथा। निश्चेष्टो यद्रणे राजन् शिखण्डी समतिष्ठत ॥ ११ ॥ कृपेण छादितं दृष्ट्वा नृपोत्तम शिखण्डिनम्।

प्रत्युद्ययौ कृपं तूर्णं धृष्टद्युम्नो महारथः ॥ १२ ॥ धृष्टद्युम्नं ततो यान्तं शारद्वतरथं प्रति । प्रतिजग्राह वेगेन कृतवर्मा महारथः ॥ १३ ॥ युधिष्ठिरमथायान्तं शारद्वतरथं प्रति । सपुत्रं सह-सैन्यञ्च द्रोणपुत्रो न्यवारयत् ॥ १४ ॥ नकुलं सहदेवञ्च त्वरमाणौ महारथौ । प्रतिजग्राह ते पुत्रः शरवर्षेण वारयन् ॥ १५ ॥ भीम-सेनं करूषांश्च कैकयान् सह सृञ्जयैः । कर्णो वैकर्त्तनो युद्धे वारयामास भारत ॥ १६ ॥ शिखण्डिनस्ततो वाणान् कृपः शार-द्वतो युधि । प्राहिणोत्त्वरया युक्तो दिधक्षुरिव मारिष ॥ १७ ॥ तान् शरान् प्रेषितांस्तेन समन्तात् स्वर्णभूषितान् । चिच्छेद खड्गमाविध्य भ्रामयंश्च पुनः पुनः ॥ १८ ॥ शतचन्द्रं ततश्चर्म गौतमः पार्षतस्य ह । व्यधमत् सायकैस्तूर्णं तत उच्चुक्रुशुर्जनाः ॥ १९ ॥ स विचर्मा महाराज खड्गपाणिरुपाद्रवत् । कृपस्य वशमापन्नो मृत्योरास्यमिवातुरः ॥ २० ॥ शारद्वतशरैर्ग्रस्तं क्लिश्य-मानं महावलम् । चित्रकेतुसुतो राजन् सुकेतुस्त्वरितो ययौ ॥२१॥ विकिरन् ब्राह्मणं युद्धे वहुभिर्निशितैः शरैः । अभ्यापतदमेयात्मा गौतमस्य रथं प्रति ॥ २२ ॥ दृष्ट्वा विषक्तं तद्युद्धे ब्राह्मणं चरित-व्रतम् । अपयातस्ततस्तूर्णं शिखण्डी राजसत्तम ॥ २३ ॥ सुके-तुस्तु ततो राजन् गौतमं नवभिः शरैः । विद्ध्वा विव्याध सप्तत्या पुनश्चैनं त्रिभिः शरैः ॥ २४ ॥ अथास्य सशरञ्चापं पुनश्चिच्छेद मारिष । सारथिञ्च शरेणास्य भृशं मर्मस्वताड़यत् ॥ २५ ॥ गौतमस्तु ततः क्रुद्धो धनुर्गृह्य नवं दृढम् । सुकेतुं त्रिंशता वाणैः सर्वमर्मस्वताड़यत् ॥ २६ ॥ स विह्वलितसर्वाङ्गः प्रचचाल रथोत्तमे । भूमिकम्पे यथा वृक्षश्चचाल कम्पितो भृशम् ॥ २७ ॥ चलतस्तस्य कायात्तु शिरो ज्वलितकुण्डलम् । सोष्णीषं सशिर-स्त्राणं क्षुरप्रेण न्यपातयत् ॥ २८ ॥ तच्छिरः प्रापतद्भूमौ श्येना-हृतमिवामिषम् । ततोऽस्य कायो वसुधां पश्चात् प्रापतदच्युत ॥२९॥

तस्मिन् हते महाराज वस्त्रास्तस्य पुरोगमाः। गौतमं समरे त्यक्ता दुद्रुवुस्ते दिशो दश॥ ३०॥ धृष्टद्युम्नन्तु समरे परिवार्य महावलम्। कृतवर्मानदद्धृष्टस्तिष्ठ तिष्ठेति चाब्रवीत्॥ ३१॥ तदभूत्तुमुलं युद्धं वृष्णिपार्षतयो रणे। आमिषार्थे यथा युद्धं श्येनयोः क्रुद्धयोर्नृप॥ ३२॥ धृष्टद्युम्नस्तु समरे हार्दिक्यं नवभिः शरैः। आजघानोरसि क्रुद्धः पीड़यन् हृदिकात्मजम्॥ ३३॥ कृतवर्मा तु समरे पार्षतेन दृढ़ाहतः। पार्षतं सरथं साश्वं छादयामास सायकैः॥ ३४॥ सरथश्छादितो राजन् धृष्टद्युम्नो न दृश्यते। मेघैरिव परिच्छन्नो भास्करो जलधारिभिः॥ ३५॥ विधूय तं बाणगणं शरैः कनकभूषणैः। व्यरोचत रणे राजन् धृष्टद्युम्नः कृतव्रणः॥ ३६॥ ततस्तु पार्षतः क्रुद्धः शरवृष्टिं सुदारुणाम्। कृतवर्माणमासाद्य व्यसृजत् पृतनापतिः॥ ३७॥ तामापतन्तीं सहसा शरवृष्टिं सुदारुणाम्। शरैरनेकसाहस्रै-र्हार्दिक्यो व्यधमद्युधि॥ ३८॥ दृष्ट्वा तु वारितां युद्धे शरवृष्टिं दुरासदम्। कृतवर्माणमभ्येत्य वारयामास पार्षतः॥ ३९॥ सारथिञ्चास्य तरसा प्राहिणोद्यमसादनम्। भल्लेन शितधारेण स हतः प्रापतद्रथात्॥ ४०॥ धृष्टद्युम्नस्तु वलवान् जित्वा शत्रुं महावलम्। कौरवान् समरे तूर्णं वारयामास सायकैः॥ ४१॥ ततस्ते तावका योधा धृष्टद्युम्नमुपाद्रवन्। सिंहनादरवं कृत्वा ततो युद्धमवर्त्तत॥ ४२॥

इति कर्णपर्वणि संशप्तकसंग्रामे चतुःपञ्चाशोऽध्यायः॥ ५४॥

---

सञ्जय उवाच। द्रौणिर्युधिष्ठिरं दृष्ट्वा शैनेयेनाभिरक्षितम्। द्रौपदेयैस्तथा शूरैरभ्यवर्त्तत हृष्टवत्॥ १॥ किरन्निषुगणान् घोरान् स्वर्णपुङ्खाञ्छिलाशितान्। दर्शयन् विविधान् मार्गान्

शिष्ठाश्च लघुहस्तवत् ॥ २ ॥ ततः खं पूरयामास शरैर्दिव्यास्त्र-
मन्त्रितैः । युधिष्ठिरन्तु समरे पर्य्यवारयदस्त्रवित् ॥ ३ ॥ द्रौणा-
यनिशरच्छन्नं न प्राज्ञायत किञ्चन । वाणभूतमभूत् सर्व्वमायो-
धनशिरो महत् ॥ ४ ॥ वाणजालं दिविच्छन्नं स्वर्णजालविभू-
षितम् । शुशुभे भरतश्रेष्ठ वितानमिव विष्टितम् ॥ ५ ॥ तेन
छन्नं नभो राजन् वाणजालेन भास्वता । अभ्रच्छायेव सञ्जज्ञे
वाणरुद्धे नभस्तले ॥ ६ ॥ तत्राश्चर्य्यमपश्याम वाणभूते तथाविधे ।
न स्म सम्पतते भूतं किञ्चिदेवान्तरीक्षगम् ॥ ७ ॥ सात्यकिर्यत-
मानस्तु धर्म्मराजश्च पाण्डवः । तथेतराणि सैन्यानि न स्म चक्रुः
पराक्रमम् ॥ ८ ॥ लाघवं द्रौणपुत्रस्य दृष्ट्वा तत्र महारथाः ।
व्यस्मयन्त महाराज न चैनं प्रत्युदीक्षितुम् । शेकुस्ते सर्व्वराजान-
स्तपन्तमिव भास्करम् ॥ ९ ॥ बध्यमाने ततः सैन्ये द्रौपदेया महा
रथाः । सात्यकिर्द्धर्म्मराजश्च पाञ्चालाश्चापि सङ्गताः । त्यक्त्वा मृत्यु-
भयं घोरं द्रौणायनिमुपाद्रवन् ॥ १० ॥ सात्यकिः सप्तविंशत्या
द्रौणिं विद्ध्वा शिलीमुखैः । पुनर्विव्याध नाराचैः सप्तभिः स्वर्ण-
भूषितैः ॥ ११ ॥ युधिष्ठिरस्त्रिसप्तत्या प्रतिविन्ध्यश्च सप्तभिः ।
श्रुतकर्म्मा त्रिभिर्वाणैः श्रुतकीर्त्तिश्च पञ्चभिः ॥ १२ ॥ सुतसोमस्तु
नवभिः शतानीकश्च सप्तभिः । अन्ये च बहवः शूरा विविधुस्तं
समन्ततः ॥ १३ ॥ स तु क्रुद्धस्ततो राजन्नाशीविष इव श्वसन् ।
सात्यकिं पञ्चविंशत्या प्राविध्यत शिलाशितैः ॥ १४ ॥ श्रुतकीर्त्तिञ्च
नवभिः सुतसोमञ्च पञ्चभिः । अष्टाभिः श्रुतकर्म्माणं प्रतिविन्ध्यं
त्रिभिः शरैः ॥ १५ ॥ शतानीकञ्च नवभिर्द्धर्म्मपुत्रञ्च पञ्चभिः ।
अथेतरांस्ततः शूरान् द्वाभ्यां द्वाभ्यामताड़यत् । श्रुतकीर्त्तेस्तथा
चापं चिच्छेद निशितैः शरैः ॥ १६ ॥ अथान्यद्धनुरादाय श्रुत-
कीर्त्तिर्म्महारथः । द्रौणायनिं त्रिभिर्विद्ध्वा विव्याधान्यैः शितैः
शरैः ॥ १७ ॥ ततो द्रौणिर्म्महाराज शरवर्षेण मारिष । छादया-

माव तत् सैन्यं समन्ताद्भरतर्षभ ॥ १८ ॥ ततः पुनरमेयात्मा धर्मराजस्य कार्मुकम्। द्रौणिश्चिच्छेद विहसन् विव्याध च शरैस्त्रिभिः ॥ १९ ॥ ततो धर्मसुतो राजन् प्रगृह्यान्यन्महद्धनुः। द्रौणिं विव्याध सप्तत्या बाह्वोरुरसि चैव ह ॥ २० ॥ सात्यकिस्तु ततः क्रुद्धो द्रौणेः प्रहरतो रणे। अर्द्धचन्द्रेण तीक्ष्णेन धनुश्छित्त्वानदद्भृशम् ॥ २१ ॥ छिन्नधन्वा ततो द्रौणिः [illegible]था शक्तिमतां वरः। सारथिं पातयामास शैनेयस्य रथाद्द्रुतम् ॥ २२ ॥ अथान्यद्धनुरादाय द्रोणपुत्रः प्रतापवान्। शैनेयं शरवर्षेण छादयामास भारत ॥ २३ ॥ तस्याश्वाः प्रद्रुताः संख्ये पातिते रथसारथौ। तत्र तत्रैव धावन्तः समदृश्यन्त भारत ॥ २४ ॥ युधिष्ठिरपुरोगास्तु द्रौणिं शस्त्रभृतां वरम्। अभ्यवर्त्तन्त वेगेन विसृजन्तः शितान् शरान् ॥ २५ ॥ आगच्छमानांस्तान् दृष्ट्वा क्रुद्धरूपान् परन्तपः। प्रहसन् प्रतिजग्राह द्रोणपुत्रो महारणे ॥ २६ ॥ ततः शरशतज्वालः सेनाकक्षं महारथः। द्रौणिर्ददाह समरे कक्षमग्निर्यथा वने ॥ २७ ॥ तद्बलं पाण्डुपुत्रस्य द्रोणपुत्रप्रतापितम्। चुक्षुभे भरतश्रेष्ठ तिमिनेव नदीमुखम् ॥ २८ ॥ दृष्ट्वा ते च महाराज द्रोणपुत्रपराक्रमम्। निहतान्मेनिरे सर्वान् पाण्डून् द्रोणसुतेन वै ॥ २९ ॥ युधिष्ठिरस्तु त्वरितो द्रौणिं शिष्यं महारथम्। अब्रवीद्द्रोणपुत्रं स रोषामर्षसमन्वितः ॥ ३० ॥ नैव नाम तव प्रीतिर्नैव नाम कृतज्ञता। यतस्त्वं पुरुषव्याघ्र मामेवाद्य जिघांससि ॥ ३१ ॥ ब्राह्मणेन तपः कार्य्यं दानमध्ययनं तथा। क्षत्रियेण धनुर्नाम्यं स भवान् ब्राह्मणब्रुवः ॥ ३२ ॥ मिषतस्ते महाबाहो जेष्यामि युधि कौरवान्। कुरुष्व समरे कर्म ब्रह्मबन्धुरसि ध्रुवम् ॥ ३३ ॥ एवमुक्तो महाराज द्रोणपुत्रः स्मयन्निव। युक्तं तत्त्वञ्च सञ्चिन्त्य नोत्तरं किञ्चिदब्रवीत् ॥ ३४ ॥ अनुक्त्वा च ततः किञ्चित् शरवर्षेण पाण्डवम्। छादयामास समरे

क्रुद्धोऽन्तक इव प्रजाः ॥ ३५ ॥ संछाद्यमानन्तु तदा द्रोणपुत्रेण मारिष । पार्थोऽपयातः शीघ्रं वै विहाय महतीं चमूम् ॥ ३६ ॥ अपयाते ततस्तस्मिन् धर्मपुत्रे युधिष्ठिरे । द्रोणपुत्रस्ततो राजन् प्रत्यगात् स महामनाः ॥ ३७ ॥ ततो युधिष्ठिरो राजस्त्यक्त्वा द्रौणिं महाहवे । प्रययौ तावकं सैन्यं युक्तः क्रूराय कर्मणे ॥३८॥

इति कर्णपर्वणि युधिष्ठिरापयाने पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

सञ्जय उवाच । भीमसेन सपाञ्चालं चेदिकैकेयसंवृतम् । वैकर्त्तनः स्वयं रुद्धा छादयामास सायकैः ॥ १ ॥ ततस्तु चेदिकारूषान् सृञ्जयांश्च महारथान् । कर्णो जघान समरे भीमसेनस्य पश्यतः ॥ २ ॥ भीमसेनस्ततः कर्णं विहाय रथसत्तमम् । प्रययौ कौरवं सैन्यं कक्षमग्निरिव ज्वलन् ॥ ३ ॥ सूतपुत्रोऽपि समरे पाञ्चालान् केकयांस्तथा । सृञ्जयांश्च महेष्वासान् निजघान सहस्रशः ॥ ४ ॥ संशप्तकेषु पार्थश्च कौरवेषु वृकोदरः । पाञ्चालेषु ततः कर्णः क्षयं चक्रुर्महारथाः ॥ ५ ॥ ते क्षत्रिया दह्यमानास्त्रिभिस्तैः पावकोत्तमैः । जग्मुर्विनाशं समरे राजन् दुर्मन्त्रिते तव ॥ ६ ॥ ततो दुर्य्योधनः क्रुद्धो नवभिर्नकुलं शरैः । विव्याध भरतश्रेष्ठ चतुरश्चास्य वाजिनः ॥ ७ ॥ ततः पुनरमेयात्मा तव पुत्रो जनाधिप । क्षुरेण सहदेवस्य ध्वजं चिच्छेद काञ्चनम् ॥ ८ ॥ नकुलस्तु ततः क्रुद्धस्तव पुत्रं त्रिसप्तभिः । जघान समरे राजन् सहदेवश्च पञ्चभिः ॥ ९ ॥ तावुभौ भरतश्रेष्ठौ श्रेष्ठौ सर्वधनुष्मताम् । विव्याधोरसि संक्रुद्धः पञ्चभिः पञ्चभिः शरैः ॥ १० ॥ ततोऽपराभ्यां भल्लाभ्यां धनुषी समकृन्तत । यमयोः सहसा राजन् विव्याध च त्रिसप्तभिः ॥ ११ ॥ तावन्ये धनुषी श्रेष्ठे शक्रचापनिभे शुभे । प्रगृह्य रेजतुः शूरौ देवपुत्रोपमौ युधि ॥ १२ ॥

ततस्तौ रभसौ युद्धे भ्रातरौ भ्रातरं नृप। शरैर्वव्रषतुर्वीरैर्महा-
मेघौ यथाचलम् ॥ १३ ॥ ततः क्रुद्धो महाराज तव पुत्रो महा-
रथः। पाण्डुपुत्रौ महेष्वासौ वारयामास पत्रिभिः ॥ १४ ॥ धनु-
र्मण्डलमेवास्य दृश्यते युधि भारत। सायकाश्चैव दृश्यन्ते निश्चरन्तः
समन्ततः ॥ १५ ॥ तस्य सायकसंछन्नौ चकाशाते न पाण्डवौ।
मेघच्छन्नौ यथा व्योम्नि चन्द्रसूर्य्यौ हृतप्रभौ ॥ १६ ॥ ते तु बाणा
महाराज हेमपुङ्खाः शिलाशिताः। आच्छादयन् दिशः सर्वाः
सूर्य्यस्येवांशवस्तदा ॥ १७ ॥ बाणभूते ततस्तस्मिन् संछन्ने च
नभस्तले। यमयोर्ददृशे रूपं कालान्तकयमोपमम् ॥ १८ ॥ परा-
क्रमन्तु तं दृष्ट्वा तव सूनोर्महारथाः। मृत्योरुपान्तिकं प्राप्तौ
माद्रीपुत्रौ स्म मेनिरे ॥ १९ ॥ ततः सेनापती राजन् पाण्डवस्य
महारथः। पार्षतः प्रययौ तत्र यत्र राजा सुयोधनः ॥ २० ॥
माद्रीपुत्रौ ततः शूरौ व्यतिक्रम्य महारथौ। धृष्टद्युम्नस्तव सुतं
वारयामास सायकैः ॥ २१ ॥ तमविध्यदमेयात्मा तव पुत्रोऽत्य-
मर्षणः। पाञ्चाल्यं पञ्चविंशत्या प्रहस्य पुरुषर्षभः ॥ २२ ॥ ततः
पुनरमेयात्मा तव पुत्रोऽप्यमर्षणः। विद्धा ननाद पाञ्चाल्यं षष्ट्या
पञ्चभिरेव च ॥ २३ ॥ अथास्य समरञ्चापं हस्तापापञ्च मारिष।
क्षुरप्रेण सुतीक्ष्णेन राजा चिच्छेद संयुगे ॥ २४ ॥ तदपास्य
धनुश्छिन्नं पाञ्चाल्यः शत्रुकर्षणः। अन्यदादत्त वेगेन धनुर्भार-
सहं नवम् ॥ २५ ॥ प्रज्वलन्निव वेगेन संरम्भाद्रुधिरेक्षणः।
अशोभत महेष्वासो धृष्टद्युम्नः कृतव्रणः ॥ २६ ॥ स पञ्चदश
नाराचान् श्वसतः पन्नगानिव। जिघांसुर्भरतश्रेष्ठ धृष्टद्युम्नो
व्यवासृजत् ॥ २७ ॥ ते वर्म हेमविकृतं छित्त्वा राज्ञः शिला-
शिताः। विविशुर्वसुधां वेगात् कङ्कबर्हिणवाससः ॥ २८ ॥ सोऽति-
विद्धो महाराज पुत्रस्तेऽतिव्यराजत। वसन्तकाले सुमहान् सपुष्प
इव किंशुकः ॥ २९ ॥ स भिन्नवर्मा नाराचैः प्रहारैर्जर्ज्जरीकृतः।

धृष्टद्युम्नस्य भल्लेन क्रुद्धश्चिच्छेद कार्मुकम् ॥ ३० ॥ अथैनं छिन्न-धन्वानं त्वरमाणो महीपतिः । सायकैर्द्दशभी राजन् भ्रुवोर्मध्ये समार्पयत् ॥ ३१ ॥ तस्य तेऽशोभयन् वक्त्रं कर्म्मारपरिमार्ज्जिताः । प्रफुल्लं पङ्कजं यद्वद्भ्रमरा मधुलिप्सवः ॥ ३२ ॥ तदपास्य धनुश्छिन्नं धृष्टद्युम्नो महामनाः । अन्यदादत्त वेगेन धनुर्भल्लांश्च षोड्श ॥ ३३ ॥ ततो दुर्य्योधनस्याश्वान् हत्वा सूतञ्च पञ्चभिः । धनुश्चिच्छेद भल्लेन जातरूपपरिष्कृतम् ॥ ३४ ॥ रथं सोपस्करं छत्रं शक्तिं खड्गं गदां ध्वजम् । भल्लैश्चिच्छेद दशभिः पुत्रस्य तव पार्षतः ॥ ३५ ॥ तपनीयाङ्गदं चित्रं नागं मणिमयं शुभम् । ध्वजं कुरुपतेश्छिन्नं ददृशुः सर्व्वपार्थिवाः ॥ ३६ ॥ दुर्य्योधनस्तु विरथं छिन्नसर्व्वायुधं रणे । भ्रातरं पर्य्यरक्षन्त सोदरा भरतर्षभ ॥ ३७ ॥ तमारोप्य रथे राजन् दण्डधारो नराधिपम् । अपोवाह रणात्तूर्णं धृष्टद्युम्नस्य पश्यतः ॥ ३८ ॥ कर्णस्तु सात्यकिं जित्वा राज्यगृद्धी महाबलः । द्रोणहन्तारमुग्रेषुं ससाराभिमुखो रणे ॥ ३९ ॥ तं पृष्ठतोऽभ्ययात्तूर्णं शैनेयो वितुदञ्छरैः । वारणं जघनोपान्ते विषाणाभ्यामिव द्विपाः ॥ ४० ॥ स भारत महानासीत् योधानां सुमहात्मनाम् । कर्णपार्षतयोर्मध्ये त्वदीयानां महारणः ॥ ४१ ॥ न पाण्डवानां नास्माकं योधः कश्चित् पराङ्मुखः । प्रत्यदृश्यत यत् कर्णः पाञ्चालांस्त्वरितो ययौ ॥ ४२ ॥ तस्मिन् क्षणे नरश्रेष्ठ गजवाजिजनक्षयः । प्रादुरासीदुभयतो राजन्मध्यगतेऽहनि ॥ ४३ ॥ पाञ्चालास्तु महाराज त्वरिता विजिगीषवः । ते सर्व्वेऽभ्यद्रवन् कर्णं पतत्रिण इव द्रुमम् ॥ ४४ ॥ तांस्तथाधिरथिः क्रुद्धो यतमानान्मनस्विनः । विचिन्वन्निव बाणाग्रैः समासादयदग्रतः ॥ ४५ ॥ व्याघ्रकेतुं सुशर्म्माणं चित्रञ्चोग्रायुधं जयम् । शुक्लञ्च रोचमानञ्च सिंहसेनञ्च दुर्ज्जयम् ॥ ४६ ॥ ते वीरा रथवेगेन परिवव्रुर्नरोत्तमम् । सृजन्तं सायकान् क्रुद्धं कर्णमाहव-

शाभिनम् ॥ ४७ ॥ युध्यमानांस्तु तान् शूरान् मनुजेन्द्रः प्रतापवान्। अष्टाभिरष्टौ राधेयो न्यहनद्यन्निशितैः शरैः ॥ ४८ ॥ यथापरान् महाराज सूतपुत्रः प्रतापवान्। जघान बहुसाहस्रान् योधान् युद्धविशारदान् ॥ ४९ ॥ जिष्णुञ्च जिष्णुकर्माणं देवापिं भद्रमेव च। दण्डञ्च राजन् समरे चित्रं चित्रायुधं [illegible]रम् ॥ ५० ॥ सिंहकेतुं रोचमानं शलभञ्च महारथम्। निजघान सुसंक्रुद्धश्चेदीनाञ्च महारथान् ॥ ५१ ॥ तेषामाददतः प्राणानासीदाधिरथेर्वपुः। शोणिताभ्युक्षिताङ्गस्य रुद्रस्येवोर्जितं महत् ॥ ५२ ॥ तत्र भारत कर्णेन मातङ्गास्ताड़िताः शरैः। सर्वतोऽभ्यद्रवन् भीताः कुर्वन्तो महदाकुलम् ॥ ५३ ॥ निपेतुरुर्व्यामपरे कर्णसायकताड़िताः। कुर्वन्तो विविधान्नादान् वज्रनुन्ना इवाचलाः ॥ ५४ ॥ गजवाजिमनुष्यैश्च निपतद्भिः समन्ततः। रथैश्चाधिरथेर्मार्गे समास्तीर्य्यत मेदिनी ॥ ५५ ॥ नैव भीष्मो न च द्रोणो नाप्यन्ये युधि तावकाः। चक्रुः स्म तादृशं कर्म यादृशं वै कृतं रणे ॥ ५६ ॥ सूतपुत्त्रेण नागेषु हयेषु च रथेषु च। नरेषु च नरव्याघ्र कृतं स्म कदनं महत् ॥ ५७ ॥ मृगमध्ये यथा सिंहो दृश्यते निर्भयश्चरन्। पाञ्चालानां तथा मध्ये कर्णोऽचरदभीतवत् ॥ ५८ ॥ यथा मृगगणांस्त्रस्तान् सिंहो द्रावयते दिशः। पाञ्चालानां रथव्रातान् कर्णो व्यद्रावयत्तथा ॥ ५९ ॥ सिंहास्यञ्च यथा प्राप्य न जीवन्ति मृगाः क्वचित्। तथा कर्णमनुप्राप्य न जीवन्ति महारथाः ॥ ६० ॥ वैश्वानरं यथा दीप्तं प्राप्य दह्यन्ति वै जनाः। कर्णाग्निना रणे तद्वद्दग्धा भारत सृञ्जयाः ॥ ६१ ॥ कर्णेन चेदिकेन पाञ्चालेषु च भारत। विश्राव्य नाम निहता बहवः शूरसम्मताः ॥ ६२ ॥ मम चासीन्मती राजन् दृष्ट्वा कर्णस्य विक्रमम्। नैकोऽप्याधिरथेर्जीवन् पाञ्चाल्यो मोक्ष्यते युधि ॥ ६३ ॥ पाञ्चालान् व्यधमत् सङ्ख्ये सूतपुत्रः पुनः पुनः ॥ ६४ ॥ पाञ्चालानाञ्च

निघ्नन्तं कर्णं दृष्ट्वा महारणे । अभ्यधावत संक्रुद्धो धर्मराजो
युधिष्ठिरः ॥ ६५ ॥ धृष्टद्युम्नस्तु राधेयं द्रौपदेयाश्च मारिष ।
परिवव्रु रथिव्याघ्रं शतशश्चापरे जनाः ॥ ६६ ॥ शिखण्डी सहदेवश्च
नकुलो नाकुलिस्तथा । जनमेजयः शिनेर्नप्ता बहवश्च प्रभद्रकाः
॥ ६७ ॥ एते पुरोगमा भूत्वा धृष्टद्युम्नस्य संयुगे । कर्णमस्यन्त
इष्वस्त्रैर्विरेजुरमितौजसः ॥ ६८ ॥ तांस्तवाधिरथिः सङ्ख्ये चेदि-
पाञ्चालपाण्डवान् । एको बहूनभ्यपतद्गरुत्मान् पन्नगानिव ॥ ६९ ॥
तैः कर्णस्याभवद्युद्धं घोररूपं विशाम्पते । तादृक् यादृक् पुरा
वृत्तं देवानां दानवैः सह ॥ ७० ॥ तान् समेतान् महेष्वासान्
शरवर्षैर्विवर्षिणः । एकोऽभ्यहनदव्यग्रस्तमांसीव दिवाकरः ॥ ७१ ॥
भीमसेनस्तु संसक्तो राधेये पाण्डवैः सह । कुरूनभ्यहनत् क्रुद्धो
यमदण्डनिभैः शरैः ॥ ७२ ॥ वाह्लीकान् कैकयान् मत्स्यान्
वाशात्यान्मद्रसैन्धवान् । एकः संख्ये महेष्वासो योधयन् बह्व-
शोभत ॥ ७३ ॥ तत्र मर्मसु भीमेन नाराचैस्ताड़िता गजाः ।
प्रपतन्तो हतारोहाः कम्पयन्ति स्म मेदिनीम् ॥ ७४ ॥ वाजिनश्च
हतारोहाः पत्तयश्च गतासवः । शेरते युधि निर्भिन्ना वमन्तो
रुधिरं बहु ॥ ७५ ॥ सहस्रशश्च रथिनः पतिता पतितायुधाः ।
ते क्षत्ताः समदृश्यन्त भीमाद्भीता गतासवः ॥ ७६ ॥ रथिभिः
सादिभिः सूतैः पादातैर्वाजिभिर्गजैः । भीमसेनशरच्छिन्नैराच्छन्ना
वसुधाभवत् ॥ ७७ ॥ तत् स्तम्भितमिवातिष्ठद्भीमसेनभयार्द्दितम् ।
दुर्य्योधनबलं राजन् निरुत्साहं कृतव्रणम् ॥ ७८ ॥ निश्चेष्टं तद्बलं
दीनं बभौ तस्मिन् महारणे ॥ ७९ ॥ प्रसन्नसलिले काले यथा
स्यात् सागरो नृप । तद्वत्तव बलं तद्वै निश्चलं समवास्थितम् ॥ ८० ॥
मन्युवीर्य्यबलोपेतं दर्पात् प्रत्यवरोपितम् । अभवत्तव पुत्रस्य तत्
सैन्यं निष्प्रभं तदा ॥ ८१ ॥ तद्बलं भरतश्रेष्ठ युध्यमानं पर-
स्परम् । रुधिरौघपरिक्लिन्नं रुधिरार्द्रं बभूव तु । जगाम भरत-

श्रेष्ठ वध्यमानं परस्परम् ॥ ८२ ॥ सूतपुत्त्रो रणे क्रुद्धः पाण्डवानाम-
मनीकिनीम् । भीमसेनः कुरुंश्चापि द्रावयन् बह्वशोभत ॥ ८३ ॥
वर्त्तमाने तथा रौद्रे संग्रामेऽद्भुतदर्शने । निहत्य पृतनामध्ये
संशप्तकगणान् बहून् । अर्जुनो जयतां श्रेष्ठो वासुदेवमथाब्रवीत्
॥ ८४ ॥ प्रभग्नं बलमेतद्धि योत्स्यमानं जनार्द्दन ॥ ५८ ॥ एते
द्रवन्ति सगणाः संशप्तकमहारथाः । अपारयन्तो [illegible]बाणान् सिंह-
शब्दं मृगा इव ॥ ८६ ॥ दीर्य्यते च महत् सैन्यं सृञ्जयानां महा-
रणे ॥ ८७ ॥ हस्तिकक्षो ह्यसौ कृष्ण केतुः कर्णस्य धीमतः ।
दृश्यते राजसैन्यस्य मध्ये विचरतो मुहुः । न च कर्णं रणे शक्ता
जेतुमन्ये महारथाः ॥ ८८ ॥ जानीते हि भवान् कर्णं वीर्य्यवन्तं
पराक्रमे । तत्र याहि यतः कर्णो द्रावयत्येष नो बलम् ॥ ८९ ॥
वर्ज्जयित्वा रणे याहि सूतपुत्त्रं महारथम् । एष मे रोचते कृष्ण
यथा वा तव रोचते ॥ ९० ॥ एतच्छ्रुत्वा वचस्तस्य गोविन्दः
प्रहसन्निव । अब्रवीदर्जुनं तूर्णं कौरवान् जहि पाण्डव ॥ ९१ ॥
ततस्तव महासैन्यं गोविन्दप्रेषिता हयाः । हंसवर्णाः प्रविविशु-
र्वहन्तः कृष्णपाण्डवौ ॥ ९२ ॥ केशवप्रेषितैरश्वैः श्वेतैः काञ्चन-
भूषणैः । प्रविशद्भिस्तव बलं चतुर्द्दिशमभिद्यत ॥ ९३ ॥ मेघ-
स्तनितनिर्घोषः स रथो वानरध्वजः । चलत्पताकस्तां सेनां
विमानं द्यामिवाविशत् ॥ ९४ ॥ तौ विदार्य्य महासेनां प्रविष्टौ
केशवार्ज्जुनौ । क्रुद्धौ संरम्भरक्ताक्षौ व्यभ्राजेतां महाद्युती ॥ ९५ ॥
युद्धशौण्डौ समाहूतावागतौ तौ रणाध्वरम् । यज्वभिर्विधिना-
हूतौ मखे देवाविवाश्विनौ ॥ ९६ ॥ क्रुद्धौ तौ तु नरव्याघ्रौ
वेगवन्तौ बभूवतुः । तलशब्देन रुषितौ यथा नागौ महावने ॥ ९७ ॥
विगाह्य तु रथानीकमश्वसङ्घांश्च फाल्गुनः । व्यचरत् पृतनामध्ये
पाशहस्त इवान्तकः ॥ ९८ ॥ तं दृष्ट्वा युधि विक्रान्तं सेनायां
तव भारत । संशप्तकगणान् भूयः पुत्त्रस्ते समचूचुदत् ॥ ९९ ॥

ततो रथसहस्रेण द्विरदानां त्रिभिः शतैः । चतुर्दशसहस्रैस्तु तुरगाणां महाहवे ॥ १०० ॥ द्वाभ्यां शतसहस्राभ्यां पदातीनाञ्च धन्विनाम् । शूराणां लब्धलक्षाणां विदितानां समन्ततः ॥ १०१ ॥ अभ्यवर्त्तन्त कौन्तेयं छादयन्तो महारथाः । शरवर्षैर्महाराज सर्वतः पाण्डुनन्दनम् ॥ १०२ ॥ संछाद्यमानः समरे शरैः परबलार्द्दनः । दर्शयन्रौद्रमात्मानं पाशहस्त इवान्तकः । निघ्नन् संशप्तकान् पार्थः प्रेक्षणीयतरोऽभवत् ॥ १०३ ॥ ततो विद्युत्प्रभैर्बाणैः काञ्चनवरविभूषितैः । निरन्तरमिवाकाशमासीच्छन्नं किरीटिना ॥ १०४ ॥ किरीटिभुजनिर्मुक्तैः सम्पतद्भिर्महाशरैः । समाच्छन्नं बभौ सर्वं काद्रवेयैरिव प्रभो ॥ १०५ ॥ रुक्मपुङ्खान् प्रसन्नाग्रान् शरान् सन्नतपर्वणः । अदर्शयदमेयात्मा दिक्षु सर्वासु पाण्डवः ॥ १०६ ॥ मही वियद्दिशः सर्वाः समुद्रा गिरयोऽपि वा । स्फुटन्तीति जना जग्मुः पार्थस्य तलनिस्वनात् ॥ १०७ ॥ हत्वा दश सहस्राणि पार्थिवानां महारथः । संशप्तकानां कौन्तेयः प्रपक्षं त्वरितोऽभ्ययात् ॥ १०८ ॥ प्रपक्षञ्च समासाद्य पार्थः काम्बोजरक्षितम् । प्रममाथ बलाद्बाणैर्द्दानवानिव वासवः ॥ १०९ ॥ प्रचिच्छेदाशु भल्लैन द्विषतामाततायिनाम् । शस्त्रपाणींस्तथा बाहूंस्तथा जङ्घाः शिरांसि च ॥ ११० ॥ अङ्गाङ्गावयवैश्छिन्नैर्व्यायुधास्तेऽपतन् भुवि । विष्वग्वाताभिसंभग्ना बहुशाखा इव द्रुमाः ॥ १११ ॥ हस्त्यश्वरथपत्तीनां व्रातान्निघ्नन्तमर्जुनम् । सुदक्षिणादवरजः शरवृष्ट्याभ्यवीवृषत् ॥ ११२ ॥ तस्यास्यतोऽर्द्धचन्द्राभ्यां बाहू परिघसन्निभौ । पूर्णचन्द्राभवक्त्रञ्च क्षुरेणाभ्यहरच्छिरः ॥ ११३ ॥ स पपात हतो वाहात् स्वलोहितपरिस्रवः । मनःशिलागिरेः शृङ्गं वज्रेणेव विदारितम् ॥ ११४ ॥ सुदक्षिणादवरजं काम्बोजं ददृशुर्हतम् । प्रांशुं कमलपत्राक्षमत्यर्थं प्रियदर्शनम् । काञ्चनस्तम्भसदृशं भिन्नं हेमगिरिं यथा ॥ ११५ ॥

ततोऽभवत् पुनर्युद्धं घोरमत्यर्थमद्भुतम । नानावस्थाश्च योधानां बभूवुस्तत्र युध्यताम् ॥ ११६ ॥ एकेषुभिर्हतैरश्वैः काम्बोजैर्यवनैः शकैः । शोणिताक्तैस्तदा रक्तं सर्वमासीद्विशाम्पते ॥ ११७ ॥ रथैर्हताश्वसूतैश्च हतारोहैश्च वाजिभिः । द्विरदैश्च हतारोहै-र्महामात्रैर्हतद्विपैः । अन्योऽन्येन महाराज कृतो घोरो जनक्षयः ॥ ११८ ॥ तस्मिन् प्रपक्षे पक्षे च निहते सव्यसाचिना । अर्जुनं जयतां श्रेष्ठं त्वरितो द्रौणिरभ्ययात् ॥ ११९ ॥ विधुन्वानो महच्चापं कार्त्तस्वरविभूषितम् । आददानः शरान् घोरान् स्वरश्मी-निव भास्करः ॥ १२० ॥ क्रोधामर्षाद्विवृत्तास्यो लोहिताक्षो बभौ बली । अन्तकाले यथा क्रुद्धो मृत्युः किङ्करदण्डभृत ॥ १२१ ॥ ततः प्रासृजदुग्राणि शरवर्षाणि सङ्घशः । तैर्विसृष्टैर्महाराज व्यद्रवत् पाण्डवी चमूः ॥ १२२ ॥ स दृष्ट्वैव तु दाशार्हं स्यन्दनस्थं विशाम्पते । पुनः प्रासृजदुग्राणि शरवर्षाणि मारिष ॥ १२३ ॥ तैः पतद्भिर्महाराज द्रौणिमुक्तैः समन्ततः । संछादितौ रथस्थौ तावुभौ कृष्णधनञ्जयौ ॥ १२४ ॥ ततः शरशतैस्तीक्ष्णैरश्वत्थामा प्रतापवान् । निश्चेष्टौ तावुभौ चक्रे युद्धे माधवपाण्डवौ ॥ १२५ ॥ हाहाकृतमभूत् सर्वं जङ्गमं स्थावरं तथा । चराचरस्य गोप्तारौ दृष्ट्वा संछादितौ शरैः ॥ १२६ ॥ सिद्धचारणसङ्घाश्च संपेतुस्ते समन्ततः । चिन्तयन्तो भवेदद्य लोकानां स्वस्त्यपीति च ॥ १२७ ॥ न मया तादृशो राजन् दृष्टपूर्वः पराक्रमः । संग्रामे यादृशो द्रौणेः कृष्णौ संछादयिष्यतः ॥ १२८ ॥ द्रौणेस्तु धनुषः शब्दमहितत्रासनं रणे । अश्रौषं बहुशो राजन् सिंहस्य नदतो यथा ॥ १२९ ॥ ज्या चास्य चरतो युद्धे सव्यदक्षिणमस्यतः । विद्युदम्बुदमध्यस्था भ्राजमानेव साभवत् ॥ १३० ॥ स तथा क्षिप्रकारी च दृढहस्तश्च पाण्डवः । प्रमोहं परमं गत्वा प्रैक्षत तं द्रोणजं ततः ॥ १३१ ॥ स विक्रमं हृतं मेने आत्मनः सुमहात्मना । तथास्य समरे राजन्

चपुरावीत् सुदुर्द्धर्षम् ॥ १३२ ॥ द्रौणिपाण्डवयोरेवं [illegible]
महारणे। वर्द्धमाने च राजेन्द्र द्रोणपुत्र महाबले। [illegible]
च कौन्तेये कृष्णे रोषः समाविशत् ॥ १३३ ॥ स रोषान्निश्वस-
न्राजन् निर्द्दहन्निव चक्षुषा। द्रौणिं ह्यपश्यत् संग्रामे फाल्गुनञ्च
मुहुर्मुहुः ॥ १३४ ॥ ततः क्रुद्धोऽब्रवीत् कृष्णः पार्थं सप्रणयं तदा
॥ १३५ ॥ अत्यद्भुतमिदं पार्थ तव पश्यामि संयुगे। अतिशेते
हि यत्र त्वां द्रोणपुत्रोऽद्य भारत ॥ १३६ ॥ कच्चिद्वीर्यं यथापूर्वं
भुजयोर्वा बलं तव। कच्चित्ते गाण्डिवं हस्ते रथे तिष्ठसि चार्जुन
॥ १३७ ॥ कच्चित् कुशलिनौ बाहू मुष्टिर्वा न व्यशीर्य्यत।
उदीर्य्यमाणं हि रणे पश्यामि द्रौणिमाहवे ॥ १३८ ॥ गुरुपुत्र
इति ह्येनं मानयन् भरतर्षभ। उपेक्षां कुरु मा पार्थ नायं काल
उपेक्षितुम् ॥ १३९ ॥ एवमुक्तस्तु कृष्णेन गृह्य भल्लांश्चतुर्द्दश।
त्वरमाणस्त्वराकाले द्रौणेर्द्धनुरथाच्छिनत्। ध्वजं छत्रं पताकाञ्च
रथं शक्तिं गदां तथा ॥ १४० ॥ जत्रुदेशे च सुभृशं वत्सदन्तै-
रताडयत्। स मूर्च्छां परमां गत्वा ध्वजयष्टिं समाश्रितः ॥ १४१ ॥
तं विसंज्ञं महाराज शत्रुणा भृशपीडितम्। अपोवाह रणात्
सूतो रक्षमाणो धनञ्जयात् ॥ १४२ ॥ एतस्मिन्नेव काले तु
विजयः शत्रुतापनः। न्यहनत्तावकं सैन्यं शतशोऽथ सहस्रशः।
पश्यतस्तस्य वीरस्य तव पुत्रस्य मारिष ॥ १४३ ॥ एवमेष क्षयो
वृत्तस्तावकानां परैः सह। क्रूरो विशसनो घोरो राजन् दुर्म-
न्त्रिते तव ॥ १४४ ॥ संशप्तकांश्च वीभत्सुः कुरूंश्चापि वृकोदरः।
वसुषेणश्च पाञ्चालान् क्षणेन व्यधमद्रणे ॥ १४५ ॥ वर्त्तमाने तथा
रौद्रे राजन् वीरवरक्षये। उत्थितान्यगणेयानि कवन्धानि सम-
न्ततः ॥ १४६ ॥ युधिष्ठिरोऽपि संग्रामात् प्रहारैर्गाढ़वेदनः।
क्रोशमात्रमपक्रम्य तस्थौ भरतसत्तम ॥ १४७ ॥

इति कर्णपर्वणि संकुलयुद्धे षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

सञ्जय उवाच। दुर्य्योधनस्ततः कर्णमुपेत्य भरतर्षभ।
अब्रवीन्मद्रराजञ्च तथैवान्यांश्च पार्थिवान् ॥ १ ॥ यदृच्छयैतत् संप्राप्तं स्वर्गद्वारमपावृतम्। सुखिनः क्षत्रियाः कर्ण लभन्ते युद्धमीदृशम् ॥ २ ॥ सदृशैः क्षत्रियैः शूरैः शूराणां युध्यतां युधि। इष्टं भवति राधेय तदिदं समुपस्थितम् ॥ ३ ॥ हत्वा वा पाण्डवान् युद्धे स्फीतामुर्वीमवाप्स्यथ। निहता वा परैर्युद्धे वीरलोकमवाप्स्यथ ॥ ४ ॥ दुर्य्योधनस्य तच्छ्रुत्वा वचनं क्षत्रियर्षभाः। हृष्टा नादानुदक्रोशन् वादित्राणि च सर्वशः ॥ ५ ॥ ततः प्रमुदिते तस्मिन् दुर्य्योधनबले तदा। हर्षयंस्तावकान् योधान् द्रौणिर्वचनमब्रवीत् ॥ ६ ॥ प्रत्यक्षं सर्वसैन्यानां भवताञ्चापि पश्यताम्। न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ ७ ॥ स तेनाहममर्षेण मित्रार्थे चापि पार्थिवाः। सत्यं वः प्रतिजानामि तद्वाक्यं मे निबोधत ॥ ८ ॥ धृष्टद्युम्नमहत्वाहं न विमोक्ष्यामि दंशनम्। अनृतायां प्रतिज्ञायां न हि स्वर्गमवाप्नुयाम् ॥ ९ ॥ अर्जुनो भीमसेनश्च यश्च मां प्रत्युदेष्यति। सर्वांस्तान् प्रनयिष्येऽहमिति मे नात्र संशयः ॥ १० ॥ एवमुक्ते ततः सर्वा सहिता भारती चमूः। अभ्यद्रवत कौन्तेयांस्तथा ते चापि पाण्डवाः ॥ ११ ॥ सन्निपातो रथयूथपानां महात्मनां भारत मोहनीयः। जनक्षये कालयुगान्तकल्पः प्रावर्त्तताग्रे कुरुसृञ्जयानाम् ॥ १२ ॥ ततः प्रवृत्ते युधि संप्रहारे भूतानि सर्वाणि सदैवतानि। आसन् समेतानि सहाप्सरोभिर्दिदृक्षमाणानि नरप्रवीरान् ॥ १३ ॥ दिव्यैश्च माल्यैर्विविधैश्च गन्धैर्दिव्यैश्च रत्नैर्विविधैर्नराग्र्यान्। रणे स्वकर्मोद्वहतः प्रवीरानवाकिरन्नप्सरसः प्रहृष्टाः ॥ १४ ॥ समीरणस्तांश्च निषेव्यगन्धान् सिषेव सर्वानपि योधमुख्यान्। निषेव्यमाणास्त्वनिलेन योधाः परस्परघ्ना धरणीं निपेतुः ॥ १५ ॥ सा दिव्यपुष्पैरवकीर्य्यमाणा सुवर्णपुङ्खैश्च शरैर्विचित्रैः। नक्षत्रसङ्घैरिव चित्रिता

द्यौः चितिर्बभौ योधवरैर्विचित्रा ॥ १६ ॥ ततोऽन्तरीक्षादपि साधुवादैर्वादित्रघोषैः समुदीर्य्यमाणः । ज्याघोषनेमिस्वननादमिश्रः समाकुलः सोऽभवत् संप्रहारः ॥ १७ ॥

इति कर्णपर्वणि अश्वत्थामप्रतिज्ञायां सप्तपञ्चाशोऽध्यायः ॥५७॥

---

सञ्जय उवाच । एवमेष महानासीत् संग्रामः पृथिवीक्षिताम् । क्रुद्धेऽर्जुने तथा कर्णे भीमसेने च पाण्डवे ॥ १ ॥ द्रोणपुत्त्रं पराजित्य जित्वा चान्यान् महारथान् । अब्रवीदर्जुनो राजन् वासुदेवमिदं वचः ॥ २ ॥ पश्य कृष्ण महाबाहो द्रवन्तीं पाण्डवीं चमूम् । कर्णञ्च पश्य संग्रामे कालयन्तं महारथान् ॥ ३ ॥ न च पश्यामि दाशार्ह धर्मराजं युधिष्ठिरम् । नापि केतुर्युधां श्रेष्ठ-धर्मपुत्त्रस्य दृश्यते ॥ ४ ॥ त्रिभागश्चावशिष्टोऽयं दिवसस्य जनार्द्दन । न च मां धार्त्तराष्ट्रेषु कश्चिद्युध्यति संयुगे । तस्मात्त्वं मत्प्रियं कुर्व्वन् याहि यत्र युधिष्ठिरः ॥ ५ ॥ दृष्ट्वा कुशलिनं युद्धे धर्मपुत्त्रं सहानुजम् । पुनर्योत्स्यामि वार्ष्णेय शत्रुभिः सह संयुगे ॥ ६ ॥ ततः प्रायाद्रथेनाशु बीभत्सोर्वचनाद्धरिः । यतो युधिष्ठिरो राजा सृञ्जयाश्च महारथाः । अयुध्यन्त महासत्त्वा मृत्युं कृत्वा निवर्त्तनम् ॥ ७ ॥ ततः संग्रामभूमिं तां वर्त्तमाने जनक्षये । अवेक्षमाणो गोविन्दः सव्यसाचिनमब्रवीत् ॥ ८ ॥ पश्य पार्थ महारौद्रो वर्त्तते भरतक्षयः । पृथिव्यां क्षत्रियाणां वै दुर्य्योधनकृते महान् ॥ ९ ॥ पश्य भारत चापानि रुक्मपृष्ठानि धन्विनाम् । मृतानामपविद्धानि कलापांश्च महाधनान् ॥ १० ॥ जातरूपमयैः पुङ्खैः शरांश्चानतपर्व्वणः । तैलधौतांश्च नाराचान् निर्मुक्तान् पन्नगानिव ॥ ११ ॥ हस्तिदन्तत्सरून् खड्गान् जातरूपपरिष्कृतान् । चर्म्माणि चापविद्धानि रुक्मगर्भाणि भारत ॥ १२ ॥

सुवर्णविकृतान् प्रासान् शक्तीः कनकभूषणाः। जाम्बूनदमयैः पट्टै-र्बद्धाश्च विपुला गदाः ॥ १३ ॥ जातरूपमयीश्चर्ष्टीः पट्टिशान् हेम-भूषितान्। दण्डैः कनकचित्रैश्च विप्रविद्धान् परश्वधान् ॥ १४ ॥ अयःकुन्तांश्च पतितान् मुषलानि गुरूणि च। शतघ्नीः पश्य चित्राश्च विपुलान् परिघांस्तथा। चक्राणि चापविद्धानि तोम-रांश्च महारणे ॥ १५ ॥ नानाविधानि शस्त्राणि प्रगृह्य जय-गृद्धिनः। जीवन्त इव दृश्यन्ते गतसत्त्वास्तरस्विनः ॥ १६ ॥ गदा-विमथितैर्गात्रैर्मुषलैर्भिन्नमस्तकान्। गजवाजिरथक्षुसान् पश्य योधान् सहस्रशः ॥ १७ ॥ मनुष्यहयनागानां शरशक्त्यृष्टिपट्टिशैः। निस्त्रिंशैः परिघैः प्रासैरयःकुन्तैः परश्वधैः ॥ १८ ॥ शरीरै-र्बहुभिश्छिन्नैः शोणितौघपरिप्लुतैः। गतासुभिरमित्रघ्न संवृता रणभूमयः ॥ १९ ॥ बाहुभिश्चन्दनादिग्धैः साङ्गदैर्हेमभूषितैः। सतलत्रैः सकेयूरैर्भाति भारत मेदिनी ॥ २० ॥ साङ्गुलित्रै-र्भुजाग्रैश्च विप्रविद्धैरलंकृतैः। हस्तिहस्तोपमैश्छिन्नैरूरुभिश्च तरस्विनाम् ॥ २१ ॥ बद्धचूड़ामणिवरैः शिरोभिश्च सकुण्डलैः। पतितैर्वृषभाक्षाणां विराजति वसुन्धरा ॥ २२ ॥ कबन्धैः शोणिता-दिग्धैश्छिन्नगात्रशिरोधरैः। भूर्भाति भरतश्रेष्ठ शान्तै[illegible]र्चिभि-रिवाग्निभिः ॥ २३ ॥ रथांश्च बहुधा भग्नान् हेमकिङ्किणिनः शुभान्। वाजिनश्च हतान् पश्य विनिकीर्णान् शराहतान् ॥ २४ ॥ अनुकर्षानुपासङ्गान् पताका विविधध्वजान्। रथिनाञ्च महा-शङ्खान् पाण्डरांश्च प्रकीर्णकान् ॥ २५ ॥ निरस्तजिह्वान् मात-ङ्गान् शयानान् पर्वतोपमान्। वैजयन्तीर्विचित्राश्च हतांश्च गज-वाजिनः ॥ २६ ॥ वारणानां परिस्तोमांस्तथैवाजिनकम्बलान्। विपाटितविचित्रांश्च चित्ररूपाः कुथास्तथा ॥ २७ ॥ छिन्नाश्च बहुधा घण्टा महद्भिः पतितैर्गजैः। वैदूर्य्यदण्डांश्च शुभान् पतिता-नङ्कुशान् भुवि ॥२८॥ बद्धाः सादिभुजाग्रेषु सुवर्णविकृताः कशाः।

विचित्रमणिचित्रांश्च जातरूपपरिष्कृतान्। अश्वास्तरपरिस्तोमान् राङ्कवान् पतितान् भुवि ॥ २९ ॥ चूड़ामणीन्नरेन्द्राणां विचित्राः काञ्चनस्रजः। छत्राणि चापविद्धानि चामरव्यजनानि च ॥ ३० ॥ चन्द्रनक्षत्रभासैश्च वदनैश्चारुकुण्डलैः। क्लृप्तश्मश्रुभिरत्यर्थं वीराणां समलंकृतैः। वदनैः पश्य संछन्नां महीं शोणितकर्द्दमाम् ॥ ३१ ॥ सजीवांश्चापरान् पश्य कूजमानान् समन्ततः। उपास्यमानान् बहुशो न्यस्तशस्त्रैर्विशाम्पते। ज्ञातिभिः सहितांस्तत्र रोदमानैः पुनः पुनः ॥ ३२ ॥ व्युत्क्रान्तानपरान् योधांश्छादयित्वा तरस्विनः। पुनर्युद्धाय गच्छन्ति जयगृद्धाः प्रमन्यवः ॥ ३३ ॥ अपरे तत्र तत्रैव परिधावन्ति मानवाः। ज्ञातिभिः पतितैः शूरैर्याच्यमानास्तथोदकम् ॥ ३४ ॥ जलार्थञ्च गताः केचिन्निष्प्राणा बहवोऽर्जुन। सन्निवृत्ताश्च ते शूरास्तान् वै दृष्ट्वा विचेतसः ॥ ३५ ॥ जलं त्यक्त्वा प्रधावन्ति क्रोशमानाः परस्परम्। जलं पीत्वा मृतान् पश्य पिबतोऽन्यांश्च भारत ॥ ३६ ॥ परित्यज्य प्रियानन्ये बान्धवान् बान्धवप्रियाः। व्युत्क्रान्ताः समदृश्यन्त तत्र तत्र महारणे ॥ ३७ ॥ तथापरान्नरश्रेष्ठ सन्दष्टौष्ठपुटान् पुनः। भ्रुकुटीकुटिलैर्वक्त्रैः प्रेक्षमाणान् समन्ततः ॥ ३८ ॥ एवं ब्रुवंस्तदा कृष्णो ययौ तत्र युधिष्ठिरः। अर्जुनश्चापि नृपतेर्द्दर्शनार्थं महारणे। याहि याहीति गोविन्दं पुनः पुनरचोदयत् ॥ ३९ ॥ तां युद्धभूमिं पार्थस्य दर्शयित्वा च माधवः। त्वरमाणस्ततः कृष्णः पार्थमाह शनैरिदम् ॥ ४० ॥ पश्य कौरवराजानमुपयातांश्च पार्थिवान्। कर्णं पश्य महारङ्गे ज्वलन्तमिव पावकम् ॥ ४१ ॥ असौ भीमो महेष्वासः सन्निवृत्तो रणं प्रति। तमेते विनिवर्त्तन्ते धृष्टद्युम्नपुरोगमाः। पाञ्चालसृञ्जयानाञ्च पाण्डवानाञ्च ये मुखम् ॥ ४२ ॥ निवृत्तैश्च पुनः पार्थैर्भग्नं शत्रुबलं महत्। कौरवान् द्रवतो ह्येष कर्णो धारयतेऽर्जुन ॥ ४३ ॥ अन्तकप्रतिमो वेगी शक्रतुल्यपराक्रमः। असौ

गच्छति कौरव्य द्रौणिः शस्त्रभृतांवर ॥ ४४ ॥ त्वमेव प्रद्रुतं संख्ये धृष्टद्युम्नो महारथः। अनुप्रयाति संग्रामे हतान् पश्य च सृञ्जयान् ॥ ४५ ॥ सर्वमाह सुदुर्द्धर्षो वासुदेवः किरीटिने। ततो राजन् प्रादुरासीन्महाघोरो महारणः ॥ ४६ ॥ सिंहनादरवाश्चैव प्रादुरासन् समागमे। उभयोः सेनयो राजन् मृत्युं कृत्वा निवर्त्तनम् ॥ ४७ ॥ एवमेष क्षयो वृत्तः पृथिव्यां पृथिवीपते। तावकानां परेषाञ्च राजन् दुर्मन्त्रिते तव ॥ ४८ ॥

इति कर्णपर्वणि कृष्णवाक्ये अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

सञ्जय उवाच। ततः पुनः समाजग्मुरभीताः कुरुसृञ्जयाः। युधिष्ठिरमुखाः पार्थाः सूतपुत्रमुखा वयम् ॥ १ ॥ ततः प्रववृते भीमः संग्रामो लोमहर्षणः। कर्णस्य पाण्डवानाञ्च यमराष्ट्रविवर्द्धनः ॥ २ ॥ तस्मिन् प्रवृत्ते संग्रामे तुमुले शोणितोदके। संशप्तकेषु शूरेषु किञ्चिच्छिष्टेषु भारत ॥ ३ ॥ धृष्टद्युम्नो महाराज सहितः सर्वराजभिः। कर्णमेवाभिदुद्राव पाण्डवाश्च महारथाः ॥ ४ ॥ आगच्छमानांस्तान् संख्ये प्रहृष्टान् विजयैषिणः। दधारैको रणे कर्णो जलौघानिव पर्वतः ॥ ५ ॥ समासाद्य तु ते कर्णं व्यशीर्य्यन्त महारथाः। यथाचलं समासाद्य वार्य्यौघाः सर्वतोदिशम् ॥ ६ ॥ तयोरासीन्महाराज संग्रामो लोमहर्षणः। धृष्टद्युम्नस्तु राधेयं शरेणानतपर्वणा। ताड़यामास समरे तिष्ठ तिष्ठेति चाब्रवीत् ॥ ७ ॥ विजयश्च धनुः श्रेष्ठं विधुन्वानो महारथः। पार्षतस्य धनुश्छित्त्वा शरांश्चाशीविषोपमान्। ताड़यामास संक्रुद्धः पार्षतं नवभिः शरैः ॥ ८ ॥ ते वर्म हेमविकृतं भित्त्वा तस्य महात्मनः। शोणिताक्ता व्यराजन्त शक्रगोपा इवानघ ॥ ९ ॥ तदपास्य धनुश्छिन्नं धृष्टद्युम्नो महारथः। अन्यद्धनु-

मुपादाय शरांश्चाशीविषोपमान्। कर्णं विव्याध सप्तत्या शरैः सन्नतपर्व्वभिः ॥ १० ॥ तथैव राजन् कर्णोऽपि पार्षतं शत्रु-तापनम्। छादयामास समरे शरैराशीविषोपमैः ॥ ११ ॥ द्रोण-शत्रुर्महेष्वासो विव्याध निशितैः शरैः ॥ १२ ॥ तस्य कर्णो महाराज शरं कनकभूषणम्। प्रेषयामास संक्रुद्धो मृत्युदण्डमिवा-परम् ॥ १३ ॥ तमापतन्तं सहसा घोररूपं विशाम्पते। चिच्छेद सप्तधा राजन् शैनेयः कृतहस्तवत् ॥ १४ ॥ दृष्ट्वा विनिहतं वाणं शरैः कर्णो विशाम्पते। सात्यकिं शरवर्षेण समन्तात् पर्य्यवारयत् ॥ १५ ॥ विव्याध चैनं समरे नाराचैस्तत्र सप्तभिः। तं प्रत्य-विध्यच्छैनेयः शरैर्हेमविभूषितैः ॥ १६ ॥ ततो युद्धं महाराज चक्षुःश्रोत्रभयावहम्। आसीद्घोरञ्च चित्रञ्च प्रेक्षणीयं समन्ततः ॥ १७ ॥ सर्व्वेषां तत्र भूतानां रोमहर्षोऽभ्यजायत। तद्दृष्ट्वा समरे कर्म कर्णशैनेययोर्नृप ॥ १८ ॥ एतस्मिन्नन्तरे द्रौणिरभ्य-यात् सुमहावलः। पार्षतं शत्रुदमनं शत्रुवीर्य्यासुनाशनम् ॥ १९ ॥ अभ्यभाषत संक्रुद्धो द्रौणिः परपुरञ्जयः। तिष्ठ तिष्ठाद्य ब्रह्मघ्न न मे जीवन् विमोक्ष्यसे ॥ २० ॥ इत्युक्त्वा सुभृशं वीरं शीघ्रकृ-न्निशितैः शरैः। पार्षतं छादयामास घोररूपैः सुतेजनैः। यत-मानं परं शक्त्या यतमानो महारथः ॥ २१ ॥ यथा हि समरे द्रोणः पार्षतं वीक्ष्य मारिष। तथा द्रौणिं रणे दृष्ट्वा पार्षतः परवीरहा। नातिहृष्टमना भूत्वा ज्ञातवान् मृत्युमात्मनः ॥ २२ ॥ स ज्ञात्वा समरेऽऽत्मानं शस्त्रेणावध्यमेव तु। जवेनाभ्यद्रवद्द्रौणिं कालः कालमिव क्षये ॥ २३ ॥ द्रौणिस्तु दृष्ट्वा राजेन्द्र धृष्टद्युम्न-मवस्थितम्। क्रोधेन निश्वसन् वीरः पार्षतं समुपाद्रवत् ॥ २४ ॥ तावन्योऽन्यस्तु दृष्ट्वैव संरम्भं जग्मतुः परम् ॥ २५ ॥ अथाब्रवी-न्महाराज द्रोणपुत्रः प्रतापवान्। धृष्टद्युम्नं समीपस्थं त्वरमाणो विशाम्पते ॥ २६ ॥ पाञ्चालापसदाद्य त्वां प्रेषयिष्यामि मृत्यवे ॥२७॥

पापं हि यत्त्वया कर्म घ्नता द्रोणं पुरा कृतम्। अद्य त्वां तपस्यते तद्वै यथा न कुशलं तथा ॥ २८ ॥ अरक्ष्यमाणः पार्थेन यदि तिष्ठति संयुगे। नापक्रामसि वा मूढ़ सत्यमेतद्ब्रवीमि ते ॥ २९ ॥ एवमुक्तः प्रत्युवाच धृष्टद्युम्नः प्रतापवान् ॥ ३० ॥ प्रतिवाक्यं स एवासिर्मामको दास्यते तव। येनैव ते पितुर्दत्तं यतमानस्य संयुगे ॥ ३१ ॥ यदि तावन्मया द्रोणो निहतो ब्राह्मणब्रुवः। त्वामिदानीं कथं युद्धे न हनिष्यामि विक्रमात् ॥ ३२ ॥ एवमुक्त्वा महाराज सेनापतिरमर्षणः। निशितेनाथ बाणेन द्रौणिं विव्याध पार्षतः ॥ ३३ ॥ ततो द्रौणिः सुसंक्रुद्धः शरैः सन्नतपर्वभिः। आच्छादयद्दिशो राजन् धृष्टद्युम्नस्य संयुगे ॥ ३४ ॥ नैवान्तरीक्षं न दिशो नापि योधाः समन्ततः। दृश्यन्ते वै महाराज शरैश्छन्नाः सहस्रशः ॥ ३५ ॥ तथैव पार्षतो राजन् द्रौणिमाहवशोभिनम्। शरैः संछादयामास सूतपुत्रस्य पश्यतः ॥ ३६ ॥ राधेयोऽपि महाराज पाञ्चालान् सह पाण्डवैः। द्रौपदेयान् युधामन्युं सात्यकिञ्च महारथम्। एकः संवारयामास प्रेक्षणीयः समन्ततः ॥ ३७ ॥ धृष्टद्युम्नस्तु समरे द्रौणेश्चिच्छेद कार्मुकम्। वेगवत् समरे घोरं शरांश्चाशीविषोपमान् ॥ ३८ ॥ पार्षतस्य राजेन्द्र धनुः शक्तिं गदां ध्वजम्। हयान् सूतं रथञ्चैव निमेषाद्व्यधमच्छरैः ॥ ३९ ॥ स छिन्नधन्वा विरथो हताश्वो हतसारथिः। खड्गमादत्त विपुलं शतचन्द्रञ्च भानुमत् ॥ ४० ॥ द्रौणिस्तदपि राजेन्द्र भल्लैः क्षिप्रं महारथः। चिच्छेद समरे वीरः क्षिप्रहस्तो दृढ़ायुधः। रथादनवरूढस्य तदद्भुतमिवाभवत् ॥ ४१ ॥ धृष्टद्युम्नन्तु विरथं हताश्वं छिन्नकार्मुकम्। शरैश्च बहुधा विद्धमस्त्रैश्च शकलीकृतम्। नाशकद्भरतश्रेष्ठ यतमानो महारथः ॥ ४२ ॥ तस्यान्तमिषुभी राजन् यदा द्रौणिर्न लब्धिवान्। अथ त्यक्त्वा धनुर्वीरः पार्षतं त्वरितोऽन्वगात् ॥ ४३ ॥

आसीद्दाप्लवतो वेगस्तस्य राजन्महात्मनः । गरुड़स्येव पततो जिहीर्षोः पन्नगोत्तमम् ॥ ४४ ॥ एतस्मिन्नेव काले तु माधवोऽर्जुनमब्रवीत् । पश्य पार्थ यथा द्रौणिः पार्षतस्य रथं प्रति । यत्नं करोति विपुलं हन्याच्चैनं न संशयः ॥ ४५ ॥ तं मोचय महाबाहो पार्षतं शत्रुकर्षण । द्रौणेरास्यमनुप्राप्तं मृत्योरास्यगतं यथा ॥ ४६ ॥ एवमुक्त्वा महाराज वासुदेवः प्रतापवान् । प्रैषयत्तुरगांस्तत्र यत्र द्रौणिर्व्यवस्थितः ॥ ४७ ॥ ते हयाश्चन्द्रसङ्काशाः केशवेन प्रचोदिताः । आपिबन्त इव व्योम जग्मुर्द्रौणिरथं प्रति ॥ ४८ ॥ दृष्ट्वायान्तौ महावीर्य्यावुभौ कृष्णधनञ्जयौ । धृष्टद्युम्नवधे यत्नमकरोत् स महाबल ॥ ४९ ॥ विकृष्यमाणं दृष्ट्वैव धृष्टद्युम्नं जनेश्वर । शरांश्चिक्षेप वै पार्थो द्रौणिं प्रति महाबलः ॥ ५० ॥ ते शरा हेमविकृता गाण्डीवप्रेषिता भृशम् । द्रौणिमासाद्य विविशुर्वल्मीकमिव पन्नगाः ॥ ५१ ॥ स विद्धस्तैः शरैर्घोरैर्द्रौणपुत्रः प्रतापवान् । उत्सृज्य समरे राजन् पाञ्चाल्यममितौजसम् ॥ ५२ ॥ रथमारुरुहे वीरो धनञ्जयशरार्द्दितः । प्रगृह्य च धनुः श्रेष्ठं पार्थं विव्याध सायकैः ॥ ५३ ॥ एतस्मिन्नन्तरे वीरः सहदेवो जनाधिप । अपोवाह रथेनाजौ पार्षतं शत्रुतापनम् ॥ ५४ ॥ अर्जुनोऽपि महाराज द्रौणिं विव्याध पत्रिभिः । तं द्रोणपुत्रः संक्रुद्धो वाह्वोरुरसि चार्पयत् ॥ ५५ ॥ क्रोधितस्तु रणे पार्थो नाराचं कालसम्मितम् । द्रोणपुत्राय चिक्षेप कालदण्डनिवापरम् । ब्राह्मणस्यांसदेशे स निपपात महाद्युतिः ॥ ५६ ॥ स विह्वलो महाराज शरवेगेन संयुगे । निषसाद रथोपस्थे वैक्लव्यञ्च परं ययौ ॥ ५७ ॥ ततः कर्णो महाराज व्याक्षिपद्विजयं धनुः । अर्जुनं समरे क्रुद्धः प्रेक्षमाणो मुहुर्मुहुः । द्वैरथञ्चापि पार्थेन कामयानो महारणे ॥ ५८ ॥ विह्वलं तन्तु वीक्ष्याथ द्रोणपुत्रस्य सारथिः । अपोवाह रथेनाजौ त्वरमाणो रणाजिरात् ॥ ५९ ॥

यथोत्क्रुष्टं महाराज पाञ्चालैर्जितकाशिभिः । मोचितं पार्षतं दृष्ट्वा द्रोणपुत्रस्य पीड़ितम् ॥ ६० ॥ वादित्राणि च दिव्यानि प्रावाद्यन्त सहस्रशः । सिंहनादांश्च चक्रुस्ते दृष्ट्वा संख्ये तदद्भुतम् ॥ ६१ ॥ एवं कृत्वाब्रवीत् पार्थो वासुदेवं धनञ्जयः । याहि संशप्तकान् कृष्ण कार्य्यमेतत् परं मम ॥ ६२ ॥ ततः प्रयातो दाशार्हः श्रुत्वा पाण्डवभाषितम् । रथेनातिपताकेन मनोमारुतरंहसा ॥ ६३॥

इति कर्णपर्वणि द्रौण्यपयाने एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

सञ्जय उवाच । एतस्मिन्नन्तरे कृष्णः पार्थं वचनमब्रवीत् । दर्शयन्निव कौन्तेयं धर्मराजं युधिष्ठिरम् ॥ १ ॥ एष पाण्डव ते भ्राता धार्त्तराष्ट्रैर्महाबलैः । जिघांसुभिर्महेष्वासैर्द्रुतं पार्थोऽनुसार्य्यते ॥ २ ॥ तथानुयान्ति संरब्धाः पाञ्चाला युद्धदुर्मदाः । युधिष्ठिरं महात्मानं परीप्सन्तो महाबलाः ॥ ३ ॥ एष दुर्य्योधनः पार्थ रथानीकेन दंशितः । राजा सर्वस्य लोकस्य राजानमनुधावति ॥ ४ ॥ जिघांसुः पुरुषव्याघ्र भ्रातृभिः सहितो बली । आशीविषसमस्पर्शैः सर्वयुद्धविशारदैः ॥ ५ । एते जिघृक्षवो यान्ति द्विपाश्वरथपत्तयः । युधिष्ठिरं धार्त्तराष्ट्रा रत्नोत्तममिवार्थिनः ॥ ६ ॥ पश्य सात्वतभीमाभ्यां निरुद्धा विष्ठिताः पुनः । जिहीर्षवोऽमृतं दैत्याः शक्राग्निभ्यामिवावशाः ॥ ७ ॥ एते बहुत्वात्त्वरिताः पुनर्गच्छन्ति पाण्डवम् । समुद्रमिव वार्य्योघाः प्रावृट्काले महारथाः ॥ ८ ॥ नदन्तः सिंहनादांश्च धमन्तश्चापि वारिजान् । बलवन्तो महेष्वासा विधुन्वन्तो धनूंषि च ॥ ९ ॥ मृत्योर्मुखगतं मन्ये कुन्तीपुत्रं युधिष्ठिरम् । हुतमग्नौ च कौन्तेयं दुर्य्योधनवशंगतम् ॥ १० ॥ यथाविधमनीकन्तु धार्त्तराष्ट्रस्य पाण्डव । नास्य शक्रोऽपि मुच्येत संप्राप्तो बाणगोचरम् ॥ ११ ॥ दुर्य्योधनस्य वीरस्य

शरौघान् शीघ्रमस्यतः। संक्रुद्धस्यान्तकस्येव को वेगं संसहेद्रणे
॥ १२ ॥ दुर्य्योधनस्य वीरस्य द्रौणेः शारद्वतस्य च। कर्णस्य
चेषुवेगो वै पर्व्वतानपि शातयेत् ॥ १३ ॥ कर्णेन च कृतो राजा
विमुखः शत्रुतापनः। बलवांल्लघुहस्तश्च कृती युद्धविशारदः ॥१४॥
राधेयः पाण्डवश्रेष्ठं शक्तः पीड़यितुं रणे। सहितो धृतराष्ट्रस्य
पुत्रैः शूरैर्महाबलैः ॥ १५ ॥ तस्यैभिर्युध्यमानस्य संग्रामे संशिता-
त्मनः। अन्यैरपि च पार्थस्य कृतं कर्म महारथैः ॥ १६ ॥ उप-
वासकृशो राजा भृशं भरतसत्तम। ब्राह्मे बले स्थितो ह्येष न
क्षात्रे हि बले विभुः ॥ १७ ॥ कर्णेन चाभियुक्तोऽयं भूपतिः शत्रु-
तापनः। संशयं समनुप्राप्तः पाण्डवो वै युधिष्ठिरः ॥ १८ ॥ न
जीवति महाराजो मन्ये पार्थ युधिष्ठिरः। यद्भीमसेनः सहते
सिंहनादममर्षणः ॥ १९ ॥ नद्दतां धार्त्तराष्ट्राणां पुनः पुनररिं-
न्दमः। धमतास्च महाशङ्खान् संग्रामे जितकाशिनाम् ॥ २० ॥
युधिष्ठिरं पाण्डवेयं हतेति पुरुषर्षभ। सञ्चोदयत्यशौ कर्णो
धार्त्तराष्ट्रान् महारथान् ॥ २१ ॥ स्थूणाकर्णेन्द्रजालेन पार्थं पाशु-
पतेन च। प्रच्छादयन्ति राजानं शस्त्रजालैर्महारथाः ॥ २२ ॥
आतुरो हि कृतो राजा सन्निषसास भारत। यथैनमनुवर्त्तन्ते
पाञ्चालाः सह पाण्डवैः ॥ २३ ॥ त्वरमाणास्त्वराकाले सर्व्वशास्त्र-
भृतांवराः। मज्जन्तमिव पाताले बलिनाऽप्युज्जिहीर्षवः ॥ २४ ॥
न केतुर्दृश्यते राज्ञः कर्णेन निहतः शरैः। पश्यतोर्यमयोः पार्थं
सात्यकेश्च शिखण्डिनः ॥ २५ ॥ धृष्टद्युम्नस्य भीमस्य शतानीकस्य
वा विभो। पाञ्चालानाञ्च सर्व्वेषां चेदीनाञ्चैव भारत ॥ २६ ॥ एष
कर्णो रणे पार्थ पाण्डवानामनीकिनीम्। शरैर्विध्वंसयति वै
नलिनीमिव कुञ्जरः ॥ २७ ॥ एते द्रवन्ति रथिनस्त्वदीयाः पाण्डु-
नन्दन। पश्य पश्य यथा पार्थ गच्छन्त्येते महारथाः ॥ ३८ ॥
एते भारत मातङ्गाः कर्णेनाभिहता रणे। आर्त्तनादान् विकुर्व्वाणा

विद्रवन्ति द्विषो रण ॥ २९ ॥ रथानां द्रवते वृन्दमेतच्चैव समन्ततः । द्राव्यमाणं रणे पार्थ कर्णेनामित्रकर्षिणा ॥ ३० ॥ हस्तिकक्षां रणे पश्य चरन्तीं तत्र तत्र ह । रथस्थं सूतपुत्रस्य केतुं केतुमतां वर ॥ ३१ ॥ असौ धावति राधेयो भीमसेनरथं प्रति । किरन् शरशतान्येव विनिघ्नंस्तव वाहिनीम् ॥ ३२ ॥ एतांश्च पश्य पाञ्चालान् द्राव्यमाणान् महारथान् । शक्रेणेव यथा [illegible] त्यान् हन्यमानान् महाहवे ॥ ३३ ॥ एष कर्णो रणे जित्वा पा[illegible]ान् पाण्डुसृञ्जयान् । दिशो वै प्रेक्षते सर्वास्त्वदर्थमिति मे [illegible]ः ॥ ३४ ॥ पश्य पार्थ धनुःश्रेष्ठं विकर्षन् साधु शोभते । शत्रुं [illegible] जित्वा यथा शक्रो देवसङ्घैः समावृतः ॥ ३५ ॥ एते नर्दन्ति कौरव्या दृष्ट्वा कर्णस्य विक्रमम् । त्रासयन्तो रणे पाण्डून् सृञ्जयांश्च समन्ततः ॥ ३६ ॥ एष सर्वात्मना पाण्डूंस्त्रासयित्वा महारणे । अभिभाषति राधेयः सर्वसैन्यानि मानद ॥ ३७ ॥ अभिद्रवत भद्रं वो द्रुतं द्रवत कौरवाः । यथा जीवन्न वः कश्चिन्मुच्येत युधि सृञ्जयः ॥ ३८ ॥ तथा कुरुत संयत्ता वयं यास्याम पृष्ठतः । एवमुक्त्वा गतो ह्येष पृष्ठतो विकिरञ्छरान् ॥ ३९ ॥ पश्य कर्णं रणे पार्थ श्वेतच्छत्रविराजितम् । उदयं पर्वतं यद्वत् शशाङ्केनोपशोभि[illegible] ॥ ४० ॥ पूर्णचन्द्रनिकाशेन मूर्ध्नि छत्रेण भारत । धि[illegible]न[illegible]ण समरे श्रीमच्छतशलाकिना ॥ ४१ ॥ एष त्वां प्रेक्षते कर्णः सकटाक्षं विशाम्पते । उत्तमं जवमास्थाय ध्रुवमेष्यति संयुगे ॥ ४२ ॥ पश्य ह्येनं महाबाहो विधुन्वानं महद्धनुः । शरांश्चाशीविषाकारान् विसृजन्तं महारणे ॥ ४३ ॥ असौ निवृत्तो राधेयो दृष्ट्वा ते वानरध्वजम् । प्रार्थयन् समरं पार्थ त्वया सह परन्तप । वधाय चात्मनोऽभ्येति दीपास्यं शलभो यथा ॥ ४४ ॥ एष ह्यमर्षी शूरश्च धार्तराष्ट्रहिते रतः । न त्वां मर्षयते पार्थ नित्यमेव च मन्दधीः ॥ ४५ ॥ कर्णमेकाकिनं दृष्ट्वा रथानीकेन भारत । दिदृक्षुः

सुसंयत्तो धार्त्तराष्ट्रो निवर्त्तते ॥ ४६ ॥ सर्व्वः सहैभिर्दुष्टात्मा
बध्यताञ्च प्रयत्नतः। त्वया यमञ्च राज्यञ्च सुखञ्चोत्तमनिच्छता
॥ ४७ ॥ अन्योनयोर्विश्रुतयोर्योत्स्यमानयोः। देवासुरे पार्थ
मृधे देवदानवयोरिव ॥ ४८ ॥ त्वाञ्च दृष्ट्वातिसंरब्धं कर्णञ्च भरत-
र्षभ। असौ दुर्य्योधनः क्रुद्धो नोत्तरं प्रतिपद्यते ॥ ४९ ॥ आत्मनश्च
कृतात्मानं समीक्ष्य भरतर्षभ। कृतागसञ्च राधेयं धर्म्मात्मनि
युधिष्ठिरे ॥ ५० ॥ प्रतिपद्यस्व कौन्तेय प्राप्तकालमनन्तरम्।
आर्य्यां युद्धे मतिं कृत्वा प्रत्येहि रथयूथपम् ॥ ५१ ॥ पञ्च ह्येतानि
मुख्यानां रथानां रथसत्तम। यतान्यायान्ति समरे बलिनां तिग्म-
तेजसाम् ॥ ५२ ॥ पञ्च नागसहस्राणि द्विगुणा वाजिनस्तथा।
अभिसंहत्य कौन्तेय पदातिप्रयुतानि षट् ॥ ५३ ॥ अन्योऽन्यरक्षितं
वीर बलं त्वामभिवर्त्तते। सूतपुत्रं महेष्वासं दर्शयात्मानमात्मना।
उत्तमं जवमास्थाय प्रत्येहि भरतर्षभ ॥ ५४ ॥ असौ कर्णः सुसं-
रब्धः पाञ्चालानभिधावति। केतुमस्य हि पश्यामि धृष्टद्युम्नरथं
प्रति। समुच्छेत्स्यति पाञ्चालानिति मे धीयते मतिः ॥ ५५ ॥
आचक्षे च प्रियं पार्थ तवेदं भरतर्षभ। राजा जीवति कौरव्यो
धर्म्मराजो युधिष्ठिरः ॥ ५६ ॥ असौ भीमो महाबाहुः सन्निवृत्त-
श्चमूमुखे। वृतः सृञ्जयसैन्येन सात्यकेन च भारत ॥ ५७ ॥
बध्यन्त एते समरे कौरवा निशितैः शरैः। भीमसेनेन कौन्तेय
पाञ्चालैश्च महात्मभिः ॥ ५८ ॥ सेना हि धार्त्तराष्ट्रस्य विमुखा
विप्रवद्रुणा। विप्रधावति वेगेन भीमस्य निहता शरैः ॥ ५९ ॥
विपन्नसस्येव मही रुधिरेण समुक्षिता। भारती भरतश्रेष्ठ सेना
कृपणदर्शना ॥ ६० ॥ निवृत्तं पश्य कौन्तेय भीमसेनं युधाम्पतिम्।
आशीविषमिव क्रुद्धं द्रावयन्तं वरूथिनीम् ॥ ६१ ॥ पीतरक्ता-
सितसितास्ताराचन्द्रार्कमण्डिताः। पताका विप्रकीर्य्यन्ते छत्रा-
ण्येतानि चार्ज्जुन ॥ ६२ ॥ सौवर्णा राजताश्चैव तैजसाश्च पृथग्-

विषाः। केतवोऽभिनिपात्यन्ते हस्त्यश्वञ्च प्रकीर्य्यते ॥ ६३ ॥ रथेभ्यः प्रपतन्त्येते रथिनो विगतासवः। नानावर्णैर्हता वाणैः पाञ्चालैरपलायिभिः ॥ ६४ ॥ निर्मनुष्यान् गजानश्वान्रथांश्चैव धनञ्जय। समाद्रवन्ति पाञ्चाला धार्त्तराष्ट्रांस्तरस्विनः ॥ ६५ ॥ विमृद्नन्ति नरव्याघ्रो भीमसेनबलाश्रयात्। बलं परेषां दुर्द्धर्षास्त्यक्त्वा प्राणान्नरोत्तम ॥ ६६ ॥ एते नर्दन्ति पाञ्चाला धापयन्ति च वारिजान्। अभिद्रवन्ति च रणे मृद्नन्तः सायकैः परान् ॥ ६७ ॥ पश्यस्वैषाञ्च माहात्म्यं पाञ्चाला हि पराक्रमात्। धार्त्तराष्ट्रान् विनिघ्नन्ति क्रुद्धाः सिंहा इव द्विपान् ॥ ६८ ॥ शस्त्रमाच्छिद्य शत्रूणां सायुधानां निरायुधाः। तेनैवैतानभीषास्त्वान्निघ्नन्ति च नर्दन्ति च ॥ ६९ ॥ शिरांस्येतानि पात्यन्ते शत्रूणां बाहवोऽपि च। रथनागहया वीरा यशस्याः सर्व एव च ॥ ७० ॥ सर्वतश्चाभिपन्नैषां धार्त्तराष्ट्री महाचमूः। पाञ्चालैर्मानसाद्दीत्य हंसैर्गङ्गेव वेगितैः ॥ ७१ ॥ सभयञ्च पराक्रान्ताः पाञ्चालानां निवारणे। कृपकर्णादयो वीरा ऋषभाणामिवर्षभाः ॥ ७२ ॥ सुनिमग्नांश्च भीमास्त्रे धार्त्तराष्ट्रान् महारथान्। धृष्टद्युम्नमुखा वीरा घ्नन्ति शत्रून् सहस्रशः ॥ ७३ ॥ पाञ्चालेष्वभिभूतेषु द्विपं नृपभीनेदन्। शत्रुपक्षमवस्कन्द्य शरानस्यति मारुतिः ॥ ७४ ॥ विषमाभूयिष्ठतरा धार्त्तराष्ट्री महाचमूः। रथाश्वेभाः सुवित्रस्ता भीमसेनभयार्द्दिताः ॥ ७५ ॥ पश्य भीमेन नाराचैर्भिन्ना नागाः पतन्त्यमी। वज्रिवज्रहतानीव शिखराणि धराभृताम् ॥ ७६ ॥ भीमसेनस्य निर्विद्धा वाणैः सन्नतपर्वभिः। स्वान्यनीकानि मृद्नन्तो द्रवन्त्येते महागजाः ॥ ७७ ॥ नाभिजानासि भीमस्य सिंहनादं सुदुःसहम्। नदतोऽर्जुन संग्रामे भैरवं जितकाशिनः ॥ ७८ ॥ एष नैषादिरभ्येति द्विपमुख्येन पाण्डवम्। जिघांसुस्तोमरैः क्रुद्धो दण्डपाणिरिवान्तकः ॥ ७९ ॥ सतोमरावस्य भुजौ छिन्नौ भीमेन

गर्ज्जतः। तीक्ष्णैरग्निरविप्रख्यैर्नाराचैर्द्दशभिर्हतः। हत्वैनं पुनरायाति नागानन्यान् प्रहारिणः ॥ ८० ॥ पश्य नीलाम्बुदनिभान् महामात्रैरधिष्ठितान्। शक्तितोमरसङ्घातैर्विनिघ्नन्तं वृकोदरम। सप्तसप्त च नागांस्तान् वैजयन्तीश्च सध्वजाः ॥ ८१ ॥ निहत्य निशितैर्वाणैश्छिन्नाः पार्थाग्रजेन ते। दशभिर्द्दशभिश्चैको नाराचैर्निहतो गजः ॥ ८२ ॥ न चासौ धार्त्तराष्ट्राणां श्रूयते निनदस्तथा। पुरन्दरसमे युद्धे निवृत्ते भरतर्षभ ॥ ८३ ॥ अक्षौहिण्यन्तथा तिस्रो धार्त्तराष्ट्रस्य संहताः। क्रुद्धेन नरसिंहेन भीमसेनेन वारिताः ॥ ८४ ॥

सञ्जय उवाच। भीमसेनेन तत् कर्म कृतं दृष्ट्वा सुदुष्करम। अर्जुनो व्यधमच्छिष्टानहितान्निशितैः शरैः ॥ ८५ ॥ ते बध्यमानाः समरे संशप्तकगणाः प्रभो। प्रभग्नाः समरे भीता दिशो दश महाबलाः। शक्रस्यातिथितां गत्वा विशोका ह्यभवंस्तदा ॥ ८६ ॥ पार्थश्च पुरुषव्याघ्र शरैः सन्नतपर्वभिः। जघान धार्त्तराष्ट्रस्य चतुर्विधबलाञ्चमूम ॥ ८७ ॥

इति कर्णपर्व्वणि संकुलयुद्धे षष्टितमोऽध्यायः ॥ ६० ॥

---

धृतराष्ट्र उवाच। निवृत्ते भीमसेने तु पाण्डवे च युधिष्ठिरे। बध्यमाने वले चापि मामके पाण्डसृञ्जयैः ॥ १ ॥ द्रवमाने बलौघे च निरानन्दे मुहुर्मुहुः। किमकुर्वन्त कुरवस्तन्ममाचक्ष्व सञ्जय ॥२॥

सञ्जय उवाच। दृष्ट्वा भीमं महाबाहुं सूतपुत्रं प्रतापवान्। क्रोधरक्तेक्षणो राजन् भीमसेनमुपाद्रवत् ॥ ३ ॥ तावकन्तु बलं दृष्ट्वा भीमसेनात् पराङ्मुखम्। यत्नेन महता राजन् पर्य्यवस्थापदद्बली ॥ ४ ॥ व्यवस्थाप्य महाबाहुस्तव पुत्रस्य वाहिनीम्। प्रत्युद्ययौ तदा कर्णः पाण्डवान् युद्धदुर्म्मदान् ॥ ५ ॥ प्रत्युद्ययुस्तु

तु ततः कर्णं नकुलः कौरवान् ययौ । कथं पुत्रस्तु समरे छित्वा नकुलमेव तु । जगोप चक्रं तं तरतो राधेयस्यैव मारिष ॥ ४१ ॥ उलूकस्तु रणे क्रुद्धः सहदेवेन वारितः ॥ ४२ ॥ तस्याश्वांश्चतुरो हत्वा सहदेवः प्रतापवान् । सारथिं प्रेषयामास यमस्य सदनं प्रति ॥ ४३ ॥ उलूकस्तु ततो यानादवप्लुत्य विशाम्पते । त्रिगर्त्तानां बलं तूर्णं जगाम पितृनन्दनः ॥ ४४ ॥ सात्यकिः शकुनिं विद्ध्वा विंशत्या निशितैः शरैः । ध्वजं चिच्छेद भल्लेन सौबलस्य हसन्निव ॥ ४५ ॥ सौबलस्तस्य समरे क्रुद्धो राजन् प्रतापवान् । विदार्य्य कवचं भूयो ध्वजं चिच्छेद काञ्चनम् ॥ ४६ ॥ अथैनं निशितैर्बाणैः सात्यकिः प्रत्यविध्यत । सारथिञ्च महाराज त्रिभिरेव समार्पयत । अथास्य वाहांस्त्वरितः शरैर्निन्ये यमक्षयम् ॥ ४७ ॥ ततोऽवप्लुत्य सहसा शकुनिर्भरतर्षभ । आरुरोह रथं तूर्णमुलूकस्य महारथः । अपोवाहाथ शीघ्रं च शैनेयाद्युद्धशालिनः ॥ ४८ ॥ सात्यकिस्तु रणे राजंस्तावकानामनीकिनीम् । अभिदुद्राव वेगेन ततोऽनीकमभज्यत ॥ ४९ ॥ शैनेयशरसंछन्नं तव सैन्यं विशाम्पते । भेजे दश दिशस्तूर्णं न्यपतच्च गतासुवत् ॥ ५० ॥ भीमसेनं तव सुतो वारयामास संयुगे । तन्तु भीमो मुहूर्त्तेन व्यश्वसूतरथध्वजम् ॥ ५१ ॥ चक्रे लोकेश्वरं तत्र तेनातुष्यन्त वै जनाः । ततोऽपायान्नृपस्तत्र भीमसेनस्य गोचरात् ॥५२॥ कुरुसैन्यं ततः सर्वं भीमसेनमुपाद्रवत् । तत्र नादो महानासीद्भीमसेनं जिघांसताम् ॥ ५३ ॥ युधामन्युः कृपं विद्ध्वा धनुरस्याशु चिच्छेद । अथान्यद्धनुरादाय कृपः शस्त्रभृतांवरः ॥ ५४ ॥ युधामन्योर्ध्वजं सूतं छत्रञ्चापातयत् क्षितौ । ततोऽपायाद्रथेनैव युधामन्युर्महारथः ॥ ५५ ॥ उत्तमौजाश्च हार्द्दिक्यं भीमं भीमपराक्रमम् । छादयामास सहसा दृष्ट्या मेघ इवाचलम् ॥ ५६ ॥ तद्युद्धं सुमहच्चासीद्घोररूपं परन्तप । यादृशं न मया युद्धं

दृष्टपूर्वं विधास्यति ॥ ५७ ॥ कृतवर्मा ततो राजन्नुत्तमौजसमा-
हवे । हृदि विव्याध सहसा स रथोपस्थ आविशत् ॥ ५८ ॥
सारथिस्तमपोवाह रथेन रथिनां वरम् । कुरुसैन्यं ततः सर्वं
भीमसेनमुपाद्रवत् ॥ ५९ ॥ दुःशासनः सौवलश्च गजानीकेन
पाण्डवम् । महता परिवार्य्यैव क्षुद्रकैरभ्यताडयत् ॥ ६० ॥ ततो
भीमः शरशतैर्दुर्य्योधनममर्षणम् । विमुखीकृत्य तरसा गजा-
नीकमुपाद्रवत् ॥ ६१ ॥ तमापतन्तं सहसा गजानीकं वृकोदरः ।
दृष्ट्वैव सुभृशं क्रुद्धो दिव्यमस्त्रमुदैरयत् । गजैर्गजानभ्यहनद्वज्रे-
णेन्द्र इवासुरान् ॥ ६२ ॥ ततोऽन्तरीक्षं वाणौघैः शलभैरिव
पावकम् । छादयामास समरे गजान्निघ्नन् वृकोदरः ॥ ६३ ॥
ततः कुञ्जरयूथानि समेतानि सहस्रशः । व्यधमत्तरसा भीमो
मेघजालानिवानिलः ॥ ६४ ॥ सुवर्णजालपिहिता मणिजालैश्च
कुञ्जराः । रेजुरभ्यधिकं सङ्ख्ये विद्युत्वन्त इवाम्बुदाः ॥ ६५ ॥
ते वध्यमाना भीमेन गजा राजन् विदुद्रुवुः । केचिद्विभिन्नहृदयाः
कुञ्जरा न्यपतन् भुवि ॥ ६६ ॥ पातितैर्निपतद्भिश्च गजैर्हेमविभू-
षितैः । अशोभत मही तत्र विशीर्णैरिव पर्वतैः ॥ ६७ ॥ दीप्ताभैः
रत्नवद्भिश्च पतितैर्गजयोधिभिः । रराज भूमिः पतितैः क्षीण-
पुण्यैरिव ग्रहैः ॥ ६८ ॥ तत्र भिन्नकटा नागा भिन्नकुम्भकरा-
स्तथा । दुद्रुवुः शतशः सङ्ख्ये भीमसेनशराहताः ॥ ६९ ॥ केचि-
द्वमन्तो रुधिरं भयार्त्ताः पर्वतोपमाः । व्यद्रवन् शरविद्धाङ्गा
धातुचित्रा इवाचलाः ॥ ७० ॥ महाभुजगसङ्काशौ चन्दनागुरु-
रूषितौ । अपश्यन् भीमसेनस्य धनुर्विक्षिपतो भुजौ ॥ ७१ ॥ तस्य
ज्यातलनिर्घोषं श्रुत्वाशनिसमस्वनम् । विमुञ्चन्तः शकृन्मूत्रं गजाः
प्राद्रुद्रुवुर्भृशम् ॥ ७२ ॥ भीमसेनस्य तत् कर्म राजन्नेकस्य धीमतः ।
शिवतः सर्वभूतानि रुद्रस्येव च निर्बभौ ॥ ७३ ॥

इति कर्णपर्वणि संकुलयुद्धे एकषष्टोऽध्यायः ॥ ६१ ॥

सञ्जय उवाच। ततः श्वेताश्वसंयुक्ते नारायणसमाहिते। तिष्ठन्रथवरे श्रीमानर्जुनः समपद्यत ॥ १ ॥ तद्बलं नृपतिश्रेष्ठ तावकं विजयो रणे। व्यक्षोभयदुदीर्णाश्वं महोदधिमिवानिलः ॥ २ ॥ दुर्य्योधनस्तव सुतः प्रमत्ते श्वेतवाहने। अभ्येत्य सहसा क्रुद्धः सैन्यार्द्धेनाभिसंवृतः। पर्य्यवारयदायान्तं युधिष्ठिरममर्षणम् ॥ ३ ॥ क्षुरप्राणां त्रिसप्तत्या ततोऽविध्यत पाण्डवम्। अक्रुध्यत भृशं तत्र कुन्तीपुत्रो युधिष्ठिरः ॥ ४ ॥ स भल्लांस्त्रिंशतस्तूर्णं तव पुत्रे न्यवेशयत्। ततोऽधावन्त कौरव्या जिघृक्षन्तो युधिष्ठिरम् ॥ ५ ॥ दुष्टभावान् परान् ज्ञात्वा समवेता महारथाः। आजग्मुस्तं परीप्सन्तः कुन्तीपुत्रं युधिष्ठिरम् ॥ ६ ॥ नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः। अक्षौहिण्या परिवृतास्तेऽभ्यधावन् युधिष्ठिरम् ॥ ७ ॥ भीमसेनश्च समरे मृद्नंस्तव महारथान्। अभ्यधावदभिप्रेप्सू राजानं शत्रुनिर्ज्जितम् ॥ ८ ॥ तांस्तु सर्वान् महेष्वासान् कर्णो वैकर्त्तनो नृपः। शरवर्षेण महता प्रत्यवारयदागतान् ॥ ९ ॥ शरौघान् विसृजन्तस्ते प्रेरयन्तश्च तोमरान्। न शेकुर्यत्नवन्तोऽपि राधेयं प्रतिवीक्षितुम् ॥ १० ॥ तांश्च सर्वान्महेष्वासान् सर्वशस्त्रास्त्रपारगः। महता शरवर्षेण राधेयः प्रत्यवारयत् ॥ ११ ॥ दुर्य्योधनन्तु विंशत्या शीघ्रमस्त्रमुदीरयन्। अविध्यत्तूर्णमभ्येत्य सहदेवो महामनाः ॥ १२ ॥ स विद्धः सहदेवेन रराजाचलसन्निभः। प्रभिन्न इव मातङ्गो रुधिरेण परिप्लुतः ॥ १३ ॥ दृष्ट्वा तव सुतं तत्र गाढविद्धं सुतेजनैः। अभ्यधावत संक्रुद्धो राधेयो रथिनां वरः ॥ १४ ॥ दुर्य्योधनं तथा दृष्ट्वा शीघ्रमस्त्रमुदीर्य्य सः। तेन यौधिष्ठिरं सैन्यमवधीत् पार्षतं तथा ॥ १५ ॥ ततो यौधिष्ठिरं सैन्यं वध्यमानं महात्मना। सहसा प्राद्रवद्राजन् सूतपुत्रशरार्दितम् ॥ १६ ॥ विविधा, विशिखास्तत्र संपतन्तः परस्परम्। फलैः पुङ्खान् समाजघ्नुः सूतपुत्रधनुश्च्युताः

॥ १७ ॥ अन्तरीचे शरौघाणां पततामु परस्परम् । सङ्घर्षाच्च महाराज पावकः समजायत ॥ १८ ॥ ततो दश दिशः कर्णः शलभैरिव यायिभिः । अभ्यहंसरसा राजन् शरैः परमरीतगैः ॥ १९ ॥ रक्तचन्दनसन्दिग्धौ मणिहेमविभूषितौ । बाहू व्यत्य-चिपत् कर्णः परमास्त्रं विदर्शयन् ॥ २० ॥ ततः सर्वा दिशो राजन् सायकैर्विप्रमोहयन् । अपीडयद्भृशं कर्णो धर्मराजं युधिष्ठिरम् ॥ २१ ॥ ततः क्रुद्धो महाराज धर्मपुत्रो युधिष्ठिरः । निशितैरिषुभिः कर्णं पञ्चाशद्भिः समार्पयत् ॥ २२ ॥ वाणान्ध-कारमभवत्तयुद्धः घोरदर्शनम् । हाहाकारो महानासीत्तावकानां विशाम्पते ॥ २३ ॥ वध्यमाने यथा सैन्ये धर्मपुत्रेण मारिष । सायकैर्विविधैस्तीक्ष्णैः कङ्कपत्रैः शिलाशितैः । भल्लैरनेकैर्विविधैः शत्त्यृष्टिमुषलैरपि ॥ २४ ॥ यत्र यत्र स धर्मात्मा दुष्टां दृष्टिं व्यसर्ज्जयत् । तत्र तत्र व्यशीर्य्यन्त तावका भरतर्षभ ॥ २५ ॥ कर्णोऽपि भृशसंक्रुद्धो धर्मराजं युधिष्ठिरम् । नाराचैरर्द्धचन्द्रैश्च वंसदन्तैश्च संयुगे ॥ २६ ॥ अमर्षी क्रोधनश्चैव रोषप्रस्फुरिता-ननः । सायकैरप्रमेयात्मा युधिष्ठिरमुपाद्रवत् । युधिष्ठिरश्चापि स तं स्वर्णपुङ्खैः शिलाशितैः ॥ २७ ॥ प्रहसन्निव तं कर्णः कङ्क-पत्रैः शिलाशितैः । उरस्यविध्यद्राजानं त्रिभिर्भल्लैश्च पाण्डवम् ॥ २८ ॥ स पीड़ितो भृशं तेन धर्मराजो युधिष्ठिरः । उपविश्य रथोपस्थे सूतं याहीत्यचोदयत् ॥ २९ ॥ प्राक्रोशन्त ततः सर्वे धार्त्तराष्ट्राः सराजकाः । गृह्णीध्वमिति राजानमभ्यधावन्त सर्वशः ॥ ३० ॥ ततः शताः सप्तदश कैकेयानां प्रहारिणाम् । पाञ्चालैः सहिता राजन् धार्त्तराष्ट्रानवारयन् ॥ ३१ ॥ तस्मिंस्तु तुमुले युद्धे वर्त्तमाने महाभये । दुर्य्योधनश्च भीमश्च समेयातां महाबलौ ॥ ३२ ॥

इति कर्णपर्वणि संकुलयुद्धे द्विषष्टोऽध्यायः ॥ ६२ ॥

सञ्जय उवाच। कर्णोऽपि शरजालेन कैकेयानां महारथान्। व्यधमत् परमेष्वासानग्रतः पर्य्यवस्थितान् ॥ १ ॥ स तेषां यतमानानां राधेयस्य निवारणे। रथान् पञ्चशतान् कर्णः प्राहिणोद्यमसादनम् ॥ २ ॥ अविषह्यं ततो दृष्ट्वा राधेयं युधि योधिनः। भीमसेनमुपागच्छन् कर्णबाणप्रपीड़िताः ॥ ३ ॥ रथानीकं विदार्य्यैव शरजालैरनेकधा। कर्ण एकरथेनैव युधिष्ठिरमुपाद्रवत् ॥४॥ सेनानिवेशमार्च्छन्तं मार्गणैः क्षतविक्षतम्। यमयोर्मध्यगं वीरं शनैर्यान्तं विचेतसम् ॥ ५ ॥ समासाद्य तु राजानं दुर्य्योधनहितेप्सया। सूतपुत्त्रस्त्रिभिस्तीक्ष्णैर्विव्याध परमेषुभिः ॥ ६ ॥ तथैव राजा राधेयं प्रत्यविध्यत् स्तनान्तरे। शरैस्त्रिभिश्च यन्तारं चतुर्भिश्चतुरो हयान् ॥ ७ ॥ चक्ररक्षौ तु पार्थस्य माद्रीपुत्त्रौ परन्तपौ। तावप्यधावतां कर्णं राजानं मा वधीदिति ॥ ८ ॥ तौ पृथक् शरवर्षाभ्यां राधेयमभ्यवर्षताम्। नकुलः सहदेवश्च परमं यत्नमास्थितौ ॥ ९ ॥ तथैव तौ प्रत्यविध्यत् सूतपुत्त्रः प्रतापवान्। भल्लाभ्यां शितधाराभ्यां महात्मानावरिन्दमौ ॥ १० ॥ दन्तवर्णांस्तु राधेयो निजघान मनोजवान्। युधिष्ठिरस्य संग्रामे कालवालान् हयोत्तमान् ॥ ११ ॥ ततोऽपरेण भल्लेन शिरस्त्राणमपातयत्। कौन्तेयस्य महेष्वासः प्रहसन्निव सूतजः ॥ १२ ॥ तथैव नकुलस्यापि हयान् हत्वा प्रतापवान्। ईषां धनुश्च चिच्छेद माद्रीपुत्त्रस्य धीमतः ॥ १३ ॥ तौ हताश्वौ हतरथौ पाण्डवौ भृशविक्षतौ। भ्रातरावारुरुहतुः सहदेवरथं तदा ॥ १४ ॥ तौ दृष्ट्वा मातुलस्तत्र विरथौ परवीरहा। अभ्यभाषत राधेयं मद्रराजोऽनुकम्पया ॥ १५ ॥ योद्धव्यमद्य पार्थेन फाल्गुनेन त्वया सह। किमर्थं धर्मराजेन युध्यसे भृशरोषितः ॥ १६ ॥ क्षीणशस्त्रास्त्रकवचः क्षीणबाणो विबाणधिः। श्रान्तसारथिवाहश्च छन्नोऽस्त्रैररिभिस्त्वया। पार्थमासाद्य राधेय उपहास्यो भविष्यसि ॥ १७ ॥

एवमुक्तोऽपि कर्णस्तु मद्रराजेन संयुगे। तथैव कर्णः संरब्धो युधिष्ठिरमताड़यत् ॥ १८ ॥ शरैस्तीक्ष्णैः पराविध्य माद्रीपुत्रौ च पाण्डवौ। प्रहस्य समरे कर्णश्चकार विमुखं शरैः ॥ १९ ॥ ततः शल्यः प्रहस्येदं कर्णं पुनरुवाच ह। रथस्थमतिसंरब्धं युधिष्ठिर-वधे धृतम् ॥ २० ॥ यदर्थं धार्त्तराष्ट्रेण सततं मानितो भवान्॥ तं पार्थं जहि राधेय किन्ते हत्वा युधिष्ठिरम् ॥ २१ ॥ शङ्खयो-र्ध्मातयोः शब्दः सुमहानेष कृष्णयोः। श्रूयते चापघोषोऽयं प्रावृ-षीवाम्बुदस्य ह ॥ २२ ॥ असौ निघ्नन्रथोदारानर्जुनः शरवृष्टिभिः। सर्व्वां ग्रसति नः सेनां कर्ण पश्यैनमाहवे ॥ २३ ॥ पृष्ठरक्षौ च शूरस्य युधामन्यूत्तमौजसौ। उत्तरञ्चास्य वै शूरश्चक्रं रक्षति सात्यकिः ॥ २४ ॥ धृष्टद्युम्नस्तथा चास्य चक्रं रक्षति दक्षिणम्। भीमसेनस्तु वै राज्ञा धार्त्तराष्ट्रेण युध्यते ॥ २५ ॥ यथा न हन्यात्तं भीमः सर्व्वेषां नोऽद्य पश्यताम्। तथा राधेय क्रियतां राजा मुच्येत नो यथा ॥ २६ ॥ पश्यैनं भीमसेनेन ग्रस्तमाहव-शोभिना। यदि त्वासाद्य मुच्येत विस्मयः सुमहान् भवेत् ॥ २७ ॥ परित्राह्येनमभ्येत्य संशयं परमं गतम्। किन्नु माद्रीसुतौ हत्वा राजानं वा युधिष्ठिरम् ॥ २८ ॥ इति शल्यवचः श्रुत्वा राधेयः पृथिवीपते। दृष्ट्वा दुर्य्योधनञ्चैव भीमग्रस्तं महाहवे ॥ २९ ॥ राजगृद्धी भृशञ्चैव शल्यवाक्यप्रचोदितः। अजातशत्रुमुत्सृज्य माद्री-पुत्रौ च पाण्डवौ ॥ ३० ॥ तव पुत्रं परित्रातुमभ्यधावत वीर्य्य-वान्। मद्रराजप्रणुदितैरश्वैराकाशगैरिव ॥ ३१ ॥ गते कर्णे तु कौन्तेयः पाण्डुपुत्रो युधिष्ठिरः। अपायाज्जवनैरश्वैः सहदेवस्य मारिष ॥ ३२ ॥ ताभ्यां स सहितस्तूर्णं व्रीड़न्निव नरेश्वरः। प्राप्य सेनानिवेशञ्च मार्गणैः क्षतविक्षतः ॥ ३३ ॥ अवतीर्णो रथा-त्तूर्णमाविशच्छयनं शुभम्। अपनीतशल्यः सुभृशं हृच्छल्याभि-निपीड़ितः ॥ ३४ ॥ सोऽब्रवीद्भ्रातरौ राजा माद्रीपुत्रौ महारथौ

अनीकं भीमसेनस्य पाण्डवावाशु गच्छताम् ॥ ३५ ॥ जीमूत इव नर्दंस्तु युध्यते स वृकोदरः ॥ ३६ ॥ ततोऽन्यं रथमास्थाय नकुलो रथपुङ्गवः। सहदेवश्च तेजस्वी भ्रातरौ यत्र कर्षणौ ॥ ३७॥ तुरगैरग्र्यरंहोभिर्यात्वा भीमस्य युध्मिणौ। अनीकं सहितौ तत्र भ्रातरौ पर्य्यवस्थितौ ॥ ३८ ॥

इति कर्णपर्वणि युधिष्ठिरापयाने त्रिषष्टोऽध्यायः ॥ ६३ ॥

---

सञ्जय उवाच। द्रौणिस्तु रथवंशेन महता परिवारितः। आपतत् सहसा राजन् यत्र पार्थो व्यवस्थितः॥ १ ॥ तमापतन्तं सहसा शूरः शौरिसहायवान्। दधार सहसा पार्थो वेलेव मकरालयम् ॥ २ ॥ ततः क्रुद्धो महाराज द्रोणपुत्रः प्रतापवान्। अर्जुनं वासुदेवञ्च छादयामास सायकैः ॥ ३ ॥ अवच्छन्नौ ततः कृष्णौ दृष्ट्वा तत्र महारथाः विस्मयं परमं गत्वा प्रैक्षन्त कुरव-स्तथा ॥ ४ ॥ अर्जुनस्तु ततो दिव्यमस्त्रं चक्रे हसन्निव। तदस्त्रं ब्राह्मणो युद्धे वारयामास भारत ॥ ५ ॥ यद्यद्धि व्याक्षिपद्युद्धे पाण्डवोऽस्त्रं जिघांसया। तत्तदस्त्रं महेष्वासो द्रोणपुत्रो व्यघा-तयत् ॥ ६ ॥ अस्त्रयुद्धे ततो राजन् वर्त्तमाने भयावहे। अपश्याम रणे द्रौणिं व्यात्ताननमिवान्तकम् ॥ ७ ॥ स दिशः प्रदिशश्चैव छादयित्वा त्वजिह्मगैः। वासुदेवं त्रिभिर्बाणैरविध्यद्दक्षिणे भुजे ॥ ८ ॥ ततोऽर्जुनो हयान् हत्वा सर्वांस्तस्य महात्मनः। चकार समरे भूमिं शोणितौघतरङ्गिणीम्। सर्वप्राणिवहां रौद्रां पर-लोकवहां नदीम् ॥ ९ ॥ रथाग्रथिनः सर्वान् पार्थचापच्युतैः शरैः। द्रौणेरपहृतान् सर्वे ददृशुः न च तांस्तथा। प्रावर्त्तय-न्महाघोरां नदीं परवहां तदा ॥१०॥ तयोस्तु व्याकुले युद्धे द्रौणेः पार्थस्य दारुणे। अमर्य्यादं योधयन्तः पर्य्यधावन्नितस्ततः॥ ११॥

रथैर्हताश्वसूतैश्च हतारोहैश्च वाजिभिः । द्विरदैश्च हतारोहै-
र्महामात्रैर्हतद्विपैः। पार्थेन समरे राजन् कृतो घोरो जनक्षयः
॥ १२ ॥ निहता रथिनः पेतुः पार्थचापच्युतैः शरैः। हयाश्च
पर्य्यधावन्त मुक्तयोक्त्रास्ततस्ततः ॥ १३ ॥ तद्दृष्ट्वा कर्म पार्थस्य
द्रौणिराहवशोभिनः। अर्जुनं जयतां श्रेष्ठं त्वरितोऽभ्येत्य वीर्य्य-
वान् ॥ १४ ॥ विधुन्वानो महच्चापं कार्त्तस्वरविभूषितम्। अवा-
किरत्ततो द्रौणिः समन्तान्निशितैः शरैः ॥ १५ ॥ भूयोऽर्जुनं
महाराज द्रौणिरायम्य पत्रिणा। वक्षोदेशे पृषत्केन ताड़या-
मास निर्द्दयम् ॥ १६ ॥ सोऽतिविद्धो रणे तेन द्रोणपुत्रेण भारत।
गाण्डीवधन्वा प्रसभं शरवर्षैरुदारधीः। संछाद्य समरे द्रौणिं
चिच्छेदास्य च कार्मुकम् ॥ १७ ॥ स छिन्नधन्वा परिघं वज्रस्पर्श-
समं युधि। आदाय चिक्षेप तदा द्रोणपुत्रः किरीटिने ॥ ॥ १८ ॥
तमापतन्तं परिघं जाम्बूनदपरिष्कृतम्। चिच्छेद सहसा राजन्
प्रहसन्निव पाण्डवः ॥ १९ ॥ स पपात तदा भूमौ निकृत्तः पार्थ-
सायकैः। विकीर्णः पर्व्वतो राजन् यथा वज्रेण ताड़ितः ॥ २० ॥
ततः क्रुद्धो महाराज द्रोणपुत्रो महारथः। ऐन्द्रेण चास्त्रवेगेन
वीभत्सुं समवाकिरत् ॥ २१ ॥ तस्येन्द्रजालावततं समीक्ष्य पार्थो
राजन् गाण्डिवमाददानः। ऐन्द्रं जालं प्रत्यहनत्तरस्वी वरास्त्र-
मादाय महेन्द्रसृष्टम ॥ २२ ॥ विदार्य्य तज्जालमहेन्द्रयुक्तं पार्थ-
स्ततो द्रौणिरथं क्षणेन। प्राच्छादयामास तथाभ्युपेत्य द्रौणि-
स्तथा पार्थशराभिभूतः ॥ २३ ॥ विगाह्य तां पाण्डववाणवृष्टिं
शरैः परं नाम ततः प्रकाश्य। शतेन कृष्णं सहसाभ्यविध्यत्त्रिभिः
शतैरर्जुनं क्षुद्रकाणाम् ॥ २४ ॥ ततोऽर्जुनः सायकानां शतेन गुरोः
सुतं मर्म्मसु निर्बिभेद। अश्वांश्च सूतञ्च तथा धनुर्ज्यामवाकिरत्
पश्यतां तावकानाम् ॥ २५ ॥ स विद्ध्वा मर्म्मसु द्रौणिं पाण्डवः पर-
वीरहा। सारथिञ्चास्य भल्लेन रथनीड़ादपातयत् ॥ २६ ॥ स

संयच्छ स्वयं वाहान् कृष्णो प्राच्छादयच्छरैः । ततोऽद्भुततमपश्याम
द्रौणेराशुपराक्रमम् ॥ २७ ॥ प्रायच्छत्तुरगान् यच्च फाल्गुनं
चाप्ययोधयत् । तदस्य समरे राजन् सर्वे योधा ह्यपूजयन् ॥२८॥
ततः प्रहस्य बीभत्सुर्द्रौणपुत्रस्य संयुगे । क्षिप्रं रश्मीनथाश्वानां
क्षुरप्रैश्चिच्छिदे जयः ॥ २९ ॥ प्राद्रवंस्तुरगास्ते तु शरवेगप्रपी-
ड़िताः । ततोऽभून्निनदो घोरस्तव सैन्यस्य भारत ॥ ३० ॥ पाण्ड-
वास्तु जयं लब्ध्वा तव सैन्यं समाद्रवन् । समन्तान्निशितान् बाणान्
विमुञ्चन्तो जयैषिणः ॥ ३१ ॥ पाण्डवैस्तु महाराज धार्त्तराष्ट्री
महाचमूः । पुनः पुनरथो वीरैरभज्जि जितकाशिभिः ॥ ३२ ॥
पश्यतां ते महाराज पुत्राणां चित्रयोधिनाम् । शकुनेः सौवलेयस्य
कर्णस्य च विशाम्पते ॥ ३३ ॥ वार्य्यमाणा महासेना पुत्रैस्तव
जनेश्वर । नावातिष्ठत संग्रामे पीड्यमाना समन्ततः ॥ ३४ ॥
ततो योधैर्महाराज पलायद्भिः समन्ततः । अभवद्व्याकुलं भीतं
पुत्राणां ते महद्बलम् ॥ ३५ ॥ तिष्ठ तिष्ठेति च ततः सूतपुत्रस्य
जल्पतः । नावातिष्ठत सा सेना वध्यमाना महात्मभिः ॥ ३६ ॥
तथोत्क्रुष्टं महाराज पाण्डवैर्जितकाशिभिः । धार्त्तराष्ट्रबलं
दृष्ट्वा विद्रुतं वै समन्ततः ॥ ३७ ॥ ततो दुर्य्योधनः कर्णमब्रवीत्
प्रणयादिव । पश्य कर्ण यथा सेना पाण्डवैरर्द्दिता भृशम् ॥ ३८ ॥
त्वयि तिष्ठति संग्रामात् पलायनपरायणा । एतज्ज्ञात्वा महा-
बाहो कुरु प्राप्तमरिन्दम ॥ ३९ ॥ सहस्राणि च योधानां त्वामेव
पुरुषोत्तम । क्रोशन्ति समरे वीर द्राव्यमाणानि पाण्डवैः ॥ ४० ॥
एतच्छ्रुत्वा तु राधेयो दुर्य्योधनवचो महत् । मद्रराजमिदं वाक्य-
मब्रवीत् प्रहसन्निव ॥ ४१ ॥ पश्य मे भुजयोर्वीर्य्यमस्त्राणाञ्च जने-
श्वर । अद्य हन्मि रणे सर्वान् पाञ्चालान् पाण्डुभिः सह ।
वाहयाश्वान्नरव्याघ्र भद्रेणैव न संशयः ॥ ४२ ॥ एवमुक्त्वा महा-
राज सूतपुत्रः प्रतापवान् । प्रगृह्य विजयं वीरो धनुःश्रेष्ठं पुरा-

तनम् ॥ ४३ ॥ सज्यं कृत्वा महाराज संमृज्य च पुनः पुनः। संनिवार्य्य च योधान् स सत्येन शपथेन च। प्रायोजयदमेयात्मा भार्गवास्त्रं महाबलः ॥ ४४ ॥ ततो राजन् सहस्राणि प्रयुता-न्यर्बुदानि च। कोटिशश्च शरास्तीक्ष्णा निरगच्छन्महामृधे ॥ ४५ ॥ ज्वलितैस्तैः शरैर्घोरैः कङ्कबर्हिणवाजितैः। संछन्ना पाण्डवी सेना न प्राज्ञायत किञ्चन ॥ ४६ ॥ हाहाकारो महानासीत् पाञ्चा-लानां विशाम्पते। पीड़ितानां बलवता भार्गवास्त्रेण संयुगे ॥४७॥ निपतद्भिर्गजै राजन्नश्वैश्चापि सहस्रशः। रथैश्चापि महाराज नरैश्चापि समन्ततः ॥ ४८ ॥ प्राकम्पत मही राजन्निहतैस्तैस्तत-स्ततः। व्याकुलं सर्वमभवत् पाण्डवानां महद्बलम् ॥ ४९ ॥ कर्ण-स्त्वेको युधां श्रेष्ठो विधूम इव पावकः। दहन् शत्रून् नरव्याघ्रः शुशुभे स परन्तपः ॥ ५० ॥ ते वध्यमानाः कर्णेन पाञ्चालाश्चेदिभिः सह। तत्र तत्र व्यमुह्यन्त वनदाहे यथा द्विपाः। चुक्रुशुश्च नर-व्याघ्र यथा व्याघ्रा नरोत्तमाः ॥ ५१ ॥ तेषान्तु क्रोशतामासी-द्भीतानां रणमूर्द्धनि। धावताञ्च दिशो राजंस्त्रस्तानाञ्च समन्ततः। आर्त्तनादो महांस्तत्र भूतानामिव संप्लवे ॥ ५२ ॥ वध्यमानांस्तु तान् दृष्ट्वा सूतपुत्रेण मारिष। वित्रेसुः सर्वभूतानि तिर्य्यग्योनि-गतान्यपि ॥ ५३ ॥ ते वध्यमानाः समरे सूतपुत्रेण सृञ्जयाः। अर्जुनं वासुदेवञ्च क्रोशन्ति स्म मुहुर्मुहुः। प्रेतराजपुरे यद्वत् प्रेतराजं विचेतसः ॥ ५४ ॥ श्रुत्वा तु निनदं तेषां वध्यतां कर्ण-सायकैः। अथाब्रवीद्वासुदेवं कुन्तीपुत्रो धनञ्जयः। भार्गवास्त्रं महाघोरं दृष्ट्वा तत्र समीरितम् ॥ ५५ ॥ पश्य कृष्ण महाबाहो भार्गवास्त्रस्य विक्रमम्। नैतदस्त्रं हि समरे शक्यं हन्तुं कथ-ञ्चन ॥ ५६ ॥ सूतपुत्रञ्च संरब्धं पश्य कृष्ण महारणे। अन्तक-प्रतिमं वीर्य्ये कुर्व्वाणं कर्म दारुणम् ॥ ५७ ॥ अभीक्ष्णं चोदय-न्नश्वान् प्रेक्षते मां मुहुर्मुहुः। न च पश्यामि समरे कर्णस्य

प्रपलायितुम् ॥ ५८ ॥ जीवन् प्राप्नोति पुरुषः सङ्ख्ये जयपराजयौ । मृतस्य तु हृषीकेश वध एव कुतोऽजयः ॥ ५९ ॥ एवमुक्तस्तु पार्थेन कृष्णो मतिमतांवरम् । धनञ्जयमुवाचेदं प्राप्तकालमरिन्दमः ॥ ६० ॥ कर्णेन हि दृढं राजा कुन्तीपुत्रः परिक्षतः । तं दृष्ट्वाश्वास्य च पुनः कर्णं पार्थ वधिष्यसि ॥ ६१ ॥ ततो जनार्द्दनः प्रायात् द्रष्टुमिच्छन् युधिष्ठिरम् । श्रमेण ग्राहयिष्यंश्च कर्णं युद्धे विशाम्पते ॥ ६२ ॥ ततो धनञ्जयो द्रष्टुं राजानं बाणपीड़ितम् । रथेन प्रययौ क्षिप्रं संग्रामात् केशवाज्ञया ॥ ६३ ॥ गच्छन्नेव तु कौन्तेयो धर्मराजदिदृक्षया । सैन्यमालोकयामास नापश्यत्तत्र चाग्रजम् ॥ ६४ ॥ युद्धं कृत्वा तु कौन्तेयो द्रोणपुत्रेण भारत । दुःसहं वज्रिणा सङ्ख्ये पराजित्य गुरोः सुतम् ॥ ६५ ॥

इति कर्णपर्वणि संकुलयुद्धे चतुःषष्टोऽध्यायः ॥ ६४ ॥

---

सञ्जय उवाच । द्रौणिं पराजित्य ततोऽग्रधन्वा कृत्वा महद्दुष्करं शूरकर्म । आलोकयामास ततः स्वसैन्यं धनञ्जयः शत्रुभिरप्रधृष्यः ॥ १ ॥ स युध्यमानान् पृतनामुखस्थान् योधान् शूरो हर्षयन् सव्यसाची । पूर्वावदानैः प्रथितैः प्रशस्य स्थिरांश्चकार रथाननीके ॥ २ ॥ अपश्यमानन्तु किरीटमाली युधिष्ठिरं भ्रातरमाजमीढ़म् । उवाच भीमं तरसाभ्युपेत्य राज्ञः प्रवृत्तिं वद कुत्र राजा ॥ ३ ॥

भीम उवाच । अपयात इतो राजा धर्मराजो युधिष्ठिरः । कर्णवाणाभितप्ताङ्गो यदि जीवेत् कथञ्चन ॥ ४ ॥

अर्जुन उवाच । तस्माद्भवान् शीघ्रमितः प्रयातु राज्ञः प्रवृत्त्यै कुरुसत्तमस्य । नूनं स विद्धोऽतिभृशं पृषत्कैः कर्णेन राजा शिविरं गतोऽसौ ॥ ५ ॥ यः संप्रहारे निशितैः पृषत्कैर्द्रौणेन विद्धोऽति-

भृशं तरस्वी। तस्थौ स तत्रापि जयप्रतीक्षो द्रोणोऽपि यावन्न हतः किलासीत् ॥ ६ ॥ स संशयं गमितः पाण्डवाग्र्यः कर्णेन सङ्ग्रामे महानुभावः। ज्ञातुं प्रयास्याशु ततस्त्व भीम स्थास्याम्यहं शत्रुगणान्निरुध्य ॥ ७ ॥

भीम उवाच। त्वमेव जानीहि महानुभाव राज्ञः प्रवृत्तिं भरतर्षभस्य। अहं हि यद्यर्जुन यामि तत्र वक्ष्यन्ति मां भीत इति प्रवीराः ॥ ८ ॥ ततोऽब्रवीदर्जुनो भीमसेनं संशप्तकाः प्रत्यनीकस्थिता मे। एतानहत्वा तु मया न शक्यमितोऽपयातुं रिपुसङ्घगोष्ठात् ॥ ९ ॥ अथाब्रवीदर्जुनं भीमसेनः स्ववीर्य्यमास्थाय कुरुप्रवीर। संशप्तकान् प्रतियोत्स्यामि संख्ये सर्व्वानहं याहि धनञ्जय त्वम् ॥ १० ॥

सञ्जय उवाच॥ तद्भीमसेनस्य वचो निशम्य सुदुर्व्वचं भ्रातुरमित्रमध्ये। द्रष्टुं कुरुश्रेष्ठमभिप्रयास्यन् प्रोवाच वृष्णिप्रवरं तदानीम् ॥ ११ ॥

अर्जुन उवाच। चोदयाश्वान् हृषीकेश विहायैतद्बलार्णवम्। अजातशत्रुं राजानं द्रष्टुमिच्छामि केशव ॥ १२ ॥

सञ्जय उवाच। ततो हयान् सर्व्वदाशार्हमुख्यः प्रचोदयन् भीममुवाच चेदम्। नैतच्चित्रं तव कर्माद्य भीम यास्याम्यहं जहि पार्थारिसङ्घान् ॥ १३ ॥ ततो ययौ हृषीकेश यत्र यत्र राजा युधिष्ठिरः। शीघ्राच्छीघ्रतरं राजन् वाजिभिर्गरुड़ोपमैः ॥ १४ ॥ प्रत्यनीके व्यवस्थाप्य भीमसेनमरिन्दमम्। सन्दिश्य चैनं राजेन्द्र युद्धं प्रति वृकोदरम् ॥ १५ ॥ ततस्तु गत्वा पुरुषप्रवीरौ राजानमासाद्य शयानमेकम्। रथादुभौ प्रत्यवरुह्य तस्मादवन्दतुर्धर्म्मराजस्य पादौ ॥ १६ ॥ तं दृष्ट्वा पुरुषव्याघ्रं चैमिषं पुरुषर्षभम्। मुदाभ्युपगतौ कृष्णावश्विनाविव वासवम् ॥ १७ ॥ तावभ्यनन्दद्राजापि विवस्वानश्विनाविव। हते महासुरे जम्भे शक्रविष्णू

यथा गुरुः ॥ १८ ॥ मन्यमानो हतं कर्णं धर्मराजो युधिष्ठिरः ।
हर्षगद्गदया वाचा प्रीतः प्राह परन्तपः ॥ १९ ॥

इति कर्णपर्वणि अर्जुनस्य युधिष्ठिरसमीपगमने
पञ्चषष्टोऽध्यायः ॥ ६५ ॥

---

युधिष्ठिर उवाच । स्वागतं देवकीमातः स्वागतं ते धनञ्जय । प्रियं मे दर्शनं गाढं युवयोरच्युतार्जुनौ ॥ १ ॥ अक्षताभ्यामरिष्टाभ्यां हतः कर्णो महारथः ॥ २ ॥ आशीविषसमं युद्धे सर्वशस्त्रविशारदम् । अग्रगं धार्त्तराष्ट्राणां सर्वेषां शर्म वर्म च ॥ ३ ॥ रक्षितं वृषसेनेन सुषेणेन च धन्विना । अनुज्ञातं महावीर्य्यं रामेणास्त्रे सुदुर्ज्जयम् ॥ ४॥ मुख्यं सर्वस्य लोकस्य रथिनं लोकविश्रुतम् । त्रातारं धार्त्तराष्ट्राणां गन्तारं वाहिनीमुखे ॥ ५ ॥ हन्तारं परसैन्यानाममित्रगणमर्द्दनम् । दुर्य्योधनहिते युक्तमस्मद्दुःखाय चोद्यतम् ॥ ६ ॥ अप्रधृष्यं महायुद्धे देवैरपि सवासवैः । अनलानिलयोस्तुल्यं तेजसा च बलेन च ॥ ७ ॥ पातालमिव गम्भीरं सुहृदां नन्दिवर्द्धनम् । अन्तकाभममित्राणां श्रुत्वा कर्णं महाहवे । दिष्ट्या युवामनुप्राप्तौ जित्वासुरमिवामरौ ॥ ८ ॥ घोरं युद्धमदीनेन मया ह्यद्याच्युतार्जुनौ । कृतं तेनान्तकेनेव प्रजाः सर्वा जिघांसता ॥ ९ ॥ तेन केतुश्च मे छिन्नो निहतौ पार्ष्णिसारथी । हतवाहस्ततश्चास्मि युयुधानस्य पश्यतः ॥ १० ॥ धृष्टद्युम्नस्य यमयोर्वीरस्य च शिखण्डिनः । पश्यतां द्रौपदेयानां पाञ्चालानाञ्च सर्वशः ॥ ११ ॥ एतान् जित्वा महावीर्य्यः कर्णः शत्रुगणान् बहून् । जितवान् मां महाबाहो यतमानं महारणे ॥ १२ ॥ अभिसृत्य च मां युद्धे परुषाण्युक्तवान् बहु । तत्र तत्र युधांश्रेष्ठः परिभूय न संशयः ॥ १३ ॥ भीमसेनप्रभावात्तु यज्जी-

वामि धनञ्जय । बहुनात्र किमुक्तेन नाहं तत् सोढ़ुमुत्सहे ॥ १४ ॥ त्रयोदशाहं वर्षाणि यस्माद्भीतो धनञ्जय । न स्म निद्रां लभे रात्रौ न चाहनि सुखं क्वचित् ॥ १५ ॥ तस्य द्वेषेण संयुक्तः परिदह्ये धनञ्जय । आत्मनो मरणे यातो वार्द्धीणस इव द्विजः ॥१६ ॥ तस्यायमगमत् कालश्चिन्तयानस्य मे चिरम् । कथं कर्णो मया शक्यो युद्धे क्षययितुं भवेत् ॥ १७ ॥ जाग्रत् स्वपंश्च कौन्तेय कर्णमेव सदा ह्यहम् । पश्यामि तत्र तत्रैव कर्णभूतमिदं जगत् ॥ १८ ॥ यत्र यत्र हि गच्छामि कर्णाद्भीतो धनञ्जय । तत्र तत्र हि पश्यामि कर्णमेवाग्रतः स्थितम् ॥ १९ ॥ सोऽहं तेनैव वीरेण समरेष्वपलायिना । सहयः सरथः पार्थ जित्वा जीवन् विसर्जितः ॥ २० ॥ को नु मे जीवितेनार्थो राज्येनार्थो भवेत् पुनः । ममैवं धिक्कृतस्याद्य कर्णेनाहवशोभिना ॥ २१ ॥ न प्राप्तपूर्वं यद्भीष्मात् कृपाद्द्रोणाच्च संयुगे । तत् प्राप्तमद्य मे युद्धे सूतपुत्रान्महारथात् ॥ २२ ॥ स त्वां पृच्छामि कौन्तेय यथाद्य कुशलन्तथा । तन्ममाचक्ष्व कार्त्स्न्येन यथा कर्णो हतस्त्वया ॥ २३ ॥ शक्रतुल्यबलो युद्धे यमतुल्यः पराक्रमे । रामतुल्यस्तथास्त्रेण स कथं वै निसूदितः ॥ २४ ॥ महारथः समाख्यातः सर्वयुद्धविशारदः । धनुर्द्धराणांप्रवरः सर्वेषामेकपूरुषः ॥ २५ ॥ पूजितो धृतराष्ट्रेण सपुत्रेण विशाम्पते । त्वदर्थमेव राधेयः स कथं निहतस्त्वया ॥ २६ ॥ धार्त्तराष्ट्रो हि युद्धेषु सर्वेष्वेव सदार्जुन । तव मृत्युं रणे कर्णं मन्यते पुरुषर्षभ ॥ २७ ॥ स त्वया पुरुषव्याघ्र कथं युद्धे निसूदितः । तन्ममाचक्ष्व कौन्तेय यथा कर्णो हतस्त्वया ॥ २८ ॥ युध्यमानस्य च शिरः पश्यतां सुहृदां हृतम् । त्वया पुरुषशार्दूल शार्दूलेन यथा रुरुः ॥ २९ ॥ यः पर्य्युपासीत् प्रदिशो दिशश्च त्वां सूतपुत्रः समरे परीप्सन् । दित्सुः कर्णः समरे हस्तिषड्गवं स इदानीं कङ्कपत्रैः सुतीक्ष्णैः । त्वया-

रणे निहतः सूतपुत्रः कच्चिच्छेते भूमितले दुरात्मा ॥ ३० ॥ प्रियस्त्र
मे परमो वै कृतोऽयं त्वया रणे सूतपुत्रं निहत्य ॥ ३१ ॥ यः
सर्वतः पर्यपतत्त्वदर्थे मदान्वितो गर्वितः सूतपुत्रः । स शूरमानी
समरे समेत्य कच्चित्त्वया निहतः संयुगेऽसौ ॥ ३२ ॥ रौक्मं वरं
हस्तिगवाश्वयुक्तं रथं प्रदित्सुर्यः परेभ्यस्त्वदर्थे । सदा रणे स्पर्द्धते
यः स पापः कच्चित्त्वया निहतस्तात युद्धे ॥ ३३ ॥ योऽसौ सदा
शूरमदेन मत्तो विकत्थते संसदि कौरवाणाम् । प्रियोऽत्यर्थं तस्य
सुयोधनस्य कच्चित् स पापो निहतस्त्वयाद्य ॥३४॥ कच्चित् समागम्य
धनुःप्रयुक्तैस्त्वत्प्रेरितैर्लोहिताङ्गैर्विहङ्गैः । शेते स पापः सुविभिन्न-
गात्रः कच्चिद्भग्नौ धार्त्तराष्ट्रस्य बाहू ॥ ३५ ॥ योऽसौ सदा श्लाघते
राजमध्ये दुर्य्योधनं हर्षयन् दर्पपूर्णः । अहं हन्ता फाल्गुनस्येति
मोहात् कच्चिद्वचस्तस्य न वै तथा तत् ॥ ३६ ॥ नाहं पादौ धाव-
यिष्ये कदाचित् यावत् स्थितः पार्थ इत्यल्पबुद्धेः । व्रतं यस्यैतत्
सर्वदा शक्रसूनो कच्चित्त्वया निहतः सोऽद्य कर्णः ॥ ३७ ॥ योऽसौ
कृष्णामब्रवीद्दुष्टबुद्धिः कर्णः सभायां कुरुवीरमध्ये । किं पाण्ड-
वांस्त्वं न जहासि कृष्णे सुदुर्बलान् पतितान् हीनसत्त्वान् ॥ ३८ ॥
योऽसौ कर्णः प्रत्यजानात्त्वदर्थे नाहत्वाहं सह कृष्णेन पार्थम् ।
इहोपयातेति स पापबुद्धिः कच्चिच्छेते शरसंभिन्नगात्रः ॥ ३९ ॥
कच्चित् संग्रामो विहितो वै तवायं समागमे सृञ्जयकौरवाणाम् ।
यत्रावस्थामीदृशीं प्रापितोऽहं कच्चित्त्वया सोऽद्य हतः समेत्य ॥४०॥
कच्चित्त्वया तस्य सुमन्दबुद्धेर्गाण्डीवमुक्तैर्विशिखैर्ज्वलद्भिः । स-
कुण्डलं भानुमदुत्तमाङ्गं कायात् प्रकृत्तं युधि सव्यसाचिन् ॥ ४१ ॥
यत्तन्मया बाणसमर्पितेन ध्यातोऽसि कर्णस्य वधाय वीर । तन्मे
त्वया कच्चिदमोघमद्य ध्यानं कृतं कर्णनिपातनेन ॥ ४२ ॥ यद्दर्प-
पूर्णः स सुयोधनोऽस्मानुदीक्षते कर्णसमाश्रयेण । कच्चित्त्वया
सोऽद्य समाश्रयोऽस्य भग्नः पराक्रम्य सुयोधनस्य ॥ ४३ ॥ यो

नः पुरा षण्ढतिलानबोचत् सभामध्ये कौरवाणां समक्षम् । स दुर्मतिः कच्चिदुपेत्य संख्ये त्वया हतः सूतपुत्रोऽत्यमर्षी ॥ ४४ ॥ यः सूतपुत्रः प्रहसन् दुरात्मा पुराऽब्रवीत् निर्जितां सौबलेन । स्वयं प्रसह्यानय याज्ञसेनीमपीह कच्चित् स हतस्त्वयाऽद्य ॥ ४५ ॥ यः शस्त्रभृच्छ्रेष्ठतमं पृथिव्यां पितामहं व्याक्षिपदल्पचेताः । संख्यायमानोऽर्द्धरथः स कच्चित्त्वया हतो ह्यधिरथिर्महात्मन् ॥ ४६ ॥ अमर्षजं निकृतिसमीरणेरितं हृदि स्थितं ज्वलनमिमं सदा मम । हते मया सोऽद्य समेत्य कर्ण इति ब्रुवन् प्रशमय मेऽद्य फाल्गुन ॥ ४७ ॥ ब्रवीहि मे दुर्लभमेतदद्य कथं त्वया निहतः सूतपुत्रः । अनुध्यायै त्वां सततं प्रवीरं वृत्रे हते सौ भगवानिवेन्द्रम् ॥ ४८ ॥

इति कर्णपर्वणि युधिष्ठिरवाक्ये षट्षष्टोऽध्यायः ॥ ६६ ॥

---

सञ्जय उवाच । तद्धर्मशीलस्य वचो निशम्य राज्ञः क्रुद्धस्यातिरथो महात्मा । उवाच दुर्द्धर्षमदीनसत्त्वं युधिष्ठिरं जिष्णुरनन्तवीर्य्यः ॥ १ ॥

अर्जुन उवाच । संशप्तकैर्युध्यमानस्य मेऽद्य सेनाग्रयायी कुरुसैन्यराज्ञः । आशीविषाभान् खगमान् प्रमुञ्चन् द्रौणिः पुरस्तात् सहसाभ्यतिष्ठत् ॥ २ ॥ दृष्ट्वा रथं मेघरवं ममैव समस्तसेना च रणेभ्यतिष्ठत् । तेषामहं पञ्च शतानि हत्वा ततो द्रौणिमगमं पार्थिवाग्र्य ॥ ३ ॥ स मां समासाद्य नरेन्द्र यत्तः समभ्ययात् सिंहमिव द्विपेन्द्रः । अकार्षीच्च रथिनामुज्जिहीर्षां महाराज वध्यतां कौरवाणाम ॥ ४ ॥ ततो रणे भारत दुष्प्रकम्प आचार्य्यपुत्रः प्रवरः कुरूणाम् । मामर्द्दयामास शितैः पृषत्कैर्ज्जनार्द्दनञ्चैव विषाग्निकल्पैः ॥ ५ ॥ अष्टौ गवामष्टशतानि बाणान् मया प्रयुद्धस्य वहन्ति तस्य । तांस्तेन मुक्तानहमस्य बाणैर्व्यध्वं सयं

वायुरिवाभ्रजालम् ॥ ६ ॥ ततोऽपरान् वाणसङ्घाननेकानाकर्ण-
पूर्णायतविप्रमुक्तान्। स सर्ज्ज शिक्षास्त्रबलप्रयत्नैस्तथा यथा प्रावृषि
कालमेघः ॥ ७ ॥ नैवाददानं न च संदधानं जानीमहे कतरे-
णास्यतीति। वामेन वा यदि वा दक्षिणेन स द्रोणपुत्रः समरे
पर्य्यवर्त्तत् ॥ ८ ॥ तस्याततं मण्डलमेव सव्यं प्रदृश्यते कार्मुकं द्रोण-
सूनोः। सोऽविध्यन्मां पञ्चभिर्द्रोणपुत्रः शितैः शरैः पञ्चभिर्वासु-
देवम् ॥ ९ ॥ अहन्तु तं त्रिंशता वज्रकल्पैः समार्द्दयं निमिष-
स्यान्तरेण। क्षणात् श्वावित्समरूपो बभूव समार्द्दितो मद्विसृष्टैः
पृषत्कैः ॥ १० ॥ स विक्षरन् रुधिरं सर्वगात्रै रथानीकं सूतसूनो-
र्विवेश। मयाभिभूतान् सैनिकानां प्रवर्हानसौ प्रपश्यन् रुधिर-
प्रदिग्धान् ॥ ११ ॥ ततोऽभिभूतं युधि वीक्ष्य सैन्यं विवस्तयोधं
द्रुतवाजिनागम्। पञ्चाशता रथमुख्यैः समेत्य कर्णस्त्वरमाणमु-
पायात् प्रमाथी। तान् सूदयित्वाहमपास्य कर्णं द्रष्टुं भवन्तं
त्वरयाभियातः ॥ १२ ॥ सर्वे पाञ्चाला ह्युद्विजन्ते स्म कर्णाद्गन्धा-
द्गावः केशरिणो यथैव। मृत्योरास्यं व्यात्तमिवाभ्यपद्यन् प्रभ-
द्रकाः कर्णमासाद्य राजन् ॥ १३ ॥ रथांस्तु तान् सप्तशतान्निमग्नां-
स्तदा कर्णः प्राहिणोन्मृत्युसद्म। न चाप्यभूत् क्लान्तमनाः स राजन्
यावन्नास्मान् दृष्टवान् सूतपुत्रः ॥ १४ ॥ श्रुत्वा तु त्वां तेन दृष्टं
समेतमश्वत्थाम्ना पूर्व्वतरं क्षतञ्च। मन्ये कालमपयानस्य राजन्
क्रूरात् कर्णात्तेऽहमचिन्त्यकर्मन् ॥ १५ ॥ मया कर्णस्यास्त्रमिदं
पुरस्ताद्युद्धे दृष्टं पाण्डव चित्ररूपम्। न ह्यन्ययोद्धा विद्यते
सृञ्जयानां महारथं योऽद्य सहेत कर्णम् ॥ १६ ॥ शैनेयो मे
सात्यकिश्चक्ररक्षौ धृष्टद्युम्नश्चापि तथैव राजन्। युधामन्युश्चोत्त-
मौजाश्च शूरौ पृष्ठतो मां रक्षतां राजपुत्रौ ॥ १७ ॥ रथप्रवीरेण
महानुभाव द्विषत्सैन्ये वर्त्तता दुस्तरेण। समेत्याहं सूतपुत्रेण
संख्ये वृत्रेण वज्रीव नरेन्द्रमुख्य ॥ १८ ॥ योत्स्याम्यहं भारत

सूतपुत्रमस्मिन् संग्रामे यदि वै द्रक्ष्यतेऽद्य। आयाहि पश्चाद्य युयुत्समानं मां सूतपुत्रञ्च रणे जयाय॥ १९॥ महर्षभस्येव मुखं प्रपन्नाः प्रभद्रकाः कर्णमभिद्रवन्ति। षट्‌साहस्रा भारत राजपुत्राः स्वर्गाय लोकाय रणे निमग्नाः॥ २०॥ कर्णं न चेदद्य निहन्मि राजन् सबान्धवं युध्यमानं प्रसह्य। प्रतिश्रुत्याकुर्वतो वै गतिर्या कष्टां याता तामहं राजसिंह॥ २१॥ आमन्त्रये त्वां ब्रूहि रणे जयं नो पुरा हि भीमं धार्त्तराष्ट्रा ग्रसन्ते। सौतिं हनिष्यामि नरेन्द्रसिंह सैन्यं तथा शत्रुगणांश्च सर्वान्॥ २२॥

इति कर्णपर्वणि अर्ज्जुनप्रतिज्ञायां सप्तषष्टोऽध्यायः॥ ६७॥

---

सञ्जय उवाच। श्रुत्वा कर्णं कल्यमुदारवीर्य्यं क्रुद्धः पार्थः फाल्गुनस्यामितौजाः। धनञ्जयं वाक्यमुवाच चेदं युधिष्ठिरः कर्णशराभितप्तः॥ १॥ विप्रद्रुता तात चमूस्त्वदीया तिरस्कृता चाद्य यथा न साधु। भीतो भीमं त्यज्य चायास्तथा त्वं यन्नाशक्तः कर्णमथो निहन्तुम्॥ २॥ स्नेहस्त्वया पार्थ कृतः पृथाया गर्भः समाविश्य यथा न साधु। त्यक्त्वा रणे यदपायाः स भीमं यन्नाशक्तः सूतपुत्रं निहन्तुम्॥ ३॥ यत्तद्वाक्यं द्वैतवने त्वयोक्तं कर्णं हन्तास्म्येकरथेन पार्थ। तं त्यक्त्वा त्वं कथमद्यापयातः कर्णाद्भीतो भीमसेनं विहाय॥ ४॥ इदं यदि द्वैतवनेऽप्यवक्ष्यः कर्णं योद्धुं न प्रशक्ष्ये नृपेति। वयं ततः प्राप्तकालञ्च सर्वे कृत्वान्युपैष्याम तथैव पार्थ॥ ५॥ मयि प्रतिश्रुत्य वधं हि तस्य न वै कृतं तच्च तथैव वीर। आनीय नः शत्रुमध्यं स कस्मात् समुत्क्षिप्य स्थण्डिले प्रत्यपिंष्ठाः॥ ६॥ अन्वाशिष्म वयमर्ज्जुन त्वयि विवासवो बहु कल्याणमिष्टम्। तन्नः सर्वं विफलं राजपुत्र फलार्थिनो विटल द्रुवातिपुष्पः॥ ७॥ प्रच्छादितं बडिशमिवामिषेण संच्छादितं

गरलमिवाशनेन। अनर्थकं द्रष्टिनवानसि त्वं राज्यार्थिनो राज्यरूपं विनाशम् ॥ ८ ॥ त्रयोदशेमा हि समाः सदा वयं त्वामन्वजीविष्म धनञ्जयाशया। काले वर्षं देवमिवोप्तबीजं तन्नः सर्वान् नरके त्वं न्यमज्जः ॥ ९ ॥ यत्तत् पृथां वायुवाचान्तरीक्षे सप्ताहजाते त्वयि मन्दबुद्धे। जातः पुत्रो वासवविक्रमोऽयं सर्वान् शूरान् शात्रवान् जेष्यतीति ॥ १० ॥ अयं जेता खाण्डवे देवसङ्घान् सर्वाणि भूतान्यपि चोत्तमौजाः। अयं जेता मद्रकलिङ्गकेकयानयं कुरून् राजमध्ये निहन्ता ॥ ११ ॥ अस्मात् परो न भविता धनुर्द्धरो नैनं भूतं किञ्चन जातु जेता। इच्छन्नयं सर्वभूतानि कुर्य्याद्वशे वशी सर्वसमाप्तविद्यः ॥ १२ ॥ कान्त्या शशाङ्कस्य जवेन वायोः स्थैर्य्येण मेरोः क्षमया पृथिव्याः। सूर्य्यस्य भासा धनदस्य लक्ष्म्या शौर्य्येण शक्रस्य बलेन विष्णोः ॥ १३ ॥ तुल्यो महात्मा तव कुन्ति पुत्रो जातोऽदितेर्विष्णुरिवारिहन्ता। स्वेषां जयाय द्विषतां वधाय ख्यातोऽमितौजाः कुलतन्तुकर्त्ता ॥ १४ ॥ इत्यन्तरीक्षे शतशृङ्गमूर्द्ध्नि तपस्विनां शृण्वतां वागुवाच। एवंविधं तच्च नाभूत्तथा ते देवापि नूनमनृतं वदन्ति ॥ १५ ॥ तथापरेषामृषिसत्तमानां श्रुत्वा गिरः पूजयतां सदा त्वाम्। न सन्नतिं प्रैमि सुयोधनस्य त्वां जानाम्याधिरथेर्भयार्त्तम् ॥ १६ ॥ त्वष्ट्रा कृतं वाहमकूजनाक्षं शुभं समास्थाय कपिध्वजं त्वम्। खड्गं गृहीत्वा हेमपट्टावनद्धं धनुश्चेदं गाण्डिवं तालमात्रम्। स केशवेनोह्यमानः कथं त्वं कर्णाद्भीतो व्यपयातोऽसि पार्थ ॥ १७ ॥ धनुश्चैतत् केशवाय प्रदाय यन्ताभविष्यस्त्वं रणे चेद्दुरात्मन्। ततोऽहनिष्यत् केशवः कर्णमुग्रं मरुत्पतिर्वृत्रमिवात्तवज्रः ॥ १८ ॥ राधेयमेवं यदि नाद्य शक्तश्चरन्तमुग्रं प्रतिबाधनाय। देह्यन्यस्मै गाण्डिवमेतदद्य त्वत्तो योऽस्त्रैरभ्यधिको नरेन्द्रः ॥ १९ ॥ नास्मान्नैवं पुत्रदारैर्विहीनान् सुखाद्भ्रष्टान्राज्यनाशाच्च भूयः। द्रष्टा लोकः पतितानप्यगाधे पापे-

जुष्टे नरके पाण्डवेय ॥ २० ॥ मासेऽपतिष्यः पञ्चमे त्वं सुकृच्छ्रे
न वा गर्भेऽप्यभविष्यः पृथायाः। तत्ते श्रेयो राजपुत्राभविष्यन्न
चेत् संग्रामादपयानं दुरात्मन् ॥ २१ ॥ धिक् गाण्डीवं धिक् च
ते बाहुवीर्य्यमसङ्ख्येयान् बाणगणांश्च धिक् ते। धिक् ते केतुं
केशरिणः सुतस्य कृष्णानुदत्तञ्च रथञ्च धिक् ते ॥ २२ ॥

इति कर्णपर्वणि युधिष्ठिरवाक्ये अष्टषष्टोऽध्यायः ॥ ६८ ॥

---

सञ्जय उवाच। युधिष्ठिरेणैवमुक्तः कौन्तेयः श्वेतवाहनः।
असिं जग्राह संक्रुद्धो जिघांसुर्भरतर्षभम् ॥ १ ॥ तस्य कोपं समु-
द्वीक्ष्य चित्तज्ञः केशवस्तदा। उवाच किमिदं पार्थ गृहीतः खड्ग
इत्युत ॥ २ ॥ न हि पश्यामि योद्धव्यं त्वया किञ्चिद्धनञ्जय। ते
ग्रस्ता धार्त्तराष्ट्रा हि भीमसेनेन धीमता ॥ ३ ॥ अपयातोऽसि
कौन्तेय राजा द्रष्टव्य इत्यपि। स राजा भवता दृष्टः कुशली च
युधिष्ठिरः ॥ ४ ॥ स दृष्ट्वा नृपशार्दूलं शार्दूलसमविक्रमम्। हर्ष-
काले च संप्राप्ते किमिदं मोहकारितम् ॥ ५ ॥ न तं पश्यामि
कौन्तेय यस्ते वध्यो भविष्यति। प्रहर्त्तमिच्छसे कस्मात् किं वा ते
चित्तविभ्रमः ॥ ६ ॥ कस्माद्भवान् महाखड्गं परिगृह्णाति सत्वरः।
तत्त्वां पृच्छामि कौन्तेय किमिदं ते चिकीर्षितम्। परामृशसि
यत् क्रुद्धः खड्गमद्भुतविक्रम ॥ ७ ॥ एवमुक्तस्तु कृष्णेन प्रेक्ष-
माणो युधिष्ठिरम्। अर्जुनः प्राह गोविन्दं क्रुद्धः सर्प इव श्वसन्
॥ ८ ॥ अन्यस्मै देहि गाण्डीवमिति मां योऽभिचोदयेत्। छिन्द्या-
महं तस्य शिर इत्युपांशुव्रतं मम ॥ ९ ॥ तदुक्तं मम चानेन
राज्ञामितपराक्रम। समक्षं तव गोविन्द न तत् क्षन्तुमिहोत्सहे
॥ १० ॥ तस्मादेनं वधिष्यामि राजानं धर्मभीरुकम्। प्रतिज्ञां
पालयिष्यामि हत्वैनं नरसत्तमम् ॥ ११ ॥ एतदर्थं मया खड्गो-

गृहीतो यदुनन्दन। सोऽहं युधिष्ठिरं हत्वा सत्यस्यानृण्यतां गतः ॥ १२ ॥ विशोको विज्वरश्चापि भविष्यामि जनार्द्दन। किं वा त्वं मन्यसे प्राप्तमस्मिन् काले समुत्थिते ॥ १३ ॥ त्वमस्य जगतस्तात वेत्थ सर्वं गतागतम्। तत्तथा प्रकरिष्यामि यथा मां वक्ष्यते भवान् ॥ १४ ॥

सञ्जय उवाच। धिग्धिगित्येव गोविन्दः पार्थमुक्त्वाब्रवीत् पुनः ॥ १५ ॥

कृष्ण उवाच। इदानीं पार्थ जानामि न वृद्धाः सेवितास्त्वया। अकाले पुरुषव्याघ्र संरम्भं यद्भवानगात् ॥ १६ ॥ न हि धर्मविभागज्ञः कुर्य्यादेवं धनञ्जय। यथा त्वं पाण्डवाद्येह धर्मभीरुरपण्डितः ॥ १७ ॥ अकार्य्याणां क्रियाणाञ्च संयोगं यः करोति वै। कार्य्याणामक्रियाणाञ्च स पार्थ पुरुषाधमः ॥ १८ ॥ अनुसृत्य तु ये धर्मं कथयेयुरुपस्थिताः। समासविस्तरविदां न तेषां वेत्थ निश्चयम् ॥ १९ ॥ अनिश्चयज्ञो हि नरः कार्य्याकार्य्यविनिश्चये। अवशो मुह्यते पार्थ यथा त्वं मूढ एव तु ॥ २० ॥ न हि कार्य्यमकार्य्यं वा सुखं ज्ञातुं कथञ्चन। श्रुतेन ज्ञायते सर्वं तच्च त्वं नावबुध्यसे ॥ २१ ॥ अविज्ञानाद्भवान् यच्च धर्मं रक्षति धर्मवित्। प्राणिनां त्वं वधं पार्थ धार्मिको नावबुध्यसे ॥ २२ ॥ प्राणिनामवधस्तात सर्वज्यायान्मतो मम। अनृतां वा वदेद्वाचं न तु हिंस्यात् कथञ्चन ॥ २३ ॥ स कथं भ्रातरं ज्येष्ठं राजानं धर्मकोविदम्। हन्याद्भवान्नरश्रेष्ठ प्राकृतोऽन्यः पुमानिव ॥ २४ ॥ अयुध्यमानस्य वधस्तथा शत्रोश्च भारत। पराङ्मुखस्य द्रवतः शरणञ्चाभिगच्छतः ॥ २५ ॥ कृताञ्जलेः प्रपन्नस्य प्रमत्तस्य तथैव च। न वधः पूज्यते सद्भिस्तच्च सर्वं गुरौ तव ॥ २६ ॥ त्वया चैव व्रतं पार्थ बालेनैव कृतं पुरा। तस्मादधर्मसंयुक्तं मौढ्यात् कर्म व्यवस्यसि ॥ २७ ॥ स गुरुं पार्थ कस्मात्त्वं हन्तुकामोऽभि-

धावसि। असंप्रधार्य धर्माणां गतिं सूक्ष्मां दुरत्ययाम् ॥ २८ ॥
इदं धर्मरहस्यञ्च तव वक्ष्यामि पाण्डव। यद्ब्रूयात्तव भीष्मो हि
धर्मज्ञो वा युधिष्ठिर ॥ २९ ॥ विदुरो वा तथा क्षत्ता कुन्ती
वापि यशस्विनी। तत्ते वक्ष्यामि तत्त्वेन निबोधेदं धनञ्जय ॥ ३० ॥
सत्यस्य वचनं साधु न सत्याद्विद्यते परम्। तत्त्वेनैव सुदुर्ज्ञेयं यस्य
सत्यमनुष्ठितम् ॥ ३१ ॥ भवेत् सत्यमवक्तव्यं वक्तव्यमनृतं भवेत्।
यत्रानृतं भवेत् सत्यं सत्यञ्चाप्यनृतं भवेत् ॥ ३२ ॥ प्राणात्यये विवाहे
च वक्तव्यमनृतं भवेत्। सर्वस्वस्यापहारे च वक्तव्यमनृतं भवेत्
॥ ३३ ॥ विवाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे।
विप्रस्य चार्थे ह्यनृतं वदेत पञ्चानृतान्याहुरपातकानि ॥ ३४ ॥
तत्रानृतं भवेत् सत्यं सत्यञ्चाप्यनृतं भवेत् ॥ ३५ ॥ तादृशं मन्यते
बालो यस्य सत्यमनुष्ठितम्। सत्यानृते विनिश्चित्य ततो भवति
धर्मवित् ॥ ३६ ॥ किमाश्चर्यं कृतप्रज्ञः पुरुषोऽपि सुदारुणः।
सुमहत् प्राप्नुयात् पुण्यं बलाकोऽन्धवधादिव ॥ ३७ ॥ किमाश्चर्यं
पुनर्मूढो धर्मकामो ह्यपण्डितः। सुमहत् प्राप्नुयात् पापमापगा-
स्विव कौशिकः ॥ ३८ ॥

अर्जुन उवाच। आचक्ष्व भगवन्नेतत् यथा विन्द्यामहं तथा।
बलाकस्याभिसम्बन्धं नदीनां कौशिकस्य च ॥ ३९ ॥

वासुदेव उवाच। मृगव्याधोऽभवत् कश्चित् बलाको नाम भारत।
यात्रार्थं पुत्रदारस्य मृगान् हन्ति न कामतः ॥ ४० ॥ वृद्धौ च
मातापितरौ बिभर्त्तयन्यांश्च संश्रितान्। स्वधर्मनिरतो नित्यं सत्य-
वागनसूयक ॥४१॥ स कदाचिन्मृगं लिप्सुर्नाभ्यविन्दत् प्रयत्नवान्।
अपः पिबन्तं ददृशे श्वापदं घ्राणचक्षुषम् ॥ ४२ ॥ अदृष्टपूर्वमपि तत्
सत्त्वं तेन हतं तदा। अन्धे हते ततो व्योम्नः पुष्पवर्षं पपात च
॥ ४३ ॥ अप्सरोगीतवादित्रैर्नादितञ्च मनोरमम्। विमानमाग-
मत् स्वर्गात् मृगव्याधनिनीषया ॥ ४४ ॥ तद्भूतं सर्वभूतानामभावाय

किलार्जुन। तपस्समुग्रा वरं प्राप्तं कृतमन्धं स्वयम्भुवा ॥ ४५ ॥
तद्धत्वा सर्वभूतानामभावकृतनिश्चयम्। ततो बलाकः स्वर्गादेवं
धर्मः सुदुर्विदः ॥ ४६ ॥ कौशिकोऽप्यभवद्विप्रस्तपस्वी नवहुश्रुतः।
नदीनां सङ्गमे ग्रामाददूरात् स किलावसत् ॥ ४७ ॥ सत्यं मया
सदा वाच्यमिति तस्याभवद्व्रतम्। सत्यवादीति विख्यातः स
तदासीद्धनञ्जय ॥ ४८ ॥ अथ दस्युभयात् केचित्तदा तद्वन-
माविशन्। तत्रापि दस्यवः क्रुद्धास्तानमार्गन्त यत्नतः ॥ ४९ ॥
अथ कौशिकमभ्येत्य प्राहुस्ते सत्यवादिनम्। कतमेन पथा याता
भगवन् बहवो जनाः। सत्येन पृष्टः प्रब्रूहि यदि तान् वेत्थ शंस
नः ॥ ५० ॥ स पृष्टः कौशिकः सत्यं वचनं तानुवाच ह। बहु-
वृक्षलतागुल्ममेतद्वनमुपाश्रिताः ॥ ५१ ॥ इति तान् ख्यापयामास
तेभ्यः पार्थ स कौशिकः। ततस्ते तान् समासाद्य क्रूरा जघ्नुरिति
श्रुतिः ॥ ५२ ॥ तेनाधर्मेण महता वाग्दुरुक्तेन कौशिकः। गतः
स कष्टं नरकं सूक्ष्मधर्मेष्वकोविदः ॥ ५३ ॥ यथा चाल्पश्रुतो मूढो
धर्माणामविभागवित्। वृद्धानपृष्ट्वा सन्देहं महच्छ्वभ्रमितोऽर्हति
॥ ५४ ॥ तत्र ते लक्षणोद्देशः कश्चिदेवं भविष्यति। दुष्करं परमं
ज्ञानं तर्केणानुव्यवस्यति ॥ ५५ ॥ श्रुतेर्धर्म इति ह्येके वदन्ति
बहवो जनाः। तत्ते न प्रत्यसूयामि न च सर्वं विधीयते ॥ ५६ ॥
प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम् ॥ ५७ ॥ यत् स्यादहिंसा-
संयुक्तं स धर्म इति निश्चयः। अहिंसार्थाय भूतानां धर्मप्रवचनं
कृतम् ॥ ५८ ॥ धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः। यत्
स्याद्धारणसंयुक्तं स धर्म इति निश्चयः ॥ ५९ ॥ ये न्यायेन जिहीर्-
षन्तो धर्ममिच्छन्ति कर्हिचित्। अकूजनेन वा मोक्षो नानुकूजेत्
कथञ्चन ॥ ६० ॥ अवश्यं कूजितव्ये वा शङ्केरन् वाप्यकूजतः।
श्रेयस्तत्रानृतं वक्तुं तत् सत्यमविचारितम् ॥ ६१ ॥ यः कार्य्येभ्यो
व्रतं कृत्वा कर्मणा नोपपादयेत्। न तत् फलमवाप्नोति एवमाहु-

मनीषिणः ॥ ६२ ॥ प्राणात्यये विवाहे वा सर्वज्ञातिवधात्यये ।
कर्मण्यभिप्रवृत्ते वा न च प्रोक्तं मृषा भवेत् ॥ ६२ ॥ अधर्मं नात्र
पश्यन्ति धर्मतत्त्वार्थदर्शिनः । यत् स्तेनैः सह सम्बन्धान्मुच्यते
शपथैरपि ॥ ६४ ॥ श्रेयस्तत्रानृतं वक्तुं तत् सत्यमविचारितम् ।
न च तेभ्यो धनं देयं शक्ये सति कथञ्चन ॥ ६५ ॥ पापेभ्यो हि
धनं दत्तं दातारमपि पीड़येत् । तस्माद्धर्मार्थमनृतमुक्त्वा नानृत-
वाग्भवेत् ॥ ६६ ॥ एष ते लक्षणोद्देशो मयोद्दिष्टो यथाविधि ।
एतच्छ्रुत्वा ब्रूहि पार्थ यदि वध्यो युधिष्ठिरः ॥ ६७ ॥

अर्जुन उवाच । यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयान्महा-
मतिः । हितञ्चैव यथास्माकं तथैव वचनं तव ॥ ६८ ॥ भवान्मातृ-
समोऽस्माकं तथा पितृसमोऽपि च । गतिश्च परमा कृष्ण तेन ते
वाक्यमुत्तमम् ॥ ६९ ॥ न हि ते त्रिषु लोकेषु विद्यतेऽविदितं
क्वचित् । तस्माद्भवान् परं धर्मं वेद सर्वं यथातथम् ॥ ७० ॥ अवध्यं
पाण्डवं मन्ये धर्मराजं युधिष्ठिरम् । अस्मिंस्तु मम सङ्कल्पे ब्रूहि
किञ्चिदनुग्रहम् । इदञ्चापरमत्रैव शृणु हृतस्थं विवक्षितम् ॥ ७१ ॥
जानासि दाशार्ह मम व्रतं त्वं यो मां ब्रूयात् कश्चन मानुषेषु ।
अन्यस्मै त्वं गाण्डिवं देहि पार्थ यस्त्वत्तोऽस्त्राद्वीर्य्यतो वा विशिष्टः
॥ ७२ ॥ हन्यामहं केशव तं प्रसह्य भीमो हन्यात्तूवरकेति चोक्तः ।
तन्मे राजा प्रोक्तवांस्ते समक्षं धनुर्देहीत्यसकृद्वृष्णिवीर ॥ ७३ ॥
तं हन्याञ्चेत् केशव जीवलोके स्थाता नाहं कालमप्यल्पमात्रम् ।
ध्यात्वा नूनं चेतसा चापि युक्तो वधं राज्ञो भ्रष्टवीर्य्यो विचेता ॥ ७४ ॥
यथा प्रतिज्ञा मम लोकसिद्धा भवेत् सत्या धर्मभृतां वरिष्ठ । यथा
जीवेत् पाण्डवोऽहञ्च कृष्ण तथा बुद्धिं दातुमद्यार्हसि त्वम् ॥ ७५ ॥

वासुदेव उवाच । राजा श्रान्तो दुःखितो विक्षतश्च कर्णेन
सङ्ख्ये निशितैर्बाणसङ्घैः । पश्चाच्चायं सूतपुत्रेण वीर शरैर्भृशं
ताड़ितोऽयुध्यमानः ॥ ७६ ॥ अतस्त्वमेतेन सरोषमुक्तो दुःखा-

वाग्भिर्विशिखैर्म्मे ह्रदि विद्धः तेन सुखं न वयं विद्म किञ्चित् ॥ १३ ॥ मा
मावमंस्था द्रौपदीतल्पसंस्थो महारथान् प्रतिहन्मि त्वदर्थे । तेना-
विशङ्को भारत निष्ठुरोऽसि त्वत्तः सुखं नाभिजानामि किञ्चित् ॥१४॥
प्रोक्तः स्वयं सत्यसन्धेन मृत्युस्तव प्रियार्थं नरदेव युद्धे । वीरः
शिखण्डी द्रौपदोऽसौ महात्मा मयाभिगुप्तेन हतश्च तेन ॥ १५ ॥
न चाभिनन्दामि तवाधिराज्यं यतस्त्वमद्येष्वहिताय सक्तः । स्वयं
कृत्वा पापमनार्य्यजुष्टमस्माभिर्वै तर्त्तुमिच्छस्यरींस्त्वम् ॥ १६ ॥ अक्षेषु
दोषा बहवो विधर्म्माः श्रुतास्त्वया सहदेवोऽब्रवीद्यान् । तान्नैषि
त्वं त्यक्तुमसाधुजुष्टांस्तेन स्म सर्वे निरयं प्रपन्नाः ॥ १७ ॥ सुखं
त्वत्तो नाभिजानीम किञ्चिद्यतस्त्वमक्षैर्द्देवितुं संप्रवृत्तः । स्वयं कृत्वा
व्यसनं पाण्डव त्वं भूयस्तीक्ष्णाः श्रावयस्यद्य वाचः ॥ १८ ॥ शेते-
ऽस्माभिर्निहता शत्रुसेना छिन्नैर्गात्रैर्भूमितले नदन्ती । त्वया हि
तत् कर्म कृतं नृशंसं यस्माद्दोषः कौरवाणां वधश्च ॥ १९ ॥ हता
उदीच्या निहताः प्रतीच्या नष्टाः प्राच्या दाक्षिणात्या विशस्ताः ।
कृतं कर्माप्रतिरूपं महद्भिस्तेषां योधैस्त्वदीयैश्च युद्धे ॥ २० ॥ त्वं
देविता त्वत्कृते राज्यनाशस्त्वत्सम्भवं नो व्यसनं नरेन्द्र । मास्मान्
क्रूरैर्वाक्प्रतोदैस्तुदंस्त्वं भूयो राजन् कोपयेस्त्वल्पभाग्यः ॥ [illegible] ॥

सञ्जय उवाच । एता वाचः परुषाः सव्यसाची स्थिरप्रज्ञः
श्रावयित्वातिरूक्षाः । बभूवासौ विमना धर्म्मभीरुः कृत्वा प्राज्ञः
पातकं किञ्चिदेवम् ॥ २२ ॥ ततोऽनुतेपे सुरराजपुत्रो विनिश्वसं-
श्चाप्यसिमुद्बबर्ह । तमाह कृष्णः किमिदं पुनर्भवान् विकोषमाकाश-
निभं करोत्यसिम् ॥ २३ ॥ ब्रवीहि मां त्वं पुनरुत्तरं वचस्तथा
प्रवक्ष्याम्यहमर्थसिद्धये । इत्येवमुक्तः पुरुषोत्तमेन सुदुःखितः
केशवमर्जुनोऽब्रवीत् ॥ २४ ॥ अहं हनिष्ये स्वशरीरमेव प्रसह्य
येनाहितमाचरं वै । निशाम्य तत् पार्थवचोऽब्रवीदिदं धनञ्जयं
धर्म्मभृतां वरिष्ठः ॥ २५ ॥ राजानमेनं त्वमितीदमुक्त्वा किं कश्मलं

प्राविशः पार्थ घोरम्। त्वात्मानं हन्तुमिच्छस्यरिघ्न नेदं सद्भिः सेवितं वै किरीटिन् ॥ २६ ॥ धर्मात्मानं भ्रातरं ज्येष्ठमद्य खड्गेन चैनं यदि हन्या नृवीर। धर्माद्भीतस्तत् कथं नाम ते स्यात् किञ्चोत्तरं वाक्करिष्यस्त्वमेव ॥ २७ ॥ सूक्ष्मो धर्मो दुर्विदश्चापि पार्थ विशेषतोऽज्ञैः प्रोच्यमानं निबोध। हत्वात्मानमात्मना प्राप्नुयास्त्वं वधाद्भ्रातुर्नरकञ्चातिघोरम् ॥ २८ ॥ ब्रवीहि वाचाद्य गुणानिहात्मनस्तथा हतात्मा भवितासि पार्थ ॥ २९ ॥ तथास्तु कृष्णेत्यभिनन्द्य तद्वचो धनञ्जयः प्राह धनुर्विनाम्य। युधिष्ठिरं धर्मभृतां वरिष्ठं शृणुष्व राजन्निति शक्रसूनुः ॥ ३० ॥ न मादृशोऽन्यो नरदेव विद्यते धनुर्द्धरो देवमृते पिनाकिनम्। अहं हि तेनानुमतो महात्मना क्षणेन हन्यां सचराचरं जगत् ॥ ३१ ॥ मया हि राजन् सदिगीश्वरा दिशो विजित्य सर्वा भवतः कृता वशे। स राजसूयश्च समाप्तदक्षिणः सभा च दिव्या भवतो ममौजसा ॥ ३२ ॥ पाणौ पृषत्का निशिता ममैव धनुश्च सज्यं विहितं सबाणम्। पादौ च मे सरथौ सध्वजौ च न मादृशं युद्धगतं जयन्ति ॥ ३३ ॥ हता उदीच्या निहताः प्रतीच्याः प्राच्या निरस्ता दाक्षिणात्या विशस्ताः। संशप्तकानां किञ्चिदेवावशिष्टं सर्वस्य सैन्यस्य हतं मयार्द्धम् ॥ ३४ ॥ शेते मया निहता भारतीया चमू राजन् देवचमूप्रकाशा। ये चास्त्रज्ञास्तानहं हन्मि चास्त्रैस्तस्माल्लोकान्नेह करोमि भस्मसात् ॥ ३५ ॥ जैत्रं रथं भीममास्थाय कृष्ण यावः शीघ्रं सूतपुत्रं निहन्तुम्। राजा भवत्वद्य सुनिर्वृतोऽयं कर्णं रणे नाशयितास्मि बाणैः ॥ ३६ ॥ अद्यापुत्रा सूतमाता भवित्री कुन्ती वाथो मया वा तेन वापि। सत्यं वदाम्यद्य न कर्णमाजौ शरैरहत्वा कवचं विमोक्ष्ये ॥ ३७ ॥

सञ्जय उवाच। इत्येवमुक्त्वा पुनरेव पार्थो युधिष्ठिरं धर्मभृतां वरिष्ठम्। विमुच्य शस्त्राणि धनुर्विसृज्य कोषे च खड्गं

विनिधाय मूर्ध्नम् ॥ ३८ ॥ स व्रीडया नम्रशिराः किरीटी युधिष्ठिरं प्राञ्जलिरभ्युवाच। प्रसीद राजन् क्षमयन् मयोक्तं काले भवान् वेत्स्यति तन्नमस्ते ॥ ३९ ॥ प्रसाद्य राजानममित्रसाहं स्थितोऽब्रवीच्चैव पुनः प्रवीरः। नेदं चिरात् क्षिप्रमिदं भविष्यत्यावर्त्ततेऽस्मावभियामि चैनम् ॥ ४० ॥ याम्येव भीमं समरात् प्रमोक्तुं सर्वात्मना सूतपुत्रञ्च हन्तुम्। तव प्रियार्थं मम जीवितं हि ब्रवीमि सत्यं तदवेहि राजन् ॥ ४१ ॥ इति प्रयास्यन्नुपगृह्य पादौ समुत्थितो दीप्ततेजाः किरीटी ॥ ४२ ॥ एतच्छ्रुत्वा पाण्डवो धर्मराजो भ्रातुर्वाक्यं परुषं फाल्गुनस्य। उत्थाय तस्माच्छयनादुवाच पार्थं ततो दुःखपरीतचेताः ॥ ४३ ॥ कृतं मया पार्थ यथा न साधु येन प्राप्तं व्यसनं वः सुघोरम्। तस्माच्छिरश्छिन्धि ममेदमद्य कुलान्तकस्याधमपूरुषस्य ॥ ४४ ॥ पापस्य पापव्यसनान्वितस्य विमूढबुद्धेरलसस्य भीरोः। वृद्धावमन्तुः परुषस्य चैव किन्ते चिरं मे ह्यनुसृत्य रूक्षम् ॥ ४५ ॥ गच्छाम्यहं वनमेवाद्य पापः सुखं भवान् वर्त्ततां मद्विहीनः। योग्यो राजा भीमसेनो महात्मा क्लीवस्य वा मम किं राजकृत्यम् ॥ ४६ ॥ न चास्मि शक्तः परुषाणि सोढुं पुनस्तवेमानि रुषान्वितस्य। भीमोऽस्तु राजा मम जीवितेन न कार्य्यमद्यावमतस्य वीरः ॥ ४७ ॥ इत्येवमुक्त्वा सहसोत्पपात राजा ततस्तच्छयनं विहाय। इयेष निर्गन्तुमथो वनाय तं वासुदेवः प्रणतोऽभ्युवाच ॥ ४८ ॥ राजन् विदितमेतत्ते यथा गाण्डीवधन्वनः। प्रतिज्ञा सत्यसन्धस्य गाण्डीवं प्रति विश्रुता ॥ ४९ ॥ ब्रूयाद्य एनं गाण्डीवं देह्यन्यस्मै त्वमित्युत। वध्योऽस्य स पुमांल्लोके त्वया चोक्तोऽयमीदृशम् ॥ ५० ॥ ततः सत्यां प्रतिज्ञां तां पार्थेन प्रतिरक्षता। मच्छन्दादवमानोऽयं कृतस्तव महीपते। गुरूणामवमानो हि वध इत्यभिधीयते ॥ ५१ ॥ तस्मात्त्वं वै महाबाहो मम पार्थस्य चोभयोः। व्यतिक्रममिमं राजन् स

संरब्धार्जुनं प्रति ॥ ५२ ॥ शरणं त्वां महाराज प्रपन्नौ स्व उभावपि । क्षन्तुमर्हसि मे राजन् प्रणतस्याभियाचतः ॥ ५३ ॥ राधेयस्याद्य पापस्य भूमिः पास्यति शोणितम् । सत्यं ते प्रतिजानामि हतं विद्धाद्य सूतजम । यस्येच्छसि वधं तस्य गतमद्यद्य जीवितम् ॥ ५४ ॥ इति कृष्णवचः श्रुत्वा धर्मराजो युधिष्ठिरः । ससम्भ्रमं हृषीकेशमुत्थाप्य प्रणतं तदा ॥ ५५ ॥ कृताञ्जलिस्ततो वाक्यमुवाचानन्तरं वचः । एवमेव यथात्थत्वमस्त्वेषोऽतिक्रमो मम ॥ ५६ ॥ अनुनीतोऽस्मि गोविन्द तारितश्चास्मि माधव । मोक्षिता व्यसनाद्घोरादयमद्य त्वयाच्युत ॥ ५७ ॥ भवन्तं नाथमासाद्य ह्यावां व्यसनसागरात् । घोरादद्य समुत्तीर्णावुभावज्ञानमोहितौ ॥ ५८ ॥ त्वद्बुद्धिप्लवमासाद्य दुःखशोकार्णवाद्वयम् । समुत्तीर्णाः सहामात्याः सनाथाः स्म त्वयाच्युत ॥ ५९ ॥

इति कर्णपर्व्वणि युधिष्ठिरप्रबोधने सप्ततितमोऽध्यायः ॥ ७० ॥

---

सञ्जय उवाच । इति स्म कृष्णवचनात् प्रत्युच्चार्य्य युधिष्ठिरम् । बभूव विमनाः पार्थः किञ्चित् कृत्वेव पातकम् ॥ १ ॥ ततोऽब्रवीद्वासुदेवः प्रहसन्निव पाण्डवम् ॥ २ ॥ कथं नाम भवेदेतद्यदि त्वं पार्थ धर्मज्ञम् । असिना तीक्ष्णधारेण हन्या धर्मे व्यवस्थितम् ॥ ३ ॥ त्वमित्युक्त्वाथ राजानमेवं कश्मलमाविशः । हत्वा तु नृपतिं पार्थ अकरिष्यः किमुत्तरम् । एवं हि दुर्विदो धर्मो मन्दप्रज्ञैर्विशेषतः ॥ ४ ॥ स भवान् धर्मभीरुत्वात् ध्रुवमेष्यत्महत्तमः । नरकं घोररूपञ्च भ्रातुर्ज्येष्ठस्य वै वधात् ॥ ५ ॥ स त्वं धर्मभृतां श्रेष्ठं राजानं धर्मसंहितम् । प्रसादय कुरुश्रेष्ठमेतदत्र मतं मम ॥ ६ ॥ प्रसाद्य भक्त्या राजानं प्रीते चैव युधिष्ठिरे ।

प्रयातस्त्वरितो योद्धुं सूतपुत्ररथं प्रति ॥ ७ ॥ हत्वा तु समरे कर्णं त्वमद्य निशितैः शरैः। विपुलां प्रीतिमाधत्स्व धर्मपुत्रस्य मानद ॥ ८ ॥ एतदद्य महाबाहो प्राप्तकालं मतं मम। एवंकृते कृतञ्चैव तव कार्य्यं भविष्यति ॥ ९ ॥ ततोऽर्जुनो महाराज लज्जया वै समन्वितः। धर्मराजस्य चरणौ प्रपद्य शिरसा नतः ॥ १० ॥ उवाच भरतश्रेष्ठं प्रसीदेति पुनः पुनः। क्षमस्व राजन् यत् प्रोक्तं धर्मकामेण भीरुणा ॥ ११ ॥

सञ्जय उवाच। दृष्ट्वा तु पतितं पद्भ्यां धर्मराजो युधिष्ठिरः। धनञ्जयममित्रघ्नं रुदन्तं भरतर्षभ ॥ १२ ॥ उत्थाप्य भ्रातरं राजा धर्मराजो धनञ्जयम्। समाश्लिष्य च सस्नेहं प्ररुरोद महीपतिः ॥ १३ ॥ रुदित्वा सुचिरं कालं भ्रातरौ सुमहाद्युती। कृतशौचौ महाराज प्रीतिमन्तौ बभूवतुः ॥ १४ ॥ तत आश्लिष्य तं प्रेम्णा मूर्द्धि चाघ्राय पाण्डवः। प्रीत्या परमया युक्तः प्रस्मयंश्चाब्रवीज्जयम् ॥ १५ ॥ कर्णेन मे महाबाहो सर्वसैन्यस्य पश्यतः। कवचञ्च ध्वजञ्चैव धनुः शक्तिर्हयाः शराः। शरैः कृत्ता महेष्वास यतमानस्य संयुगे ॥ १६ ॥ सोऽहं ज्ञात्वा रणे तस्य कर्म दृष्ट्वा च फाल्गुन। व्यवसीदामि दुःखेन न च मे जीवितं प्रियम् ॥ १७ ॥ न चेदद्य हि तं वीरं निहनिष्यसि संयुगे। प्राणानेव परित्यक्ष्ये जीवितार्थो हि को मम ॥ १८ ॥ एवमुक्तः प्रत्युवाच विजयो भरतर्षभ ॥ १९ ॥ सत्येन ते शपे राजन् प्रसादेन तथैव च। भीमेन च नरश्रेष्ठ यमाभ्याञ्च महीपते ॥ २० ॥ यथाद्य समरे कर्णं हनिष्यामि हतोऽपि वा। महीतले पतिष्यामि सत्येनायुधमालभे ॥ २१ ॥ एवमाभाष्य राजानमब्रवीन्माधवं वचः। अद्य कर्णं रणे कृष्ण सूदयिष्ये न संशयः। तव बुद्ध्या हि भद्रं ते वधस्तस्य दुरात्मनः ॥ २२ ॥ एवमुक्तोऽब्रवीत् पार्थं केशवो राजसत्तम। शक्तोऽसि भरतश्रेष्ठ हन्तुं कर्णं महाबलम् ॥ २३ ॥

एष चापि हि मे कामो नित्यमेव महारथ। कथं भवान्रणे कर्णं
निहन्यादिति सत्तम ॥ २४ ॥ भूयश्चोवाच मतिमान् माधवो
धर्मनन्दनम्। युधिष्ठिरेमं वीभत्सुं त्वं सान्त्वयितुमर्हसि ॥२५॥
अनुज्ञातुञ्च कर्णस्य वधायाद्य दुरात्मनः। श्रुत्वा ह्यहमयञ्चैव
त्वां कर्णशरपीड़ितम्। प्रवृत्तिं ज्ञातुमायाताविहावां पाण्डुनन्दन
॥ २६ ॥ दिष्ट्यासि राजन्न हतो दिष्ट्या न ग्रहणं गतः। परि-
सान्त्वय वीभत्सुं जयमाशाधि चानघ ॥ २७ ॥

युधिष्ठिर उवाच। एह्येहि पार्थ वीभत्सो मां परिष्वज
पाण्डव। वक्तव्यमुक्तोऽस्मि हितं त्वया क्षान्तञ्च तन्मया ॥ २८ ॥
अहं त्वामनुजानामि जहि कर्णं धनञ्जय। मन्युञ्च मा कृथाः
पार्थ यन्मयोक्तोऽसि दारुणम् ॥ २९ ॥

सञ्जय उवाच। ततो धनञ्जयो राजन् शिरसा प्रणतस्तदा।
पादौ जग्राह पाणिभ्यां भ्रातुर्ज्येष्ठस्य मारिष ॥ ३० ॥ तमुत्थाप्य
ततो राजा परिष्वज्य च पीड़ितम्। मूर्द्ध्न्युपाघ्राय चैवैनमिदं
पुनरुवाच ह ॥ ३१ ॥ धनञ्जय महाबाहो मानितोऽसि दृढ़ं
त्वया। माहात्म्यं विजयञ्चैव भूयः प्राप्नुहि शाश्वतम् ॥ ३२ ॥

अर्ज्जुन उवाच। अद्य तं पापकर्म्माणं सानुबन्धं रणे शरैः।
नयाम्यन्तं समासाद्य राधेयं बलगर्व्वितम् ॥ ३३ ॥ येन त्वं पीड़ितो
बाणैर्दृढ़मायम्य कार्म्मुकम्। तस्याद्य कर्म्मणः कर्णः फलं प्राप्स्यति
दारुणम् ॥ ३४ ॥ अद्य त्वामनुयास्यामि कर्णं हत्वा महीपते।
सभाजयितुमाक्रन्दादिति सत्यं ब्रवीमि ते ॥ ३५ ॥ नाहत्वा
विनिवर्त्तिष्ये कर्णमद्य महारणात्। इति सत्येन ते पादौ स्पृशामि
जगतीपते ॥ ३६ ॥

सञ्जय उवाच। इति ब्रुवाणं सुमनाः किरीटिनं युधिष्ठिरः
प्राह वचो बृहत्तरम् ॥ ३७ ॥ यशोऽक्षय्यं जीवितमीप्सितं ते
जयं सदा वीर्य्यमरिक्षयं तथा। प्रयाहि वृद्धिञ्च दिशन्तु देवता

यथाहमिच्छामि तथास्तु तत्तथा। प्रयाहि तूर्णं जहि कर्ण-
माहवे पुरन्दरो वृत्रमिवात्मवधैषी ॥ ६८ ॥

इति कर्णपर्वणि युधिष्ठिरार्जुनसंवादे एकसप्ततोऽध्यायः ॥ ७१ ॥

---

सञ्जय उवाच। प्रसाद्य धर्मराजानं प्रहृष्टेनान्तरात्मना।
पार्थः प्रोवाच गोविन्दं सूतपुत्रवधोद्यतः ॥ १ ॥ कल्प्यतां मे रथो
भूयो युज्यन्ताञ्च हयोत्तमाः। आयुधानि च सर्वाणि सज्यन्तां वै
महारथे ॥ २ ॥ उपावृत्ताश्च तुरगाः शिक्षिताश्चाश्वसादिभिः।
रथोपकरणैः सज्जा उपायान्तु त्वरान्विताः। प्रयाहि शीघ्रं
गोविन्द सूतपुत्रजिघांसया ॥ ३ ॥ एवमुक्तो महाराज फाल्गुनेन
महात्मना। उवाच दारुकं कृष्णः कुरु सर्वं यथाब्रवीत्। अर्जुनो
भरतश्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् ॥ ४ ॥ आज्ञप्तस्त्वथ कृष्णेन
दारुको राजसत्तम। योजयामास स रथं वैयाघ्रं शत्रुतापनम्।
सज्जं निवेदयामास पाण्डवस्य महात्मनः ॥ ५ ॥ युक्तन्तु तं रथं
दृष्ट्वा दारुकेण महात्मना। आपृच्छ्य धर्मराजानं ब्राह्मणान्
स्वस्तिवाच्य च। सुमङ्गलं स्वस्त्ययनमारुरोह रथोत्तमम् ॥ ६ ॥
तस्य राजा महाप्राज्ञो धर्मराजो युधिष्ठिरः। आशिषोऽयुङ्क्त
स ततः प्रायात् कर्णरथं प्रति ॥ ७ ॥ तं प्रयान्तं महेष्वासं दृष्ट्वा
भूतानि भारत। निहतं मेनिरे कर्णं पाण्डवेन महात्मना ॥ ८ ॥
बभूवुर्विमनाः सर्वा दिशो राजन् समन्ततः। चाषाश्च शतपत्राश्च
क्रौञ्चाश्चैव जनेश्वर। प्रदक्षिणमकुर्वन्त तदा वै पाण्डुनन्दनम् ॥ ९ ॥
बहवः पक्षिणो राजन् पुन्नामानः शुभा शिवाः। त्वरयन्तोऽर्जुनं
युद्धे हृष्टरूपा ववाशिरे ॥ १० ॥ कङ्का गृध्रा वकाः श्येनाः वाय-
साश्च विशाम्पते। अग्रतस्तस्य गच्छन्ति भक्ष्यहेतोर्भयानकाः ॥ ११ ॥
निमित्तानि च धन्यानि पाण्डवस्य शशंसिरे। विनाशमरिसैन्यानां

कर्णस्य च वधं प्रति ॥ १२ ॥ प्रयातस्याथ पार्थस्य महान् खेदो
व्यजायत । चिन्ता च विपुला जज्ञे कथञ्चेदं भविष्यति ॥ १३ ॥
ततो गाण्डीवधन्वानमब्रवीन्मधुसूदनः । दृष्ट्वा पार्थं तथा यान्तं
चिन्तापरिगतं तदा ॥ १४ ॥

वासुदेव उवाच । गाण्डीवधन्वन् संग्रामे ये त्वया धनुषा
जिताः । न तेषां मानुषो जेता त्वदन्य इह विद्यते ॥ १५ ॥ दृष्टा
हि बहवः शूराः शक्रतुल्यपराक्रमाः । त्वां प्राप्य समरे शूरं ये
गताः परमां गतिम् ॥ १६ ॥ को हि द्रोणञ्च भीष्मञ्च भगदत्तञ्च
मारिष । विन्दानुविन्दावावन्त्यौ काम्बोजञ्च सुदक्षिणम् ॥ १७ ॥
श्रुतायुषं महावीर्यमच्युतायुषमेव च । प्रत्युद्गम्य भवेत् क्षेमी यो
न स्यात् त्वमिव प्रभो ॥ १८ ॥ तव ह्यस्त्राणि दिव्यानि लाघवं
बलमेव च । असम्मोहश्च युद्धेषु विज्ञानस्य च सन्ततिः । वेधः
पातश्च लक्ष्येषु योगश्चैव तवार्जुन ॥ १९ ॥ भवान् देवान् सगन्ध-
र्वान् निहन्यात् सचराचरान् । पृथिव्यां हि रणे पार्थ न योद्धा
त्वत्समः पुमान् ॥ २० ॥ धनुर्ग्रहा हि ये केचित् क्षत्रिया युद्ध-
दुर्मदाः । आदेवात् त्वत्समं तेषां न पश्यामि शृणोमि वा ॥ २१ ॥
ब्रह्मणा च प्रजाः सृष्टा गाण्डीवञ्च महद्धनुः । येन त्वं युध्यसे पार्थ
तस्मान्नास्ति त्वया समः ॥ २२ ॥ अवश्यन्तु मया वाच्यं यत् पथ्यं
तव पाण्डव । मावमंस्था महाबाहो कर्णमाहवशोभिनम् ॥ २३ ॥
कर्णो हि बलवान् दृप्तः कृतास्त्रश्च महारथः । कृती च चित्रयोधी
च देशकालस्य कोविदः ॥ २४ ॥ बहुनात्र किमुक्तेन संक्षेपाच्छृणु
पाण्डव । त्वत्समं त्वद्विशिष्टं वा मन्ये कर्णं महारथम् । परमं
यत्नमास्थाय त्वया वध्यो महाहवे ॥ २५ ॥ तेजसा वह्निसदृशो
वायुवेगसमो जवे । अन्तकप्रतिमः कोपे सिंहसंहननो बली ॥२६॥
अष्टरत्निर्महाबाहुर्व्यूढोरस्कः सुदुर्जयः । अभिमानी च शूरश्च
प्रवीरः प्रियदर्शनः ॥ २७ ॥ सर्वैर्योधगुणैर्युक्तो मित्राणामभय-

क्रूरः। सततं पाण्डवद्वेषी धार्त्तराष्ट्रहिते रतः ॥ २८ ॥ सर्वै-
रवध्यो राधेयो देवैरपि सवासवैः। ऋते त्वामिति मे बुद्धिस्तदद्य
जहि सूतजम् ॥ २९ ॥ देवैरपि हि संयत्तैर्विभ्रद्भिर्मांसशोणि-
तम्। अशक्यः स रथो जेतुं सर्वैरपि युयुत्सुभिः ॥ ३० ॥ दुरा-
त्मानं पापवृत्तं नृशंसं दुष्टप्रज्ञं पाण्डवेयेषु नित्यम्। हीनस्वार्थं
पाण्डवेयैर्विरोधे हत्वा कर्णं निश्चितार्थो भवाद्य ॥ ३१ ॥ तं सूत-
पुत्रं रथिनां वरिष्ठं निष्कालिकं कालवशं नयाद्य। अवजानाति
हि पाण्डुपुत्रानसौ दर्पात् सूतपुत्रो दुरात्मा ॥ ३२ ॥ आत्मानं
मन्यते वीरं येन पापः सुयोधनः। तमद्य मूलं पापानां जहि
कौन्तेय धनञ्जय ॥ ३३ ॥ खड्गजिह्वं धनुरास्यं शरदंष्ट्रं तर-
स्विनम्। दृप्तं पुरुषशार्दूलं जहि कर्णं धनञ्जय ॥ ३४ ॥ अह-
न्त्वामनुजानामि वीर्य्येण च बलेन च। जहि कर्णं रणे शूरं
मातङ्गमिव केशरी ॥ ३५ ॥ यस्य वीर्य्येण वीर्य्यं ते धार्त्तराष्ट्रो-
ऽवमन्यते। तमद्य पार्थ संग्रामे कर्णं वैकर्त्तनं जहि ॥ ३६ ॥

इति कर्णपर्वणि कृष्णार्जुनसंवादे द्विसप्ततोऽध्यायः ॥ ॥

---

सञ्जय उवाच। ततः पुनरमेयात्मा केशवोऽर्जुनमब्रवीत्।
कृतसङ्कल्पमायान्तं वधे कर्णस्य भारत ॥ १ ॥ अद्य सप्तदशाहानि
वर्त्तमानस्य भारत। विनाशस्यातिघोरस्य नरवारणवाजिनाम्
॥ २ ॥ भूत्वा हि विपुला सेना तावकानां परैः सह। अन्योऽन्यं
समरं प्राप्य किञ्चिच्छेषा विशाम्पते ॥ ३ ॥ भूत्वा हि कौरवाः
पार्थ प्रभूतगजवाजिनः। त्वां वै शत्रुं समासाद्य विनष्टा रण-
मूर्द्धनि ॥ ४ ॥ एते तु पृथिवीपालाः सृञ्जयाश्च समागताः। त्वां
समासाद्य दुर्द्धर्षं पाण्डवाश्च व्यवस्थिताः ॥ ५ ॥ पाञ्चालैः पाण्डवै-
र्मत्स्यैः कारूषैश्चेदिभिः सह। त्वया गुप्तैरमित्रघ्न कृतः शत्रुगण-

च्युतः ॥ ६ ॥ को हि शक्तो रणे जेतुं कौरवांस्तात सङ्गतान् ।
अन्यत्र पाण्डवान् युद्धे त्वया गुप्तान् महारथान् ॥ ७ ॥ शक्तस्त्वं
हि रणे जेतुं ससुरासुरमानुषान् । त्रौल्लोक्यान् समरे युक्तान्
किं पुनः कौरवं बलम ॥ ८ ॥ भगदत्तञ्च राजानं कोऽन्यः शक्त-
स्त्वया विना । जेतुं पुरुषशार्दूल योऽपि स्याद्वासवोपमः ॥ ९ ॥
तथेमां विपुलां सेनां गुप्तां पार्थ त्वयानघ । न शेकुः पार्थिवाः
सर्व्वे चक्षुर्भिरपि वीक्षितुम् ॥ १० ॥ तथैव सततं पार्थ रक्षिताभ्यां
त्वया रणे । धृष्टद्युम्नशिखण्डिभ्यां भीष्मद्रोणौ निपातितौ ॥ ११ ॥
को हि शक्तो रणे पार्थ भारतानां महारथौ । भीष्मद्रोणौ युधा
जेतुं शक्रतुल्यपराक्रमौ ॥ १२ ॥ कोहि शान्तनवं भीष्मं द्रोणं
वैकर्त्तनं कृपम् । द्रौणिञ्च सौमदत्तिञ्च कृतवर्म्माणमेव च ॥ १३ ॥
सैन्धवं मद्रराजानं राजानञ्च सुयोधनम । वीरान् कृतास्त्रान्
समरे सर्व्वानेवानिवर्त्तिन ॥ १४ ॥ अक्षौहिणीपतीनुग्रान् संह-
तान् युद्धदुर्म्मदान् । त्वामृते पुरुषव्याघ्र जेतुं शक्तः पुमानिह ॥१५॥
श्रेण्यश्च बहुलाः क्षीणाः प्रदीर्णाश्वरथद्विपाः । नानाजनपदा-
श्चोग्राः क्षत्रियाणाममर्षिणाम् ॥ १६ ॥ गोवासदासमीयानां वसा-
तीनाञ्च भारत । प्राच्यानां वाटधानानां भोजानाञ्चाभिमानिनाम्
॥ १७ ॥ उदीर्णाश्वगजा सेना ब्रह्मक्षत्रस्य भारत । त्वां समा-
साद्य निधनं गता भीमञ्च भारत ॥ १८ ॥ उग्राश्च भीमकर्म्माण-
स्तुखारा यवनाः खशाः । दार्व्वाभिसारा दरदाः शका रमठ-
तङ्गनाः ॥ १९ ॥ अन्ध्रकाश्च पुलिन्दाश्च किरातांश्चोग्रविक्रमाः ।
म्लेच्छाश्च पार्व्वतीयाश्च सागरानूपवासिनः ॥ २० ॥ संरम्भिणो
युद्धशौण्डा बलिनो दण्डपाणयः । एते सुयोधनस्यार्थे संरब्धाः
कुरुभिः सह । न शक्या युधि निर्जेतुं त्वदन्येन परन्तप ॥ २१ ॥
धार्त्तराष्ट्रमुदग्रं हि व्यूढं दृष्ट्वा महद्बलम् । यदि त्वं न भवेस्त्राता
प्रतीयात् को नु मानवः ॥ २२ ॥ तत् सागरमिवोद्धूतं रजसा

संवृतं बलम्। विद्राव्य पाण्डवैः क्रुद्धस्त्वया गुप्तैर्हतं विभो॥२३॥
मागधानामधिपतिर्जयत्सेनो महाबलः। अद्य सप्तैव चाहानि
हतः संख्येऽभिमन्युना ॥ २४ ॥ ततो दशसहस्राणि गजानां
भीमकर्मणाम्। जघान गदया भीमस्तस्य राज्ञः परिच्छदम् ॥२५॥
ततोऽन्येऽभिहता नागा रथाश्च शतशो बलात् ॥ २६ ॥ तदेवं
समरे पार्थ वर्त्तमाने महाभये। भीमसेनं समासाद्य त्वाञ्च पाण्डव
कौरवाः। सवाजिरथमातङ्गा मृत्युलोकमितो गताः ॥ २७॥
तथा सेनामुखे तव निहते पार्थ पाण्डवाः। भीष्मः प्रासृजदुग्राणि
शरजालानि मारिष ॥ २८॥ स चेदिकाशिपाञ्चालान् करूषा-
न्मत्स्यकेकयान्। शरैः प्रच्छाद्य निधनमनयत् परमास्त्रवित् ॥२९॥
तस्य चापच्युतैर्बाणैः परदेहविदारणैः। पूर्णमाकाशमभवत् रुक्म-
पुङ्खैरजिह्मगैः॥ ३०॥ हन्याद्दशसहस्राणि एकैकेन तु मुष्टिना।
लक्षं नरद्विपान् हत्वा चनेतान् स महाबलान् ॥ ३१ ॥ गत्या
दशस्या ते गत्वा जघ्नुर्वाजिरथद्विपान्। हित्वा नवगतीर्दुष्टाः स
बाणानाहवेऽत्यजत् ॥ ३२ ॥ दिनानि दश भीष्मेण निघ्नता तावकं
बलम्। शून्याः कृता रथोपस्था हताश्च गजवाजिनः ॥ ३३ ॥
दर्शयित्वात्मनो रूपं रुद्रोपेन्द्रसमं युधि। पाण्डवानामनीकानि
निगृह्यासौ व्यशातयत्॥ ३४॥ विनिघ्नन् पृथिवीपालांश्चेदिपाञ्चाल-
केकयान्। अदहत् पाण्डवीं सेनां रथाश्वगजसंकुलाम्। मज्जन्त-
मप्लवे मन्दमुज्जिहीर्षुः सुयोधनम् ॥ ३५॥ तथा चरन्तं समरे
तपन्तमिव भास्करम्। पदातिकोटिसाहस्राः प्रवरायुधपाणयः।
न शेकुः सृञ्जया द्रष्टुं तथैवान्ये महीक्षितः ॥ ३६॥ विचरन्तं तथा
तन्तु संग्रामे जितकाशिनम्। सर्वोद्योगेन महता पाण्डवाः सम-
भिद्रवन् ॥ ३७॥ स तु विद्राव्य समरे पाण्डवान् सृञ्जयानपि।
एक एव रणे भीष्म एकवीरत्वमागतः ॥ ३८॥ तं शिखण्डी
समासाद्य त्वया गुप्तो महाव्रतम्। जघान पुरुषव्याघ्रं शरैः

सन्नतपर्वभिः ॥ ३९ ॥ स एष पतितः शेते शरतल्पे पितामहः ।
त्वां प्राप्य पुरुषव्याघ्रं वृत्रः प्राप्येव वासवम् ॥ ४० ॥ द्रोणः पञ्च
दिनान्युग्रो विधम्य रिपुवाहिनीम् । कृत्वा व्यूहमभेद्यञ्च पात-
यित्वा महारथान् ॥ ४१ ॥ जयद्रथस्य समरे कृत्वा रक्षां महा-
रथः । अन्तकप्रतिमश्चोग्रो रात्रियुद्धेऽदहत् प्रजाः ॥ ४२ ॥ दग्ध्वा
योधाञ्छरैर्वीरो भारद्वाजः प्रतापवान् । धृष्टद्युम्नं समासाद्य स
गतः परमां गतिम् ॥ ४३ ॥ यदि चाद्य भवान् युद्धे सूतपुत्रमुखा-
न्रथान् । नावारयिष्यद् संग्रामे न स्म द्रोणो व्यनङ्क्षत ॥ ४४ ॥
भवता तु बलं सर्वं धार्त्तराष्ट्रस्य वारितम् । ततो द्रोणो हतो
युद्धे पार्षतेन धनञ्जय ॥ ४५ ॥ क एवान्यो रणे कुर्य्यात्त्वदन्यः
क्षत्रियो युधि । यादृशं ते कृतं पार्थ जयद्रथवधं प्रति ॥ ४६ ॥
निवार्य्य सेनां महतीं हत्वा शूरांश्च पार्थिवान् । निहतः सैन्धवो
राजा त्वयास्त्रबलतेजसा ॥ ४७ ॥ आश्चर्य्यं सिन्धुराजस्य वधं
जानन्ति पार्थिवाः । अनाश्चर्य्यं हि तत्त्वत्तस्त्वं हि पार्थ महा-
रथः ॥ ४८ ॥ त्वां हि प्राप्य रणे क्षत्रमेकाहादिति भारत ।
नश्यमानमहं युक्तं मन्ये यमिति मे मतिः ॥ ४९ ॥ सेयं पार्थ चमू-
र्घोरा धार्त्तराष्ट्रस्य संयुगे । हतसर्वस्ववीरा हि भीष्मद्रोणौ यदा
हतौ ॥ ५० ॥ शीर्णप्रवरयोधाद्य हतवाजिरथद्विपा । हीना
सूर्य्येन्दुनक्षत्रैर्द्यौरिवाभाति भारती ॥ ५१ ॥ विध्वस्ता हि रणे
पार्थ सेनेयं भीमविक्रमा । आसुरीव पुरा सेना शक्रस्येव परा-
क्रमैः ॥ ५२ ॥ तेषां हतावशिष्टास्तु सन्ति पञ्च महारथाः ।
अश्वत्थामा कृतवर्मा कर्णो मद्राधिपः कृपः ॥ ५३ ॥ तांस्त्वमद्य
नरव्याघ्र हत्वा पञ्च महारथान् । हतामित्रः प्रयच्छोर्वीं राज्ञे
सद्वीपपत्तनाम् ॥ ५४ ॥ साकाशजलपातालां सपर्वतमहावनाम् ।
प्राप्नोत्वमितवीर्य्यश्रीरद्य पार्थो वसुन्धराम् ॥ ५५ ॥ एतां पुरा
विष्णुरिव हत्वा दैतेयदानवान् । प्रयच्छ मेदिनीं राज्ञे शक्रायेव

यथा हरिः ॥ ५६ ॥ अद्य मोदन्तु पाञ्चाला निहतेष्वरिषु त्वया । विष्णुना निहतेष्वाजौ दानवेष्विव देवताः ॥ ५७ ॥ यदि वा द्विपदां श्रेष्ठं द्रोणं मानयतो गुरुम् । अश्वत्थाम्नि कृपा तेऽस्ति कृपे चाचार्य्यगौरवात् ॥ ५८ ॥ अत्यन्तापचितान् बन्धून् मानयन् मातृबान्धवान् । कृतवर्म्माणमासाद्य न नेष्यसि यमक्षयम् ॥ ५९ ॥ भ्रातरं मातुरासाद्य शल्यं मद्रजनाधिपम् । यदि त्वमरविन्दाक्ष दयावान्न जिघांससि ॥ ६० ॥ इमं पापमतिं क्षुद्रमत्यन्तं पाण्डवान् प्रति । कर्णमद्य नरश्रेष्ठ जह्याशु निशितैः शरैः ॥ ६१ ॥ एतत्ते सुकृतं कर्म नात्र किञ्चन युज्यते । वयमप्यनुजानीमो नात्र दोषोऽस्ति कश्चन ॥ ६२ ॥ दहने यत् सपुत्राया निशि मातुस्तवानघ । द्यूतार्थे यच्च युष्मासु प्रावर्त्तत सुयोधनः । तस्य सर्वस्य दुष्टात्मा कर्णो वै मूलमित्युत ॥ ६३ ॥ कर्णाद्धि मन्यते त्राणं नित्यमेव सुयोधनः । ततो मामपि संरब्धो निग्रहीतुं प्रचक्रमे ॥ ६४ ॥ स्थिरा बुद्धिर्नरेन्द्रस्य धार्त्तराष्ट्रस्य मानद । कर्णः पार्थान्रणे सर्वान् विजेष्यति न संशयः ॥ ६५ ॥ कर्णमाश्रित्य कौन्तेय धार्त्तराष्ट्रेण विग्रहः । रोचितो भवता सार्द्धं जानताऽपि बलं तव ॥ ६६ ॥ कर्णोऽपि भाषते नित्यमहं पार्थान् समा[illegible]न् । वासुदेवञ्च दाशार्हं विजेष्यामि महारथम् ॥ ६७ ॥ प्रोत्साहयन् दुरात्मानं धार्त्तराष्ट्रं सुदुर्मतिः । समितौ गर्ज्जते कर्णस्तमद्य जहि भारत ॥ ६८ ॥ यच्च युष्मासु पापं वै धार्त्तराष्ट्रः प्रयुक्तवान् । तत्र सर्वत्र दुष्टात्मा कर्णः पापमतिर्मुखम् ॥ ६९ ॥ यच्च तद्धार्त्तराष्ट्रस्य क्रूरैः षड्भिर्महारथैः । अपश्यं निहतं वीरं सौभद्रमृषभेक्षणम् ॥ ७० ॥ द्रोणद्रौणिकृपान् वीरान् कम्पयन्तं नरर्षभान् । निर्मनुष्यांश्च मातङ्गान् विरथांश्च महारथान् ॥ ७१ ॥ व्यश्वारोहांश्च तुरगान् पत्तीन् व्यायुधजीवितान् । कुर्वन्तमृषभस्कन्धं कुरुवृष्णियशस्करम् ॥ ७२ ॥ विधमन्तमनीकानि व्यथयन्तं

महारथान् मनुष्यवाजिमातङ्गान् प्रहिण्वन्तं यमक्षयम् ॥ ७३ ॥ शरैः सौभद्रमायान्तं दहन्तमरिवाहिनीम् । तस्मे दहति गात्राणि सखि सत्येन ते शपे ॥ ७४ ॥ यत्तत्रापि च दुष्टात्मा कर्णोऽभ्यद्रुह्यत प्रभो । अशक्नुवंश्चाभिमन्योः पार्थ स्थातुं रणेऽग्रतः ॥ ७५ ॥ सौभद्रशरनिर्भिन्नो विसंज्ञः शोणितोक्षितः । निःश्वसन् क्रोधसंदीप्तो विमुखः सायकार्दितः ॥ ७६ ॥ अपयानकृतोत्साहो निराशश्चापि जीविते । स्थितः स विह्वलः सङ्ख्ये प्रहारजनितश्रमः ॥७७॥ अथ द्रोणस्य समरे तत्कालसदृशं तदा । श्रुत्वा कर्णो वचः क्रूरं ततश्चिच्छेद कार्मुकम् ॥ ७८ ॥ ततश्छिन्नायुधं तेन रणे पञ्च महारथाः । तञ्चैव निकृतिप्रज्ञाः प्राहनञ्छरवृष्टिभिः ॥ ७९ ॥ तस्मिन् विनिहते वीरे सर्वेषां दुःखमाविशत् । प्राहसत् स तु दुष्टात्मा कर्णः स च सुयोधनः ॥ ८० ॥ यच्च कर्णोऽब्रवीत् कृष्णां सभायां परुषं वचः । प्रमुखे पाण्डवेयानां कुरूणाञ्च नृशंसवत् ॥ ८१ ॥ विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः । पतिमन्यं पृथुश्रोणि वृणीष्व मृदुभाषिणि ॥ ८२ ॥ एषा त्वं धृतराष्ट्रस्य दासीभूता निवेशनम् । प्रविशाराालपक्ष्माक्षि न सन्ति पतयस्तव ॥ ८३ ॥ पाण्डवाः प्रभवन्त्यद्य न ते कृष्णे कथञ्चन । दासभार्य्यासि पाञ्चालि स्वयं दासीति शोभने ॥ ८४ ॥ अद्य दुर्य्योधनो ह्येकः पृथिव्यां नृपतिः स्मृतः । सर्वे तस्य महीपाला योगक्षेममुपासते ॥ ८५ ॥ पश्येदानीं यथा भद्रे विनष्टान् पाण्डवान् समम् । अन्योऽन्यं समुदीक्षन्ते धार्त्तराष्ट्रस्य तेजसा ॥ ८६ ॥ व्यक्तं षण्ढतिला ह्येते निरये च निमज्जिताः । प्रेष्यत्वमपि राजेन्द्रमुपयास्यन्ति कौरवम् ॥ ८७ ॥ इत्युक्तवानधर्मज्ञस्तदा परमदुर्मतिः । पापः पापं वचः कर्णः शृण्वतस्तव भारत ॥ ८८ ॥ अद्य पापस्य तद्वाक्यं सुवर्णविकृताः शराः । शमयन्तु शिलाधौतास्त्वयास्ता जीवितच्छिदः ॥ ८९ ॥ यानि चान्यानि दुष्टात्मा पापानि

कृतवांस्त्वयि। तान्यद्य जीवितस्यास्य शमयन्तु शरास्तव ॥ ९० ॥
गाण्डीवप्रहितान् घोरानद्य गात्रैः स्पृशञ्छरान्। कर्णः स्मरतु
दुष्टात्मा वचनं द्रोणभीष्मयोः ॥ ९० ॥ सुवर्णपुङ्खा नाराचाः शत्रुघ्ना
वैद्युतप्रभाः। त्वयास्तास्तस्य मर्माणि भित्त्वा पास्यन्ति शोणितम्
॥ ९२ ॥ उग्रास्त्वद्भुजनिर्मुक्ता मर्म भित्त्वा महाशराः। अद्य
कर्णं महावेगाः प्रेषयन्तु यमक्षयम् ॥ ९३ ॥ अद्य हाहाकृतो
दीना विषण्णास्त्वच्छरार्दितम्। प्रपतन्तं रथात् कर्णं पश्यन्तु वसुधा-
धिपाः ॥ ९४ ॥ अद्य शोणितसंमग्नं शयानं पतितं भुवि। अप-
विद्धायुधं कर्णं दीनाः पश्यन्तु बान्धवाः ॥ ९५ ॥ हस्तिकक्षो महा-
नस्य भल्लेनोन्मथितस्त्वया। प्रकम्पमानः पततु भूमावाधिरथेर्ध्वजः
॥ ९६ ॥ त्वया शरशतैश्छिन्नं रथं हेमविभूषितम्। हतयोधामुत्सृज्य-
मुत्सृज्य भीतः शल्यः पलायताम् ॥ ९७ ॥ ततः सुयोधनो दृष्ट्वा
हतमाधिरथिं त्वया। निराशो जीविते त्वद्य राज्ये चैव भवत्वरिः
॥ ९८ ॥ एष वै तावकान् पार्थ कर्णो हन्ति स्म सायकैः। शत-
क्रतुसमो वीर्य्ये शङ्करप्रतिमोऽपि वा ॥ ९९ ॥ एते द्रवन्ति पाञ्चाला
वध्यमानाः शितैः शरैः। कर्णेन भरतश्रेष्ठ पाण्डवानुज्जिहीर्षवः
॥ १०० ॥ पाञ्चालान् द्रौपदेयांश्च धृष्टद्युम्नशिखण्डिनौ। धृष्ट-
द्युम्नतनूजांश्च शतानीकञ्च नाकुलिम् ॥ १०१ ॥ नकुलं सहदेवञ्च
दुर्मुखं जनमेजयम्। सुधर्माणं सात्यकिञ्च विद्धि कर्णवशं गतान्
॥ १०२ ॥ अभ्याहतानां कर्णेन पाञ्चालानां महारणे। श्रूयते
निनदो घोरस्त्वद्बन्धूनां परन्तप ॥ १०३ ॥ न त्वेव भीताः पाञ्चालाः
कथञ्चित् स्युः पराङ्मुखाः। न हि मृत्युं महेष्वासा गणयन्ति
महारणे ॥ १०४ ॥ य एकः पाण्डवीं सेनां शरौघैः समवेष्टयत्।
तं समासाद्य पाञ्चाला भीष्मं नासन् पराङ्मुखाः ॥ १०५ ॥ तथा
ज्वलन्तमस्त्राग्निं गुरुं सर्वधनुष्मताम्। निर्दहन्तञ्च समरे दुर्द्धर्षं
द्रोणमञ्जसा ॥ १०६ ॥ ते नित्यमुदिता जेतुं मृधे शत्रुमरिन्दम।

न आत्माभिरमभीताः पाञ्चालाः स्युः पराङ्मुखाः ॥ १०७ ॥ तेषा-
मापततां शूरः पाञ्चालानां तरस्विनाम्। आदत्तेऽसून् शरैः कर्णः
पतङ्गानामिवानलः ॥ १०८ ॥ तांस्तथाभिमुखान् वीरान् मित्रार्थे
त्यक्तजीवितान्। क्षयं नयति राधेयः पाञ्चालाञ्छतशो रणे
॥ १०९ ॥ तद्भारत महेष्वासानगाधे मज्जतोऽप्लवे। कर्णार्णवे
प्लवो भूत्वा पाञ्चालांस्त्रातुमर्हसि ॥ ११० ॥ अस्त्रं हि रामात् कर्णेन
भार्गवादृषिसत्तमात्। यदुपात्तं महाघोरं तस्य रूपमुदीर्य्यते
॥ १११ ॥ तापनं सर्वसैन्यानां घोररूपं सुदारुणम्। समावृत्य
महासेनां ज्वलितं स्वेन तेजसा ॥ ११२ ॥ एते चरन्ति संग्रामे
कर्णचापच्युताः शराः। भ्रमराणामिव व्राताास्तापयन्तः स्म ताव-
कान् ॥ ११३ ॥ एते द्रवन्ति पाञ्चाला दिक्षु सर्वासु भारत।
कर्णास्त्रं समरे प्राप्य दुर्निवार्य्यमनात्मभिः ॥ ११४ ॥ एष भीमो
दृढक्रोधो वृतः पार्थ समन्ततः। सृञ्जयैर्योधयन् कर्णं पीड्यते
निशितैः शरैः ॥ ११५ ॥ पाण्डवान् सृञ्जयांश्चैव पाञ्चालांश्चैव
भारत। हन्यादुपेक्षितः कर्णो रोगो देहमिवागतः ॥ ११६ ॥
नान्यं त्वत्तो हि पश्यामि योधं यौधिष्ठिरे बले। यः समासाद्य
राधेयं स्वस्तिमानाव्रजेद् गृहान् ॥ ११७ ॥ तमद्य निशितैर्बाणै-
र्विनिहत्य नरर्षभ। यथाप्रतिज्ञं पार्थ त्वं कृत्वा कीर्त्तिमवाप्नुहि
॥ ११८ ॥ त्वं हि शक्तो रणे जेतुं सकर्णानपि कौरवान्। नान्यो
युधि युधां श्रेष्ठ सत्यमेतद्ब्रवीमि ते ॥ ११९ ॥ एतत् कृत्वा महत्
कर्म हत्वा कर्णं महारथम्। कृतार्थः सफलः पार्थ सुखी भव
नरोत्तम ॥ १२० ॥

इति कर्णपर्वणि अर्जुनं प्रति श्रीकृष्णोपदेशे
त्रिसप्ततोऽध्यायः ॥ ७३ ॥

---

सञ्जय उवाच । स केशवस्य बीभत्सुः श्रुत्वा भारत भाषि-
तम् । विशोकः संप्रहृष्टश्च क्षणेन समपद्यत ॥ १ ॥ ततो ज्या-
मभिमृज्याशु व्याक्षिपत् गाण्डिवं धनुः । दध्रे कर्णविनाशाय
केशवञ्चाभ्यभाषत ॥ २ ॥ त्वया नाथेन गोविन्द ध्रुव एव जयो
मम । प्रसन्नो यस्य मेऽद्य त्वं लोके भूतभविष्यवित् ॥ ३ ॥ त्वत्-
सहायो ह्यहं कृष्ण त्रींल्लोकान् वै समागतान् । प्रापयेयं परं
लोकं किमु कर्णं महाहवे ॥ ४ ॥ पश्यामि द्रवतीं सेनां पाञ्चा-
लानां जनार्द्दन । पश्यामि कर्णं समरे विचरन्तमभीतवत् ॥ ५ ॥
भार्गवास्त्रञ्च पश्यामि विचरन्तं समन्ततः । सृष्टं कर्णेन वार्ष्णेय
शक्रेणेव महाशनिम् ॥ ६ ॥ अयं खलु स संग्रामो यत्र कर्णो मया
हतम् । कथयिष्यन्ति भूतानि यावद्भूमिर्द्धरिष्यति ॥ ७ ॥ अद्य
कृष्ण विकर्णा मे कर्णं नेष्यन्ति मृत्यवे । गाण्डीवमुक्ताः क्षिण्वन्तो
मम हस्तप्रचोदिताः ॥ ८ ॥ अद्य राजा धृतराष्ट्रः स्वां बुद्धिमव-
मंस्यते । दुर्य्योधनमराज्यार्हं यया राज्येऽभ्यषेचयत् ॥ ९ ॥ अद्य
राज्यात् सुखाच्चैव श्रियो राष्ट्रात् तथा पुरात् । पुत्रेभ्य महा-
बाहो धृतराष्ट्रो विमोक्ष्यते ॥ १० ॥ अद्य दुर्य्योधनो राज्यात्
जीविताच्च निराशवान् । भविष्यति हते कर्णे कृष्ण सत्यं ब्रवीमि
ते ॥ ११ ॥ अद्य दृष्ट्वा मया कर्णं शरैर्विशकलीकृतम् । पुरा
देवासुरे युद्धे वृत्रं वलभिदा यथा । स्मरतां तव वाक्यानि शमं
प्रति जनेश्वरः ॥ १२ ॥ अद्यासौ सौबलः कृष्ण ग्लहान् जानातु
वै शरान् । दुरोदरञ्च गाण्डीवं मण्डलञ्च रथं मम ॥ १३ ॥ अद्य
कुन्तीसुतस्याहं दृढं राज्ञः प्रजागरम् । व्यपनेष्यामि गोविन्द
हत्वा कर्णं शितैः शरैः ॥ १४ ॥ अद्य कुन्तीसुतो राजा हते सूत-
सुते मया । सुप्रहृष्टमनाः प्रीतिश्चिरं सुखमवाप्स्यति ॥ १५ ॥ अद्य
चाहमनाधृष्यं केशवाप्रतिमं शरम् । उत्स्रक्ष्यामीह यः कर्णं
जीविताद्भ्रंशयिष्यति ॥ १६ ॥ यस्यैतद्वै व्रतं मह्यं वधे किल

दुरात्मनः । पार्थो न श्रावयी तावत् यावज्जन्यां न फाल्गुनम् ॥ १७॥
मृषा कृत्वा व्रतं तस्य पापस्य मधुसूदन  धार्तराष्ट्राः शरात् कार्यं
शरैः सन्नतपर्वभिः ॥ १८ ॥ योऽसौ रणे नरं नान्यं पृथिव्या-
मभिमन्यते । तस्याद्य सूतपुत्रस्य भूमिः पास्यति शोणितम् ॥ १९॥
अपतिश्चंसि कृष्णेति सूतपुत्रो यदब्रवीत् । धृतराष्ट्रमते कर्णः
श्लाघमानः स्वकान् गुणान् ॥ २० ॥ अनृतं तत् करिष्यन्ति मामका-
निशिताः शराः । आशीविषा इव क्रुद्धास्तस्य पास्यन्ति शोणितम्
॥ २१ ॥ मया हस्तवता मुक्ता नाराचा वैद्युतत्विषः । गाण्डीव-
सृष्टा दास्यन्ति कर्णस्य परमां गतिम् ॥ २२ ॥ अद्य तपस्यति
राधेयः पाञ्चालीं यत्तदाब्रवीत् । सभामध्ये वचः क्रूरं कुत्सयन्
पाण्डवान् प्रति ॥ २३ ॥ ये वै षण्ढतिलास्तत्र भवितारोऽद्य ते
तिलाः । हते वैकर्त्तने कर्णे सूतपुत्रे दुरात्मनि ॥ २४ ॥ अहं
वः पाण्डुपुत्रेभ्यस्त्रास्यामीति यदब्रवीत । धृतराष्ट्रसुतान् कर्णः
श्लाघमानोत्मनो गुणान् । अनृतं तत् करिष्यन्ति मामका निशिताः
शराः ॥ २५ ॥ हन्ताहं पाण्डवान् सर्वान् सपुत्रानिति योऽब्रवीत् ।
तमद्य कर्णं हन्तास्मि मिषतां सर्वधन्विनाम् ॥ २६ ॥ तस्य वीर्य्ये
समाश्वस्य धार्त्तराष्ट्रो महामनाः । अवामन्यत दुर्बुद्धिर्नित्यमस्मान्
दुरात्मवान् । तमद्य कर्णं राधेयं हन्तास्मि मधुसूदन ॥ २७ ॥
अद्य कर्णे हते कृष्ण धार्त्तराष्ट्राः सराजकाः । विद्रवन्तु दिशो
भीताः सिंहत्रस्ता मृगा इव ॥ २८ ॥ अद्य दुर्य्योधनो राजा
आत्मानञ्चानुशोच्यताम् । हते कर्णे मया सङ्ख्ये सपुत्रे ससुहृज्जने
॥ २९ ॥ अद्य कर्णं हतं दृष्ट्वा धार्त्तराष्ट्रोऽत्यमर्षणः । जानातु
मां रणे कृष्ण प्रवरं सर्वधन्विनाम् ॥ ३० ॥ सपुत्रपौत्रं सामात्यं
सभृत्यञ्च निराश्रयम् । अद्य राज्ये करिष्यामि धृतराष्ट्रं जने-
श्वरम् ॥ ३१ ॥ अद्य कर्णस्य चक्राङ्गाः क्रव्यादाश्च पृथग्विधाः ।
शरैश्छिन्नानि गात्राणि विहरिष्यन्ति केशव ॥ ३२ ॥ अद्य राधा-

सुतस्याहं संग्रामे मधुसूदन। शिरश्छेत्स्यामि कर्णस्य मिषतां सर्वधन्विनाम् ॥ ३३ ॥ अद्य तीक्ष्णैर्विपाठैश्च क्षुरैश्च मधुसूदन। रणे छेत्स्यामि गात्राणि राधेयस्य दुरात्मनः ॥ ३४ ॥ अद्य राजा महत् कृच्छ्रं सन्त्यक्ष्यति युधिष्ठिरः। सन्तापं मानसं वीरश्चिरं संभृतमात्मनः ॥ ३५ ॥ अद्य केशव राधेयमहं हत्वा सबान्धवम्। नन्दयिष्यामि राजानं धर्मपुत्रं युधिष्ठिरम् ॥ ३६ ॥ अद्याहमनुगान् कृष्ण कर्णस्य कृपणान् युधि। हन्ता ज्वलनसङ्काशैः शरैः सर्पविषोपमैः ॥ ३७ ॥ अद्याहं हेमकवचैर्गार्द्धपत्रैरजिह्मगैः। संस्तरिष्यामि गोविन्द वसुधां वसुधाधिपैः ॥ ३८ ॥ अद्याभिमन्योः शत्रूणां सर्वेषां मधुसूदन। प्रमथिष्यामि गात्राणि शिरांसि च शितैः शरैः ॥ ३९ ॥ अद्य निर्धार्त्तराष्ट्रां भ्रात्रे दास्यामि मेदिनीम्। निरर्जुनां वा पृथिवीं केशवानुचरिष्यसि ॥ ४० ॥ अद्याहमनृणः कृष्ण भविष्यामि धनुर्भृताम्। क्रोधस्य च कुरूणाञ्च शराणां गाण्डिवस्य च ॥ ४१ ॥ अद्य दुःखमहं मोक्ष्ये त्रयोदशसमार्ज्जितम्। हत्वा कर्णं रणे कृष्ण शम्बरं मघवानिव ॥ ४२ ॥ अद्य कर्णे हते युद्धे सोमकानां महारथाः। कृतं कार्य्यञ्च मन्यन्तां मित्रकार्य्यपरवो युधि ॥ ४३ ॥ न जाने कथं प्रीतिः शैनेयस्याद्य माधव। भविष्यति हते कर्णे मयि चापि जयाधिके ॥ ४४ ॥ अहं हन्ता रणे कर्णं पुत्रञ्चास्य महारथम्। प्रीतिं दास्यामि भीमस्य यमयोः सात्यकस्य च ॥ ४५ ॥ धृष्टद्युम्न-शिखण्डिभ्यां पाञ्चालानाञ्च माधव। अद्यानृण्यं गमिष्यामि हत्वा कर्णं महाहवे ॥ ४६ ॥ अद्य पश्यन्तु संग्रामे धनञ्जयममर्षणम्। युध्यन्तं कौरवान् सङ्ख्ये पातयन्तञ्च सूतजम् ॥ ४७ ॥ भवत्सकाशे वक्ष्ये च पुनरेवात्मसंस्तवम् ॥ ४८ ॥ धनुर्वेदे मत्समो नास्ति लोके पराक्रमे वा मम कोऽस्ति तुल्यः। को वाप्यन्यो मत्समोऽस्ति क्षमावांस्तथा क्रोधे सदृशोऽन्यो न मेऽस्ति ॥ ४९ ॥ अहं धनुष्मा-

गन्धर्व्वान् सुरांश्च सर्व्वाणि भूतानि च सङ्गतानि। सवाह्वीर्य्या- द्भयमैति परामवं मत्पौरुषं विद्धि परं परेभ्यः॥ ५०॥ शरार्च्चिषा गाण्डिवेनाहमेकः सर्व्वान् कुरून् वाह्लिकांश्चाभिपत्य। हिमात्यये कक्षगतो यथाग्निस्तथा दहेयं सगणान् प्रसह्य॥ ५१॥ पाणौ पृषत्का लिखिता ममैते धनुश्च दिव्यं विततं सवाणम्। पादौ च मे सरथौ सध्वजौ च न मादृशं युद्धगतं जयन्ति॥ ५२॥ इत्येव-मुक्ताच्युतमेकवीरः क्षिप्रं रिपुघ्नः शतजोपमाक्षः। भीमं मुमुक्षुः समरे प्रयातः कर्णस्य कायाच्च शिरो जिहीर्षुः॥ ५३॥

इति कर्णपर्व्वणि अर्ज्जुनात्मश्लाघायां चतुःसप्ततोऽध्यायः॥ ७४॥

---

धृतराष्ट्र उवाच। समागमे पाण्डवसृञ्जयानां महाभये मामकानामगाधे। धनञ्जये तात रणाय याते वभूव तद्युद्धमथो नु कीदृक्॥ १॥

सञ्जय उवाच। तेषामनीकानि वृहद्ध्वजानि रणे समृद्धानि समागतानि। गर्ज्जन्ति भेरीनिनदोन्मुखानि नादैर्यथा मेघगणास्तपान्ते॥ २॥ महागजाभ्राकुलमस्त्रतोयं वादित्रनेमीतलशब्द-वच्च। हिरण्यचित्रायुधविद्युतञ्च शरासिनाराचमहास्त्रधारम्॥ ३॥ तद्भीमवेगं रुधिरौघवाहि खड्गाकुलं क्षत्रिय जीवघाति। अनार्त्तवं क्रूरमनिष्टवर्षं वभूव तत् संहरणं प्रजानाम्॥ ४॥ एकं रथं संपरिवार्य्य मृत्युं नयन्त्यनेके च रथाः समेताः। एकस्तथैकं रथिनं रथाग्र्यस्तथा रथश्चापि रथाननेकान्॥ ५॥ तथा ससूतं सहयञ्च कश्चित् कश्चिद्रथी मृत्युवशं निनाय। निनाय चाप्येकगजेन कश्चि-द्यान् वहून् मृत्युवशं तथाश्वान्॥ ६॥ रथान् ससूतान् सहयान् गजांश्च सर्व्वानरीन्मृत्युवशं शरौघैः। निन्ये हयांश्चैव तथा ससादीन् पदातिसङ्घांश्च तथैव पार्थः॥ ७॥ कृपः शिखण्डी च रणे

समेतौ दुर्य्योधनं सात्यकिरभ्यगच्छत् । श्रुतश्रवा द्रौणिसुतेन सार्द्धं युधामन्युश्चित्रसेनेन सार्द्धम् ॥ ८ ॥ कर्णस्य पुत्रन्तु रथी सुषेणं समागतं सृञ्जयश्चोत्तमौजाः । गान्धारराजं सहदेवः क्षुधार्त्तो महर्षभं सिंह इवाभ्यधावत् ॥ ९ ॥ शतानीको नाकुलिः कर्णपुत्रं युयुधानो वृषसेनं शरौघैः । समार्पयत् कर्णपुत्रश्च शूरः पाञ्चालेयं शरवर्षैरनेकैः ॥ १० ॥ रथर्षभः कृतवर्म्माणमाच्छ माद्रीपुत्रो नकुलश्चित्रयोधी । पाञ्चालानामधिपो याज्ञसेनिः सेनापतिं कर्णमार्च्छत् ससैन्यम् ॥ ११ ॥ दुःशासनो भारत भारती च संशप्तकानां पृतना समृद्धा । भीमं रणे शस्त्रभृतां वरिष्ठं भीमं समार्च्छत्तमसह्यवेगम् ॥ १२ ॥ कर्णात्मजं तत्र जघान शूरस्तथाच्छिनच्चोत्तमौजाः प्रसह्य । तस्योत्तमाङ्गं निपपात भूमौ निनादयद्गां निनदेन खञ्च ॥ १३ ॥ सुषेणशीर्षं पतितं पृथिव्यां विलोक्य कर्णोऽथ तदार्त्तरूपः । क्रोधाद्धयांस्तस्य रथं ध्वजञ्च बाणैः सुधारैर्निशितैरकृन्तत् ॥ १४ ॥ स तूत्तमौजा निशितैः पृषत्कैर्विव्याध खड्गेन च भास्वरेण । पार्ष्णिं हयांश्चैव कृपस्य हत्वा शिखण्डिवाहं स ततोऽध्यरोहत् ॥ १५ ॥ कृपन्तु दृष्ट्वा विरथं रथस्थो नैच्छच्छरैस्ताड़यितुं शिखण्डी । तं द्रौणिरावार्य्य रथं कृपस्य समुज्जह्रे पङ्कगतां यथा गाम् ॥ १६ ॥ हिरण्यवर्म्मा निशितैः पृषत्कैस्तवात्मजानामनिलात्मजो वै । अतापयत् सैन्यमतीव भीमः काले शुचौ मध्यगतो यथार्कः ॥ १७ ॥

इति कर्णपर्व्वणि संकुलयुद्धे पञ्चसप्ततोऽध्यायः ॥ ७५ ॥

---

सञ्जय उवाच । अथ त्विदानीं तुमुले विमर्द्दे द्विषद्भिरेको बहुभिः समावृतः । महाभये सारथिमित्युवाच भीमश्चमूं वाहय धार्त्तराष्ट्रीम् । त्वं सारथे याहि जवेन वाहैर्नयाम्येतान् धार्त्त-

राष्ट्रान् यमाय ॥ १ ॥ सञ्चोदितो भीमसेनेन चैवं स सारथिः
पुत्रबलं त्वदीयम् । प्रायात्ततः सत्वरमुग्रवेगो यतो भीमस्तद्बलं
हन्तुमैच्छत् ॥ २ ॥ ततोऽपरे नागरथाश्वपत्तिभिः प्रत्युद्ययुस्तं
कुरवः समन्तात् । भीमस्य वाहाग्र्यमुदारवेगं समन्ततो बाण-
गणैर्निजघ्नुः ॥ ३ ॥ ततः शरानापततो महात्मा चिच्छेद बाणै-
स्तपनीयपुङ्खैः । ते वै निपेतुस्तपनीयपुङ्खा द्विधा त्रिधा भीम-
शरैर्निकृत्ताः ॥ ४ ॥ ततो राजन्नागरथाश्वयूनां भीमाहतानां
वरराजमध्ये । घोरो निनादः प्रबभौ नरेन्द्र वज्राहतानामिव
पर्वतानाम् ॥ ५ ॥ ते वध्यमानाश्च नरेन्द्रमुख्या निर्भिद्यन्तो भीम-
शरप्रवेकैः । भीमं समन्तात् समरेऽभ्यरोहन् वृक्षं शकुन्ता इव
जातपक्षाः ॥ ६ ॥ ततोऽभियाते तव सैन्ये स भीमः प्रादुश्चक्रे वेग-
मनन्तवेगः । यथान्तकाले क्षपयन् दिधक्षुर्भूतान्तकृत् काल इवात्त-
दण्डः ॥ ७ ॥ तस्यातिवेगस्य रणेऽतिवेगं नाशक्नुवन् वारयितुं
त्वदीयाः । व्यात्ताननस्यापततो यथैव कालस्य काले हरतः प्रजा
वै ॥ ८ ॥ ततो बलं भारत भारतानां प्रदह्यमानं समरे महा-
त्मना । भीतं दिशोऽकीर्य्यत भीमदृष्टं महानिलेनाभ्रगणो यथैव
॥ ९ ॥ ततो धीमान् सारथिमब्रवीद्बली स भीमसेनः पुनरेव
हृष्टः । सूताभिजानीहि स्वकान् परान् वा रथान् ध्वजांश्चापततः
समेतान् ॥ १० ॥ युध्यन् ह्यहं नाभिजानामि किञ्चिन्मा सैन्यं स्वं
छादयिष्ये पृषत्कैः । अरीन् विशोकाभिनिरीक्ष्य सर्वतो रथान्
ध्वजाग्राणि दुनोमि वै भृशम् ॥ ११ ॥ राजातुरो नागमद्यत्
किरीटी बहूनि दुःखान्यभियातोऽस्मि सूत । एतद्दुःखं सारथे
धर्म्मराजो यन्मां हित्वा यातवान् शत्रुमध्ये । नैनं जीवं नापि
जानाम्यजीवं वीभत्सुं वा तन्ममाद्यातिदुःखम् ॥ १२ ॥ सोऽहं
द्विषत्सैन्यमुदग्रकल्पं विनाशयिष्ये परमप्रतीतः । एवं निहत्या-
जिमध्ये समेतं प्रीतो भविष्यामि सह त्वयाद्य ॥ १३ ॥ सर्वां-

क्षीणान् सायकानामवेक्ष्य किं शिष्टं स्यात् सायकानां रथे मे। का वा जातिः किं प्रमाणञ्च तेषां ज्ञात्वा व्यक्तं तन्ममाचक्ष्व सूत ॥ १४ ॥

विशोक उवाच। षण्मार्गणानामयुतानि वीर क्षुराश्च भल्लाश्च तथायुताख्याः। नाराचानां द्वे सहस्रे च वीर त्रीण्येव च प्रदराणां स्म पार्थ। अस्त्यायुधं पाण्डवेयावशिष्टं न यद्वहेच्छकटं षड्गवीयम् ॥ १५ ॥ एतद्विद्वन् मुञ्च सहस्रशोऽपि गदासिबाहुद्रविणञ्च तेऽस्ति। प्रासाश्च खड्गाः शक्तयस्तोमराश्च मा भैषीस्त्वं संक्षयादायुधानाम् ॥ १६ ॥

भीम उवाच। सूताद्येमं पश्य भीमप्रमुक्तैः संछिन्दद्भिः पार्थिवानाशुवेगैः। छन्नं बाणैराहवं घोररूपं नष्टादित्यं मृत्युलोकेन तुल्यम् ॥ १७ ॥ अद्यैतद्वै विदितं पार्थिवानां भविष्यति ह्याकुमारञ्च सूत। निमग्नो वा समरे भीमसेनो ह्येकः कुरून् वा समरे व्यजैषीत् ॥ १८ ॥ सर्वे संख्ये कुरवो निष्पतन्तु मां वा लोकाः कीर्त्तयन्त्वाकुमारम्। सर्वानेकस्तानहं पातयिष्ये ते वा सर्वे भीमसेनं तुदन्तु ॥ १९ ॥ आशास्तारः कर्म चाप्युत्तमं ये तन्मे देवाः केवलं साधयन्तु। आयात्विहाद्यार्जुनः शत्रुघाती शक्रस्तूर्णं यज्ञ इवोपहूतः ॥ २० ॥ ईक्षस्वैतां भारतीं दीर्यमाणामेते कस्माद्विद्रवन्ते नरेन्द्राः। व्यक्तं धीमान् सव्यसाची नराग्र्यः सैन्यं ह्येतच्छादयत्याशु बाणैः ॥ २१ ॥ पश्य ध्वजांश्च द्रवतो विशोक नागान् हयान् पत्तिसङ्घांश्च संख्ये। रथान् विकीर्णान् शरशक्तिताडितान् पश्यस्वैतान्रथिनश्चैव सूत ॥ २२ ॥ आपूर्य्यते कौरवी चाप्यभीक्ष्णं सेना ह्यसौ सुभृशं हन्यमाना। धनञ्जयस्याशनितुल्यवेगैर्ग्रस्ता शरैः काञ्चनबर्हिवाजैः ॥ २३ ॥ एते द्रवन्ति स्म रथाश्वनागाः पदातिसङ्घानवमर्द्दयन्तः। संमुह्यमानाः कौरवाः सर्व एव द्रवन्ति नागा इव दावभीताः। हाहाकृताश्चैव रणे विशोक मुञ्चन्ति नादान् विपुलान् गजेन्द्राः ॥ २४ ॥

विशोक उवाच । किं भीमं नैनं त्वमिहाशृणोषि विष्फार्य्यतो गाण्डीवस्यातिघोषम् । क्रुद्धेन पार्थेन विकृष्यतोऽद्य कच्चिन्नेमौ तव कर्णौ विनष्टौ ॥ २५ ॥ सर्व्वे कामाः पाण्डव ते समृद्धाः कपिर्ह्येषो दृश्यते हस्तिसैन्ये । नीलाद्घनाद्विद्युतमुच्चरन्तीं तथा पश्य विस्फुरन्तीं धनुर्ज्याम् ॥ २६ ॥ कपिर्ह्यसौ दृश्यते सर्व्वतो वै ध्वजाग्रमारुह्य धनञ्जयस्य । वित्रासयन् द्विषत्सङ्घान् विमर्द्दे बिभेम्यस्मादात्मनैवाभिवीक्ष्य ॥ २७ ॥ विभ्राजते चातिमात्रं किरीटं विचित्रमेतच्च धनञ्जयस्य । दिवाकराभो मणिरेष दिव्यो विभ्राजते चैव किरीटसंस्थः ॥ २८ ॥ पार्श्वे भीमं पाण्डराभ्रप्रकाशं पश्यस्व शङ्खं देवदत्तं सुघोषम् । अभीशुहस्तस्य जनार्द्दनस्य विगाहमानस्य चमूं परेषाम् ॥ २९ ॥ रविप्रभं वज्रनाभं क्षुराभं पार्श्वे स्थितं पश्य जनार्द्दनस्य । चक्रं यशोवर्द्धनं केशवस्य सदार्च्चितं यदुभिः पश्य वीर ॥ ३० ॥ महाद्विपानां सरलद्रुमोपमाः करा निकृत्ताः प्रपतन्त्यमी क्षुरैः । किरीटिना ते च पुनः सवाजिनः शरैः प्रभिन्नाः कुलिशैरिवाद्रयः ॥ ३१ ॥ तथैव कृष्णस्य च पाञ्चजन्यं महार्हमेतद्द्विजराजवर्णम् । कौन्तेय पश्योरसि कौस्तुभञ्च जाज्वल्यमानं विजयां स्रजञ्च ॥ ३२ ॥ ध्रुवं रथाग्र्यः समुपैति पार्थो विद्रावयन् सैन्यमिदं परेषाम् । सिताभ्रवर्णैरसितप्रयुक्तैर्हयैर्महार्हैं रथिनां वरिष्ठः ॥ ३३ ॥ रथान् हयान् पत्तिगणांश्च सायकैर्विदारितान् पश्य पतन्त्यमी यथा । तवानुजेनामरराजतेजसा महावनानीव सुपर्णवायुना ॥ ३४ ॥ चतुःशतान् पश्य रथानिमान् हतान् सवाजिसूतान् समरे किरीटिना । महेषुभिः सप्तशतानि दन्तिनां पदातिसादींश्च हताननेकशः ॥ ३५ ॥ अयं समभ्येति तवान्तिकं बली निघ्नन् कुरूंश्चित्र इव ग्रहोऽर्जुनः । समृद्धकामोऽसि हतास्तवाहिता बलं तवायुश्च चिराय वर्द्धताम् ॥ ३६ ॥

भीम उवाच । ददानि ते ग्रामवरांश्चतुर्द्दश प्रियाख्याने सारथे

सुप्रसन्नः। दाशीमतश्चापि रथांश्च विंशतिं यदर्जुनं वेदयसे विशोक ॥ ३७ ॥

इति कर्णपर्वणि भीमविशोकसंवादे षट्सप्ततोऽध्यायः ॥ ७६ ॥

---

सञ्जय उवाच। श्रुत्वा च रथनिर्घोषं सिंहनादञ्च संयुगे।
अर्जुनः प्राह गोविन्दं शीघ्रं चोदय वाजिनः ॥ १ ॥ अर्जुनस्य
वचः श्रुत्वा गोविन्दोऽर्जुनमब्रवीत्। एष गच्छामि सुचिरं यत्र
भीमो व्यवस्थितः ॥ २ ॥ तं यान्तमश्वैर्हिमशङ्खवर्णैः सुवर्णमुक्ता-
मणिजालनद्धैः। जम्भं जिघांसुं प्रगृहीतवज्रं जयाय देवेन्द्र-
मिवोग्रमन्युम् ॥ ३ ॥ रथाश्वमातङ्गपदातिसङ्घा बाणस्वनैर्नेमि-
खुरस्वनैश्च। संनादयन्तो वसुधां दिशश्च क्रुद्धा नृसिंहा जय-
मभ्युदीयुः ॥ ४ ॥ तेषाञ्च पार्थस्य च मारिषासीद्देहासुपाप्मक्षपणं
सुयुद्धम्। त्रैलोक्यहेतोरसुरैर्यथासीद्देवस्य विष्णोर्जयतां वरस्य
क्षुरार्द्धचन्द्रैर्निशितैश्च भल्लैः शिरांसि तेषां बहुधा च बाहून् ॥ ६ ॥
क्षुरार्द्धचन्द्रैर्निशितैश्च भल्लैः शिरांसि तेषां बहुधा च बाहून् ॥ ॥
छत्राणि वालव्यजनानि केतूनश्वान्रथान् पत्तिगणान् द्विपांश्च। ते
पेतुरुर्व्यां बहुधा विरूपा वातप्रभग्नानि यथा वनानि ॥ ७ ॥
सुवर्णजालावतता महागजाः सवैजयन्तीध्वजयोधकल्पिताः।
सुवर्णपुङ्खैरिषुभिः समाचितास्चकाशिरे प्रज्वलिता यथाचलाः ॥ ८ ॥
विदार्य्य नागाश्वरथान् धनञ्जयः शरोत्तमैर्वासववज्रसन्निभैः। द्रुतं
ययौ कर्णजिघांसया तथा यथा मरुत्वान् बलभेदने पुरा ॥ ९ ॥
ततः स पुरुषव्याघ्रस्तव सैन्यमरिन्दमः। प्रविवेश महाबाहुर्मकरः
सागरं यथा ॥ १० ॥ तं दृष्ट्वा तावका राजन्रथपत्तिसमन्विताः।
गजाश्वसादिबहुलाः पाण्डवं समुपाद्रवन् ॥ ११ ॥ तेषामापततां
पार्थमारावः सुमहानभूत्। सागरस्येव क्षुब्धस्य यथा स्यात्

सलिलप्लवनः ॥ १२ ॥ ते तु तं पुरुषव्याघ्रं व्याघ्रा इव महारथाः ।
अभ्यद्रवन्त संग्रामे त्यक्त्वा प्राणकृतं भयम् ॥ १३ ॥ तेषामापततां
तत्र शरवर्षाणि मुञ्चताम् । अर्जुनो व्यधमत् सैन्यं महावातो
घनानिव ॥ १४ ॥ तेऽर्जुनं सहिता भूत्वा रथवंशैः प्रहारिणः ।
अभियाय महेष्वासा विव्यधुर्निशितैः शरैः ॥ १५ ॥ ततोऽर्जुनः
सहस्राणि रथवारणवाजिनाम् । प्रेषयामास विशिखैर्यमस्य सदनं
प्रति ॥ १६ ॥ ते वध्यमानाः समरे पार्थचापच्युतैः शरैः । तत्र तत्र
स्म लीयन्ते भये जाते महारथाः ॥ १७ ॥ तेषाञ्चतुःशतान् वीरान्
यतमानान् महारथान् । अर्जुनो निशितैर्बाणैरनयद्यमसादनम्
॥ १८ ॥ ते वध्यमानाः समरे नानालिङ्गैः शितैः शरैः । अर्जुनं
समभित्यज्य दुद्रुवुर्वै दिशो दश ॥ १९ ॥ तेषां शब्दो महानासीत्
द्रवतां वाहिनीमुखे । महौघस्येव जलधेर्गिरिमासाद्य दीर्य्यतः
॥ २० ॥ तान्तु सेनां भृशं त्रस्तां द्रावयित्वार्जुनः शरैः । प्रायाद-
भिमुखः पार्थः सूतानीकाय मारिष ॥ २१ ॥ तस्य शब्दो महा-
नासीत् परानभिमुखस्य वै । गरुड़स्येव पततः पन्नगार्थे यथा
पुरा ॥ २२ ॥ तन्तु शब्दमभिश्रुत्य भीमसेनो महाबलः । बभूव
परमप्रीतः पार्थदर्शनलालसः ॥ २३ ॥ श्रुत्वैव पार्थमायान्तं भीम-
सेनः प्रतापवान् । त्यक्त्वा प्राणान् महाराज सेनां तव ममर्द्द ह
॥ २४ ॥ स वायुवीर्य्यप्रतिमो वायुवेगसमो जवे । वायुवद्व्यचर-
द्भीमो वायुपुत्त्रः प्रतापवान् ॥ २५ ॥ तेनार्द्द्यमाना राजेन्द्र सेना
तव विशाम्पते । व्यभ्राम्यत महाराज भिन्ना नौरिव सागरे ॥२६॥
तान्तु सेनां तदा भीमो दर्शयन् पाणिलाघवम् । शरैरवचकर्त्तोग्रैः
प्रेषयिष्यन् यमक्षयम् ॥ २७ ॥ तत्र भारत भीमस्य बलं दृष्ट्वाति-
मानुषम् । व्यत्रस्यन्त रणे योधाः कालस्येव युगक्षये ॥ २८ ॥
तथार्द्दितान् भीमबलान् भीमसेनेन भारत । दृष्ट्वा दुर्य्योधनो
राजा इदं वचनमब्रवीत् ॥ २९ ॥ सैनिकांश्च महेष्वासान् योधांश्च

स्तोदिव राजेन्द्र छादयामास सायकैः। सौवलस्य बलं संख्ये
त्यक्त्वात्मानं महाबलः ॥ ६४ ॥ तस्याश्वांश्चतुरो हत्वा सूतं चैव
विशाम्पते। ध्वजं चिच्छेद भल्लेन त्वरमाणः पराक्रमी ॥ ६५ ॥
हताश्वं रथमुत्सृज्य त्वरमाणो नरोत्तमः। तस्थौ विस्फारयं-
श्चापं क्रोधरक्तेक्षणः श्वसन्। शरैश्च बहुधा राजन् भीममाच्छ्रैत
समन्ततः ॥ ६६ ॥ प्रतिहत्य तु वेगेन भीमसेनः प्रतापवान्।
धनुश्चिच्छेद संक्रुद्धो विव्याध च शितैः शरैः ॥ ६७ ॥ सोऽति-
विद्धो बलवता शत्रुणा शत्रुकर्षणः। निपपात ततो भूमौ किञ्चित्-
प्राणो नराधिप ॥ ६८ ॥ ततस्तं विह्वलं ज्ञात्वा पुत्रस्तव विशा-
म्पते। अपोवाह रथेनाजौ भीमसेनस्य पश्यतः ॥ ६९ ॥ रथस्थे
तु नरव्याघ्रे धार्त्तराष्ट्राः पराङ्मुखाः। प्रदुद्रुवुर्दिशो भीता भीमा-
ज्जाते महाभये ॥ ७० ॥ सौवले निर्ज्जिते राजन् भीमसेनेन
धन्विना। भयेन महताविष्टः पुत्रो दुर्य्योधनस्तव। अपायात्-
ज्जवनैरश्वैः सापेक्षो मातुलं प्रति ॥ ७१ ॥ पराङ्मुखन्तु राजानं
दृष्ट्वा सैन्यानि भारत। विप्रजग्मुः समुत्सृज्य द्वैरथानि समन्ततः
॥ ७२ ॥ तान् दृष्ट्वा विद्रुतान् सर्वान् धार्त्तराष्ट्रान् पराङ्मुखान्।
जवेनाभ्यपतद्भीमः किरन् शरशतान् बहून् ॥ ७३ ॥ ते व[illegible]ना
भीमेन धार्त्तराष्ट्राः पराङ्मुखाः। कर्णमासाद्य समरे स्थिता
राजन् समन्ततः। स हि तेषां महावीर्य्यो द्वीपोऽभूत् सुमहा-
बलः ॥ ७४ ॥ भिन्ननौका यथा राजन् द्वीपमासाद्य निर्वृताः।
भवन्ति पुरुषव्याघ्र नाविकाः कालपर्य्यये ॥ ७५ ॥ तथा कर्णं
समासाद्य तावका भरतर्षभ। समाश्वस्ताः स्थिता राजन् संप्रहृष्टाः
परस्परम्। समाजग्मुश्च युद्धाय मृत्युं कृत्वा निवर्त्तनम् ॥ ७६ ॥

इति कर्णपर्व्वणि सौवलेयापयाने सप्तसप्ततोऽध्यायः ॥ ७७ ॥

---

धृतराष्ट्र उवाच। ततो भग्नेषु सैन्येषु भीमसेनेन संयुगे।
दुर्य्योधनोऽब्रवीत् किन्नु सौबलो वापि सञ्जय ॥ १ ॥ कर्णो वा
जयतां श्रेष्ठो योधा वा मामका युधि। कृपो वा कृतवर्म्मा वा
द्रौणिर्दुःशासनोऽपि वा ॥ २ ॥ अत्यद्भुतमहं मन्ये पाण्डवेयस्य
विक्रमम्। यदेकः समरे सर्व्वान् योधयामास मामकान् ॥ ३ ॥
यथाप्रतिज्ञं योधानां राधेयः कृतवानपि। कुरूणामथ सर्व्वेषां
कर्णः शत्रुनिसूदनः। शर्म्म वर्म्म प्रतिष्ठा च जीविताशा च सञ्जय
॥ ४ ॥ तत् प्रभग्नं बलं दृष्ट्वा कौन्तेयेनामितौजसा। राधेयो
वाप्याधिरथिः कर्णः किमकरोद्युधि ॥ ५ ॥ पुत्रा वा मम दुर्द्धर्षा
राजानो वा महारथाः। एतन्मे सर्व्वमाचक्ष्व कुशलो ह्यसि
सञ्जय ॥ ६ ॥

सञ्जय उवाच। अपराह्णे महाराज सूतपुत्रः प्रतापवान्।
जघान सोमकान् सर्व्वान् भीमसेनस्य पश्यतः ॥ ७ ॥ भीमोऽप्यति-
बलः सैन्यं धार्त्तराष्ट्रं व्यपोथयत्। अथ कर्णोऽब्रवीच्छल्यं पाञ्चा-
लान् प्रापयस्व माम् ॥ ८ ॥ द्राव्यमाणं बलं दृष्ट्वा भीमसेनेन
धीमता। यन्तारमब्रवीत् कर्णः पाञ्चालानेव मां वह ॥ ९ ॥
मद्रराजस्ततः शल्यः श्वेतानश्वान् मनोजवान्। प्राहिणोच्चेदि-
पाञ्चालान् करूषांश्च महाबलः ॥ १० ॥ प्रविश्य च महत् सैन्यं
शल्यः परबलार्द्दनः। न्ययच्छत्तुरगान् हृष्टो यत्र यत्रैच्छदग्रणीः
॥ ११ ॥ तं रथं मेघसङ्काशं वैयाघ्रपरिवारणम्। संदृश्य पाण्डु-
पाञ्चालास्त्रस्ता ह्यासन् विशाम्पते ॥ १२ ॥ ततो रथस्य निनदः
प्रादुरासीन्महारणे। पर्ज्जन्यसमनिर्घोषः पर्व्वतस्येव दीर्य्यतः ॥ १३ ॥
ततः शरशतैस्तीक्ष्णैः कर्ण आकर्णनिःसृतैः। जघान पाण्डवबलं
शतशोऽथ सहस्रशः ॥ १४ ॥ तं तथा समरे कर्म्म कुर्व्वाणमपरा-
जितम्। परिवव्रुर्महेष्वासाः पाण्डवानां महारथाः ॥ १५ ॥ तं
शिखण्डी च भीमश्च धृष्टद्युम्नश्च पार्षतः। नकुलः सहदेवश्च

द्रौपदेयाश्च सात्यकिः । परिवव्रुर्जिघांसन्तो राधेयं शरवृष्टिभिः
॥ १६ ॥ सात्यकिस्तु तदा कर्णं विंशत्या निशितैः शरैः । अता-
डयद्रणे शूरो जत्रुदेशे नरोत्तमः ॥ १७ ॥ शिखण्डी पञ्चविंशत्या
धृष्टद्युम्नस्तु सप्तभिः । द्रौपदेयाश्चतुःषष्ट्या सहदेवश्च सप्तभिः ।
नकुलश्च शतेनाजौ कर्णं विव्याध सायकैः ॥ १८ ॥ भीमसेनस्तु
राधेयं नवत्या नतपर्वणाम् । विव्याध समरे क्रुद्धो जत्रुदेशे
महाबलः ॥ १९ ॥ अथ प्रहस्याधिरथिर्व्याक्षिपन् धनुरुत्तमम् ।
मुमोच निशितान् बाणान् पीडयन् सुमहाबलः । तान् प्रत्य-
विध्यद्राधेयः पञ्चभिः पञ्चभिः शरैः ॥ २० ॥ सात्यकेस्तु धनुश्छित्त्वा
ध्वजञ्च भरतर्षभ । तथैव नवभिर्बाणैराजघान स्तनान्तरे ॥ २१ ॥
भीमसेनं ततः क्रुद्धो विव्याध त्रिंशता शरैः । सहदेवस्य भल्लेन
ध्वजं चिच्छेद मारिष । सारथिञ्च त्रिभिर्बाणैराजघान परन्तपः
॥ २२ ॥ विरथान् द्रौपदेयांश्च चकार भरतर्षभ । अक्ष्णोर्निमेष-
मात्रेण तदद्भुतमिवाभवत् ॥ २३ ॥ विमुखीकृत्य तान् सर्वान्
शरैः सन्नतपर्वभिः । पाञ्चालानहनत् शूरश्चेदीनाञ्च महारथान्
॥ २४ ॥ ते वध्यमानाः समरे चेदिमत्स्या विशाम्पते । कर्ण-
मेकमभिद्रुत्य शरसङ्घैः समार्पयन् । तान् जघान शितैर्बाणैः
सूतपुत्रो महारथः ॥ २५ ॥ एतदत्यद्भुतं कर्म दृष्टवानस्मि भारत ।
यदेकः समरे शूरान् सूतपुत्रः प्रतापवान् ॥ २६ ॥ यतमानान्
परं शक्त्या योधयंस्तांश्च धन्विनः । पाण्डवेयान् महाराज शरै-
र्वारितवान्रणे ॥ २७ ॥ तत्र भारत कर्णस्य लाघवेन महात्मनः ।
तुतुषुर्देवताः सर्वाः सिद्धाश्च सह चारणैः ॥ २८ ॥ अपूजयन्महे-
ष्वासा धार्त्तराष्ट्रा नरोत्तम । कर्णं रथवरश्रेष्ठं श्रेष्ठं सर्वधनु-
ष्मताम् ॥ २९ ॥ ततः कर्णो महाराज ददाह रिपुवाहिनीम् ।
कक्षमिद्धो यथा वह्निर्निदाघे ज्वलितो महान् ॥ ३० ॥ ते वध्य-
मानाः कर्णेन पाण्डवेयास्ततस्ततः । प्राद्रवन्त रणे भीताः कर्णं

दृष्ट्वा महारथम् ॥ ३१ ॥ तत्राक्रन्दो महानासीत् पाञ्चालानां महारणे। वध्यतां सायकैस्तीक्ष्णैः कर्णचापवरच्युतैः ॥ ३२ ॥ तेन शब्देन वित्रस्ता पाण्डवानां महाचमूः । कर्णमेकं रणे योधं मेनिरे तत्र पार्थिवाः ॥ ३३ ॥ तत्राद्भुतं पुनश्चक्रे राधेयः शत्रु-कर्षणः । यदेनं पाण्डवाः सर्वे न शेकुरभिवीक्षितुम् ॥ ३४ ॥ यथौघः पर्वतश्रेष्ठमासाद्याभिप्रदीर्य्यते । तथा तत् पाण्डवं सैन्यं कर्णमासाद्य दीर्य्यते ॥ ३५ ॥ कर्णोऽपि समरे राजन् विधूमोऽग्नि-रिव ज्वलन् । दहंस्तस्थौ महाबाहुः पाण्डवानां महाचमूम् ॥३६॥ शिरांसि च महाराज कर्णांश्चैव सकुण्डलान् । बाहूंश्च वीरो वीराणां चिच्छेद लघु चेषुभिः ॥ ३७ ॥ हस्तिदन्तत्सरून् खड्गान् ध्वजान् शक्तीर्हयान् गजान् । रथांश्च विविधान्राजन् पताका व्यजनानि च ॥ ३८ ॥ अक्षञ्च युगयोक्त्राणि चक्राणि विविधानि च । चिच्छेद बहुधा कर्णो योधव्रतमनुष्ठितः ॥ ३९ ॥ तत्र भारत कर्णेन निहतैर्गजवाजिभिः । अगम्यरूपा पृथिवी मांसशोणितकर्दमा ॥ ४० ॥ विषमञ्च समञ्चैव हतैरश्वपदातिभिः । रथैश्च कुञ्जरैश्चैव न प्राज्ञायत किञ्चन ॥ ४१ ॥ नापि स्वेन परे योधाः प्राज्ञायन्त परस्परम् । घोरे शरान्धकारे तु कर्णास्त्रे च विजृम्भिते ॥ ४२ ॥ राधेयचापनिर्मुक्तैः शरैः काञ्चनभूषणैः । संछादिता महाराज पाण्डवानां महारथाः ॥ ४३ ॥ ते पाण्ड-वेयाः समरे राधेयेन पुनः पुनः । अभज्यन्त तदा राजन् यत-माना महारथाः ॥ ४४ ॥ मृगसङ्घान् यथा क्रुद्धः सिंहो द्रावयते वने । पाञ्चालानां रथश्रेष्ठान् द्रावयंश्छात्रवांस्तथा ॥ ४५ ॥ कर्णस्तु समरे योधांस्तत्र तत्र महायशाः । कालयामास पाण्डूनां यथा पशुगणान् वृकः ॥ ४६ ॥ दृष्ट्वा तु पाण्डवीं सेनां धार्त्तराष्ट्राः पराङ्मुखीम् । अभिजग्मुर्महेष्वासा रुवन्तो भैरवान्रवान् ॥ ४७ ॥ दुर्य्योधनो हि राजेन्द्र मुदा परमया युतः । वादयामास संहृष्टो

नानावाद्यानि सर्वशः ॥ ४८ ॥ पाञ्चालापि महेष्वासा मग्नास्तत्र नरोत्तमाः । न्यवर्त्तन्त यथाशूरं मृत्युं कृत्वा निवर्त्तनम् ॥ ४९ ॥ तान्निवृत्तान्रणे शूरान् राधेयः शत्रुतापनः । अनेकशो महाराज वभञ्ज पुरुषर्षभः ॥ ५० ॥ तत्र भारत कर्णेन पाञ्चाला विंशती रथाः । निहताः सायकैर्यौधाश्चेदयश्च परःशताः ॥ ५१ ॥ कृत्वा शून्यान् रथोपस्थान् वाजिपृष्ठांश्च भारत । निर्मनुष्यान् गजस्कन्धान् पादातांश्चैव विद्रुतान् ॥ ५२ ॥ आदित्य इव मध्याह्ने दुर्निरीक्ष्यः परन्तपः । कालान्तकवपुः शूरः सूतपुत्रो व्यराजत ॥ ५३ ॥ एवमेतन्महाराज नरवाजिरथद्विपान् । हत्वा तस्थौ महेष्वासः कर्णोऽरिगणसूदनः ॥ ५४ ॥ यथा भूतगणान् हत्वा कालस्तिष्ठेन्महावलः । तथा स सोमकान् हत्वा तस्थावेको महारथः ॥ ५५ ॥ तत्राद्भुतमपश्याम पाञ्चालानां पराक्रमम् । वध्यमानापि यत् कर्णं नाजह्न रणमूर्द्धनि ॥ ५६ ॥ राजा दुःशासनश्चैव कृपः शारद्वतस्तथा । अश्वत्थामा कृतवर्मा शकुनिश्च महावलः ॥ न्यहनन् पाण्डवीं सेनां शतशोऽथ सहस्रशः ॥ ५७ ॥ कर्णपुत्रौ तु राजेन्द्र भ्रातरौ सत्यविक्रमौ । निजघ्नाते वलं क्रुद्धौ पाण्डवानामितस्ततः ॥ ५८ ॥ तत्र युद्धं महच्चासीत् क्रूरं विशसनं महत् ॥ ५९ ॥ तथैव पाण्डवाः शूरा धृष्टद्युम्नशिखण्डिनौ । द्रौपदेयांश्च संक्रुद्धा अभ्यघ्नंस्तावकं वलम् ॥ ६० ॥ एवमेष क्षयो वृत्तः पाण्डवानामितस्ततः । तावकानामपि रणे भीमं प्राप्य महावलम् ।

इति कर्णपर्वणि संकुलयुद्धे अष्टसप्ततोऽध्यायः ॥ ७८ ॥

---

सञ्जय उवाच । अर्जुनस्तु महाराज हत्वा सैन्यं चतुर्विधम् । सूतपुत्रञ्च संरब्धं दृष्ट्वा चैव महारणे ॥ १ ॥ शोणितोदां नदीं

कृत्वा मांसमज्जास्थिपङ्किलाम् । मनुष्यशीर्षपाषाणां हस्तिपृष्ठकृत-
रोधसम् ॥ २ ॥ शूरास्थिचयसंकीर्णां काककङ्कानुनादिताम् ।
छत्रहंसप्लवोपेतां वीरवृक्षापहारिणीम् ॥ ३ ॥ हारपद्माकरवती-
मुष्णीषवरफेनिलाम् । धनुःशरझषोपेतां नरक्षुद्रकपालिनीम् ॥४॥
चर्मवर्मभ्रमोपेतां रथोडुपसमाकुलाम् । जयैषिणान्तु सुतरां भीरू-
णाञ्च सुदुस्तराम् ॥ ५ ॥ तां नदीं प्रापयित्वा तु बीभत्सुः पर-
वीरहा । वासुदेवमिदं वाक्यमब्रवीत् पुरुषर्षभः ॥ ६ ॥

अर्ज्जुन उवाच । एष केतू रणे कृष्ण सूतपुत्रस्य दृश्यते ।
भीमसेनादयश्चैते योधयन्ति महारथान् । एते द्रवन्ति पाञ्चालाः
कर्णत्रस्ता जनार्द्दन ॥ ७ ॥ एष दुर्य्योधनो राजा श्वेतच्छत्रेण
धार्य्यता । कर्णेन भग्नान् पाञ्चालान् द्रावयन् बहुशोभत ॥ ८ ॥
कृपश्च कृतवर्मा च द्रौणिश्चैव महारथः । एते रक्षन्ति राजानं
सूतपुत्रेण रक्षिताः । अवध्यमानास्तेऽस्माभिः पातयिष्यन्ति सोम-
कान् ॥ ९ ॥ एष शल्यो रथोपस्थे रश्मिसञ्चारकोविदः । सूत-
पुत्ररथं कृष्ण वाहयन् बहु शोभते ॥ १० ॥ तत्र मे बुद्धिरुत्पन्ना
वाहयात्र महारथम् । नाहत्वा समरे कर्णं निवर्त्तिष्ये कथञ्चन
॥ ११ ॥ राधेयोऽप्यन्यथा पार्थान् सृञ्जयांश्च महारथान् । निः-
शेषान् समरे कुर्य्यात् पश्यतां नो जनार्द्दन ॥ १२ ॥ ततः प्राया-
द्रथेनाशु केशवस्तव वाहिनीम् । कर्णं प्रति महेष्वासं द्वैरथे सव्य-
साचिना ॥ १३ ॥ प्रयातश्च महाबाहुः पाण्डवानुज्ञया हरिः ।
आश्वासयन्नथेनैव पाण्डुसैन्यानि सर्व्वशः ॥ १४ ॥ रथघोषः स
संग्रामे पाण्डवेयस्य संबभौ । वासवाशनितुल्यस्य महौघस्येव मारिष
॥ १५ ॥ महता रथघोषेण पाण्डवः सत्यविक्रमः । अभ्यया-
दप्रमेयात्मा निर्ज्जयंस्तववाहिनीम् ॥ १६ ॥ तमायान्तं समीक्ष्यैव
श्वेताश्वं कृष्णसारथिम् । मद्रराजोऽब्रवीत् कर्णं केतुं दृष्ट्वा महा-
त्मनः ॥ १७ ॥ अयं स रथ आयाति श्वेताश्वः कृष्णसारथिः ।

निघ्नन्नमित्रान् समरे यं कर्ण परिपृच्छसि ॥ १८ ॥ एष तिष्ठति
कौन्तेयः संस्पृशन् गाण्डिवं धनुः । तं हनिष्यसि चेदद्य तन्नः
श्रेयो भविष्यति ॥ १९ ॥ त्वामभिप्रेप्सुरायाति कर्ण निघ्नन् वरान्
वरान् । असह्यमानो राधेय तं याहि प्रति भारतम् ॥ २० ॥
एषा विदीर्य्यते सेना धार्त्तराष्ट्री समन्ततः । अर्जुनस्य भयात्तूर्णं
निघ्नतः पार्थिवान् बहून् ॥ २१ ॥ वर्जयन् सर्वसैन्यानि त्वरते हि
धनञ्जयः । त्वदर्थमिति मन्येऽहं यथास्योदीर्य्यते वपुः ॥ २२ ॥
न ह्यवस्थास्यते पार्थो युयुत्सुः केनचित् सह । त्वामृते क्रोधदीप्तो
हि पीड्यमाने वृकोदरे ॥ २३ ॥ विरथं धर्मराजञ्च दृष्ट्वा सुदृढ़-
विक्षतम् । शिखण्डिनं सात्यकिञ्च धृष्टद्युम्नञ्च पार्षतम् ॥ २४ ॥
द्रौपदेयान् युधामन्युमुत्तमौजसमेव च । नकुलं सहदेवञ्च भ्रातरौ
द्वौ समीक्ष्य च ॥ २५ ॥ सहसैकरथः पार्थस्त्वामभ्येति परन्तपः ।
क्रोधरक्तेक्षणः क्रुद्धो जिघांसुः सर्वपार्थिवान् ॥ २६ ॥ त्वरितो-
ऽभिपतत्यस्मांस्त्यक्त्वा सैन्यान्यसंशयम् । तं कर्ण प्रतियाह्येनं नास्त्यन्यो
हि धनुर्द्धरः ॥ २७ ॥ न तं पश्यामि लोकेऽस्मिंस्त्वत्तो ह्यन्यं
धनुर्द्धरम् । अर्जुनं समरे क्रुद्धं यो वेलामिव धारयेत् ॥ २८ ॥
न चास्य रक्षां पश्यामि पार्श्वतो न च पृष्ठतः । एक एवाभियाति
त्वां पश्य साफल्यमात्मनः ॥ २९ ॥ त्वं हि कृष्णौ रणे शक्तः
संसाधयितुमाहवे । तवैष भारो राधेय प्रत्युद्याहि धनञ्जयम्
॥ ३० ॥ समानो ह्यसि भीष्मेण द्रोणद्रौणिकृपैरपि । सव्यसाचिन-
मायान्तं निवारय महारणे ॥ ३१ ॥ लेलिहानं यथा सर्पं गर्ज्जन्त
मृषभं यथा । वनस्थितं यथा व्याघ्रं जहि कर्ण धनञ्जयम् ॥ ३२ ॥
एते द्रवन्ति समरे धार्त्तराष्ट्रा महारथाः । अर्जुनस्य भयात्तूर्णं
निरपेक्षा नराधिपाः ॥ ३३ ॥ द्रवतामथ तेषान्तु नान्योऽस्ति युधि
मानवः । भयहा यो भवेद्वीरस्त्वामृते सूतनन्दन ॥ ३४ ॥ एते
त्वां कुरव सर्वे दीपमासाद्य संयुगे । धिष्ठिताः पुरुषव्याघ्र त्वत्तः

रणकाङ्क्षिणः ॥ ३५ ॥ वैदेहाम्बष्ठकाम्बोजास्तथा नग्नजितस्तथा।
गान्धाराश्च यथा धृत्या जिताः संख्ये सुदुर्ज्जयाः। तां धृतिं कुरु
धेय ततः प्रत्येहि पाण्डवम् ॥ ३६ ॥ वासुदेवश्च वार्ष्णेयं प्रोयमाणं
करीटिना। प्रत्युद्याहि महावाहो पौरुषे महति स्थितः ॥ ३७ ॥
कर्ण उवाच। प्रकृतिस्थोऽसि मे शल्य इदानीं सम्मतस्तथा।
तिभासि महावाहो विभीश्चैव धनञ्जयात् ॥ ३८ ॥ पश्य बाह्वो
लं मेऽद्य शिक्षितस्य च पश्य मे। एकोऽद्य निहनिष्यामि पाण्ड-
नां महाचमूम्। कृष्णौ च पुरुषव्याघ्रौ तत् सत्यं प्रब्रवीमि ते
३९ ॥ नाहत्वा युधि तौ वीरौ व्यपयास्ये कथञ्चन। शिष्ये वा
हतस्ताभ्यामनित्यो हि रणे जयः ॥ ४० ॥ कृतार्थोऽद्य भविष्यामि
त्वा वाप्यथवा हतः ॥ ४१ ॥
शल्य उवाच। अजय्यमेनं प्रवदन्ति युद्धे महारथाः कर्ण
थप्रवीरम्। एकाकिनं किमु कृष्णाभिगुप्तं विजेतुमेनं क इहोत्-
हेत ॥ ४२ ॥
कर्ण उवाच। नैतादृशो जातु बभूव लोके रथोत्तमो याव-
पशुतन्नः। तमीदृशं प्रतियोत्स्यामि पार्थं महाहवे पश्य च
रुषं मे ॥ ४३ ॥ रणे चरत्येष रथप्रवीरः सितैर्हयैः कौरव-
जपुत्रः। स वाद्य मां नेष्यति कृच्छ्रमेतत् कर्णस्यान्तादेतदन्ताः
सर्वे ॥ ४४ ॥ अस्वेदिनौ राजपुत्रस्य हस्ताववेपमानौ जात-
णौ वृहन्तौ। दृढायुधः कृतिमान् क्षिप्रहस्तो न पाण्डवेयेन
मोऽस्ति योधः ॥ ४५ ॥ गृह्णात्यनेकानपि कङ्कपत्रानेकं यथा
न् प्रतियोज्य चाशु। ते क्रोशमात्रे निपतन्त्यमोघाः कस्तेन
धोऽस्ति समः पृथिव्याम् ॥ ४६ ॥ अतोषयत् खाण्डवे यो हुताशं
र्णाहतीयोऽतिरथस्तरस्वी। लेभे चक्रं यत्र कृष्णो महात्मा
नुर्गाण्डीवं पाण्डवः सव्यसाची ॥ ४७ ॥ श्वेताश्वयुक्तञ्च सुघोष-
ग्रं रथं महावाहुरदीनसत्त्वः। महेषुधी चाक्षये दिव्यरूपे

अस्त्राणि दिव्यानि च ह्यव्ययानि ॥ ४८ ॥ तथेन्द्रलोके निजघान
दैत्यनसङ्ख्येयान् कालकेयांश्च सर्वान् । लेभे शङ्खं देवदत्तं स्म
तत्र को नाम तेनाभ्यधिकः पृथिव्याम् ॥ ४९ ॥ महादेवं तोषया-
मास यो वै साक्षात् सुयुद्धेन महानुभावः । लेभे ततः पाशुपतं
सुघोरं त्रैलोक्यसंहारकरं महास्त्रम् ॥ ५० ॥ पृथक् पृथक् लोक-
पालाः समेता ददुर्ह्यस्त्राण्यप्रमेयाणि यस्मै । यैस्तान् जघानाशु
रणे नृसिंहः स कालकञ्जानसुरान् समेतान् ॥ ५१ ॥ तथा
विराटस्य पुरे समेतान् सर्वानस्मानेकरथेन जित्वा । जहार तद्-
गोधनमाजिमध्ये वस्त्राणि चादत्त महारथेभ्यः ॥ ५२ ॥ तमीदृशं
वीर्य्यगुणोपपन्नं कृष्णद्वितीयं परमं नृपाणाम् । समाह्वयन् साहस-
मुत्तमं वै जाने स्वयं सर्वलोकस्य शल्य ॥ ५३ ॥ अनन्तवीर्य्येण च
केशवेन नारायणेनाप्रतिमेन गुप्तः । वर्षायुतैर्यस्य गुणा न शक्या
वक्तुं समेतैरपि सर्वलोकैः ॥ ५४ ॥ महात्मनः शङ्खचक्रासिपाणे-
र्विष्णोर्जिष्णोर्वसुदेवात्मजस्य । भयञ्च मे जायतेऽसाध्वसञ्च दृष्ट्वा
कृष्णावेकरथे समेतौ ॥ ५५ ॥ अतीव पार्थो युधि कार्मुकिभ्यो
नारायणश्चाप्रति चक्रयुद्धे । एवंविधौ पाण्डववासुदेवौ चलेत्
स्वदेशाद्धिमवान्न कृष्णौ ॥ ५६ ॥ उभौ हि शूरौ बलिनौ दृढास्त्रौ
महारथौ संहननोपपन्नौ । एतादृशौ फाल्गुनवासुदेवौ कोऽन्यः
प्रतीयान्मदृते तु शल्य ॥ ५७ ॥ मनोरथो यस्तु ममाद्य तस्य
मद्रेश युद्धं प्रति पाण्डवस्य । नैवं चिरादाशु भविष्यतीदमत्य-
द्भुतं चित्रमतुल्यरूपम् । एतावहं वा युधि पातयिष्ये मां वापि
कृष्णौ निहनिष्यतोऽद्य ॥ ५८ ॥ इति ब्रुवन् शल्यममित्रहन्ता
कर्णो रणे मेघ इवोन्ननाद । अभ्येत्य पुत्रेण तवाभिनन्दितः समेत्य
चोवाच कुरुप्रवीरम् ॥ ५९ ॥ कृपञ्च भोजञ्च महाभुजावुभौ तथैव
गान्धारपतिं सहात्मजम् । गुरोः सुतञ्चावरजन्तथात्मनः पदा-
तिनोऽथ द्विपसादिनश्च तान् ॥ ६० ॥ निरुन्धताभिद्रवताच्युतार्जुनौ

सेन संयीजताशु सर्व्वशः । यथा भवद्भिर्मृधविख्यतावुभौ सुखेन
न्याम हमद्य भूमिपाः ॥ ६१ ॥ तथेति चोक्ता त्वरिताः स्म ते-
र्ज्जुनं जिघांसवो वीरतमाः समाद्रयुः । शरैश्च अभ्यर्द्दयन्ति तं महा-
था धनञ्जयं कर्णनिदेशकारिणः ॥ ६२ ॥ नदीनदं भूरिजलो
र्हार्णवो यथा तथा तान् समरेऽर्ज्जुनोऽग्रसत् ॥ ६३ ॥ न सन्द-
ानो न तथा शरोत्तमान् प्रमुञ्चमानो रिपुभिः प्रदृश्यते । धन-
ञ्जयास्तैस्तु शरैर्विदारिता हता निपेतुर्नरवाजिकुञ्जराः ॥ ६४ ॥
राच्चिषं गाण्डिवचारुमण्डलं युगान्तसूर्य्यप्रतिमानतेजसम् । न
ौरवाः शेकुरुदीक्षितुं जयं यथा रविं व्याधितचक्षुषो जनाः
६४ ॥ शरोत्तमान् स प्रहितान् महारथैश्चिच्छेद पार्थः प्रहस-
छरौघैः । भूयश्च तानहनद्बाणसङ्घान् गाण्डीवधन्वायतपूर्ण
ण्डलः ॥ ६६ ॥ यथोग्ररश्मिः शुचिशुक्रमध्यगो सुखं विवस्वान्
रते जलौघान् । तथार्ज्जुनो बाणगणान्निरस्य ददाह सेनां तव
ार्थिवेन्द्र ॥ ६७ ॥ तमभ्यधावद्विसृजन् कृपः शरान् तथैव भोज-
स्तव चात्मज स्वयम् । महारथो द्रोणसुतश्च सायकैरवाकिरं-
स्तोयधरा यथाचलम् ॥ ६६ ॥ जिघांसुभिस्तान् कुशलैः शरो-
मान् महाहवे संप्रहितान् प्रयत्नतः । शरैः प्रचिच्छेद स
ाण्डवस्त्वरन् पराभिनद्वक्षसि चेषुभिस्त्रिभिः ॥ ६८ ॥ स गाण्डिव-
ायतपूर्णमण्डलस्तपन्रिपूनर्ज्जुनभास्करो बभौ । शरोग्ररश्मिः
;चिशुक्रमध्यगो यथैव सूर्य्यः परिवेषवांस्तथा ॥ ७० ॥ अथाग्र-
ाणैर्द्दशभिर्धनञ्जयं पराभिनद्द्रोणसुतोऽच्युतं त्रिभिः । चतुर्भि-
श्चाश्वतुरः कपिन्ततः शरैश्च नाराचवरैरवाकिरत् ॥ ७१ ॥ तथापि
 प्रस्फुरदात्तकार्मुकं त्रिभिः शरैर्यन्तृशिरः क्षुरेण ह । हयां-
तुर्भिश्चतुरस्त्रिभिर्ध्वजं धनञ्जयो द्रौणिरथादपातयत् ॥ ७२ ॥ स
ाषपूर्णो मणिवज्रहाटकैरलङ्कृतं तक्षकभोगवर्च्चसम् । महाधनं
ार्मुकमन्यदाददे यथा महाहिप्रवरं गिरेस्तटात् ॥ ७३ ॥ स्व-

मायुधञ्चोपनिकीर्य्य भूतले धनुश्च कृत्वा सगुणं गुणाधिकः। समा-
ईयत्तावजितौ नरोत्तमौ शरोत्तमैर्द्रौणिरविध्यदन्तिकात् ॥ ७४ ॥
कृपस्य भोजस्य तवात्मजस्य ते शरैरनेकैर्युधि पाण्डवर्षभम्। महा-
रथाः संयुगमूर्द्धनि स्थितास्तमोनुदं वारिधारा इवापतन् ॥ ७५ ॥
कृपस्य पार्थः सशरं शरासनं हयान् ध्वजान् सारथिमेव पत्रिभिः।
समार्पयद्बाहुसहस्रविक्रमस्तथा यथा वज्रधरः पुरा बलेः ॥ ७६ ॥
स पार्थबाणैर्विनिपातितायुधो ध्वजावमर्द्दे च कृते महाहवे। कृतः
कृपो बाणसहस्रयन्त्रितो यथापगेयः प्रथमं किरीटिना ॥ ७७ ॥
शरैः प्रचिच्छेद तवात्मजस्य च ध्वजं धनुश्च प्रचकर्त्त नर्द्दतः।
जघान वाहान् कृतवर्मणः शुभान् ध्वजञ्च चिच्छेद ततः प्रतापवान्
॥ ७८ ॥ सवाजिसूतेष्वसनान् सकेतनान् जघान नागांश्च रथांस्त्वरंश्च
सः। ततः प्रकीर्णं सुमहद्बलं तव प्रदारितः सेतुरिवाम्भसा यथा
॥ ७९ ॥ ततोऽर्जुनस्याशु रथेन केशवश्चकार शत्रूनपसव्यमातुरान्
॥ ८० ॥ ततः प्रयान्तं त्वरितं धनञ्जयं शतक्रतुं वृत्रनिजघ्नुषं
यथा। समभ्यधावन् पुनरुच्छ्रितैर्ध्वजै रथैः प्रयुक्तैरपरे युयुत्सव
॥ ८१ ॥ अथाभिसृत्य प्रतिवार्य्य तानरीन् धनञ्जयस्याभिमुखं
महारथा। शिखण्डिशैनेययमाः शितैः शरैर्विदारयन्तो व्यनदन्
सुभैरवम् ॥ ८२ ॥ ततोऽभिजघ्नुः कुपिताः परस्परं शरैस्तथाञ्जो-
गतिभिः सुतेजनैः। कुरुप्रवीराः सह सृञ्जयैर्यथासुराः पुरा
देवगणैस्तथाहवे ॥ ८३ ॥ जयेप्सवः स्वर्गमनाय चोत्सुकाः पतन्ति
नागाश्वरथाः परन्तपाः। जगर्ज्जुरुच्चैर्बलवच्च विव्यधुः शरैः
सुमुक्तैरितरेतरं पृथक् ॥ ८४ ॥ शरान्धकारे तु महात्मभिः कृते
महामृधे योधवरैः परस्परम्। चतुर्द्दिशो वै विदिशश्च पार्थिव
प्रभा च सूर्य्यस्य तमोवृताभवत् ॥ ८५ ॥

इति कर्णपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

सञ्जय उवाच । राजन् कुरूणां प्रवरैर्बलैर्भीममभिद्रुतम् । मज्जन्तमिव कौन्तेयमुज्जिहीर्षुर्धनञ्जयः ॥ १ ॥ विमृज्य सूतपुत्त्रस्य सेनां भारत सायकैः । प्राहिणोन्मृत्युलोकाय परवीरान् धनञ्जयः ॥ २ ॥ ततोऽस्याम्बरमाश्रित्य शरजालानि भागशः । अदृश्यन्त तथान्ये च निघ्नन्तस्तव वाहिनीम् ॥ ३ ॥ स पक्षिसङ्घाचरितमाकाशं पूरयञ्छरैः । धनञ्जयो महाराज कुरूणामन्तकोऽभवत् ॥ ४ ॥ ततो भल्लैः क्षुरप्रैश्च नाराचैर्विमलैरपि । गात्राणि प्राच्छिणोत् पार्थः शिरांसि च चकर्त्त ह ॥ ५ ॥ छिन्नगात्रैर्विकवचैर्विशिरस्कैः समन्ततः । पतितैश्च पतद्भिश्च योधैरासीत् समावृता ॥ ६ ॥ धनञ्जयशराभ्यस्तैः स्यन्दनाश्वरथद्विपैः । संछिन्नभिन्नविध्वस्तैर्व्यङ्गाङ्गावयवैः स्तृता ॥ ७ ॥ सुदुर्गमा सुविषमा घोरात्यर्थं सुदुर्दृशा । रणभूमिरभूद्राजन् महावैतरणी यथा ॥ ८ ॥ ईषाचक्राक्षभग्नैश्च व्यश्वैः साश्वैश्च युध्यताम् । ससूतैर्हतसूतैश्च रथैः स्तीर्णाभवन्मही ॥ ९ ॥ सुवर्णवर्मसन्नाहैर्योधैः कनकभूषणैः । आस्थिताः कृतवर्माणो भद्रा नित्यमदा द्विपाः ॥ १० ॥ क्रुद्धाः क्रूरैर्महामात्रैः पार्ष्ण्यङ्गुष्ठप्रचोदिताः । चतुःशताः शरवरैर्हताः पेतुः किरीटिना । पर्य्यस्तानीव शृङ्गाणि ससत्त्वानि महागिरेः ॥ ११ ॥ धनञ्जयशराभ्यस्तैस्तीर्णा भूर्वरवारणैः ॥ १२ ॥ समन्ताज्जलदप्रख्यान् वारणान्मदवर्षिणः । अभिपेदेऽर्जुनरथो घनान् भिन्दन्निवांशुमान् ॥ १३ ॥ हतैर्गजमनुष्याश्वैर्भिन्नैश्च बहुधा रथैः । विशस्त्रयन्त्रकवचैर्युद्धशौण्डैर्गतासुभिः । अपविद्धायुधैर्मार्गः स्तीर्णोऽभूत् फाल्गुनेन वै ॥ १४ ॥ व्यस्फूर्जयच्च गाण्डीवं सुमहद्भैरवं वरम् । घोरवज्रविनिष्पेषः स्तनयित्नोरिवाम्बरे ॥ १५ ॥ ततः प्रादीर्य्यत चमूर्धनञ्जयशराहता । महावातसमाविद्धा महानौरिव सागरे ॥ १६ ॥ नानारूपाः प्राणहराः शरा गाण्डीवचोदिताः । अलातोल्काशनिप्रख्यास्तव सैन्यं

विनिर्दहन् ॥ १७ ॥ महागिरौ वेणुवनं निशि प्रज्वलितं यथा।
तथा तव महासैन्यं प्रास्फुटच्छरपीड़ितम् ॥ १८ ॥ संपिष्टदग्ध-
विध्वस्तं तव सैन्यं किरीटिना। कृतं प्रविहतं बाणैः सर्वतः प्रद्रुतं
दिशः ॥ १९ ॥ महावने मृगगणा दावाग्निवासिता यथा। कुरवः
पर्य्यवर्त्तन्त निर्दग्धा सव्यसाचिना ॥ २० ॥ उत्सृज्य हि महाबाहुं
भीमसेनं तथा रणे। बलं कुरूणामुद्विग्नं सर्वमासीत् पराङ्-
मुखम् ॥ २१ ॥ ततः कुरुषु भग्नेषु वीभत्सुरपराजितः। भीम-
सेनं समासाद्य मुहूर्त्तं सोऽभ्यवर्त्तत ॥ २२ ॥ समागम्य च भीमेन
मन्त्रयित्वा च फाल्गुनः। विशल्यमरुजं चास्मै कथयित्वा युधि-
ष्ठिरम् ॥ २३ ॥ भीमसेनाभ्यनुज्ञातस्ततः प्रायाद्धनञ्जयः। नादय-
न्रथघोषेण पृथिवीं द्याञ्च भारत ॥ २४ ॥ ततः परिवृतो वीरै-
र्दशभिर्योधपुङ्गवैः। दुःशासनादवरजैस्तव पुत्रैर्धनञ्जयः ॥ २५ ॥
ते तमभ्यर्द्दयन् बाणैरुल्काभिरिव कुञ्जरम्। आततेष्वसनाः शूरा
नृत्यन्त इव भारत ॥ २६ ॥ अपसव्यांस्तु तांश्चक्रे रथेन मधु-
सूदनः। नियुक्तान् हि स तान्मेने यमायाशु किरीटिना ॥ २७ ॥
ततस्ते प्राद्रवञ्छूराः पराङ्मुखरथेऽर्जुने ॥ २८ ॥ तेषामापततां
केतूनश्वांश्चापानि सायकान्। नाराचैरर्द्धचन्द्रैश्च क्षिप्रं पार्थो
न्यपातयत्। अथान्यैर्दशभिर्भल्लैः शिरांस्येषां न्यपातयत् ॥ २९ ॥
रोषसंरक्तनेत्राणि सन्दष्टौष्ठानि भूतले। तानि वक्त्राणि विबभुः
कमलानीव भूरिशः ॥ ३० ॥ तांस्तु भल्लैर्महावेगैर्दशभिर्दश कौर-
वान्। रुक्माङ्गदान् रुक्मपुङ्खैर्हत्वा प्रायादमित्रहा ॥ ३१ ॥

इति कर्णपर्वणि संकुलयुद्धे अशीतितमोऽध्यायः ॥ ८० ॥

---

सञ्जय उवाच। तं प्रयान्तं महावेगैरश्वैः कपिवरध्वजम्।
युद्धायाभ्याद्रवन् वीराः कुरूणां नवती रथाः ॥ १ ॥ कृत्वा

संशप्तका घोरं मपथं पारलौकिकम्। परिवव्रुर्नरव्याघ्रा नर-
व्याघ्रं रणेऽर्ज्जुनम् ॥ २ ॥ कृष्णा श्वेतान् महावेगानश्वान् काञ्चन-
भूषणान्। मुक्ताजालप्रतिच्छन्नान् प्रैषीत् कर्णरथं प्रति ॥ ३ ॥
ततः कर्णरथं यान्तमरिघ्नन्तं धनञ्जयम्। बाणवर्षैरभिघ्नन्तः
संशप्तकरथा ययुः ॥ ४ ॥ त्वरमाणांस्तु तान् सर्वान् ससूतेष्वसन-
ध्वजान्। जघान नवतिं वीरानर्ज्जुनो निशितैः शरैः ॥ ५ ॥
तेऽपतन्त हता बाणैर्नानारूपैः किरीटिना। सविमाना यथा
सिद्धाः स्वर्गात् पुण्यक्षये तथा ॥ ६ ॥ ततः सरथनागाश्वाः कुरवः
कुरुसत्तमम्। निर्भया भरतश्रेष्ठमभ्यवर्त्तन्त फाल्गुनम् ॥ ७ ॥
तदायस्तमनुष्याश्वमुदीर्णवरवारणम्। पुत्राणान्ते महासैन्यं
समरौत्सीद्धनञ्जयम् ॥ ८ ॥ शक्त्यृष्टितोमरप्रासैर्गदानिस्त्रिंश-
सायकैः। प्राच्छादयन्महेष्वासाः कुरवः कुरुनन्दनम् ॥ ९ ॥ ताम-
न्तरीक्षे विततां शस्त्रवृष्टिं समन्ततः। व्यधमत् पाण्डवो बाणै-
स्तमः सूर्य्य इवांशुभिः ॥ १० ॥ ततो म्लेच्छाः स्थितैर्मत्तैस्त्रयोदश-
शतैर्गजैः। पार्श्वतो व्यहनन् पार्थं तव पुत्रस्य शासनात् ॥ ११ ॥
कर्णिनालीकनाराचैस्तोमरप्रासशक्तिभिः। कम्पनैर्भिन्दिपालैश्च
रथस्थं पार्थमार्द्दयन् ॥ १२ ॥ तां शस्त्रवृष्टिमतुलां द्विपहस्तैः
प्रवेरिताम्। चिच्छेद निशितैर्भल्लैरर्द्धचन्द्रैश्च फाल्गुनः ॥ १३ ॥
अथ तान् द्विरदान् सर्वान्नानालिङ्गैः शरोत्तमैः। सपताकध्वजा-
रोहान् गिरीन् वज्रैरिवाहनत् ॥ १४ ॥ ते हेमपुङ्खैरिषुभिरार्द्दिता
हेममालिनः। हताः पेतुर्महानागाः साग्निज्वाला इवाद्रयः ॥१५॥
ततो गाण्डीवनिर्घोषो महानासीद्विशाम्पते। स्तनतां कूजताञ्चैव
मनुष्यगजवाजिनाम् ॥ १६ ॥ कुञ्जराश्च हता राजन् दुद्रुवुस्ते
समन्ततः। अश्वाश्च पर्य्यधावन्त हतारोहा दिशो दश ॥ १७ ॥
रथा हीना महाराज रथिभिर्वाजिभिस्तथा। गन्धर्वनगराकारा
दृश्यन्ते स्म सहस्रशः ॥ १८ ॥ अश्वारोहा महाराज धावमाना-

स्ततस्ततः । तत्र तत्रैव दृश्यन्ते निहताः पार्थसायकैः ॥ १९ ॥
तस्मिन् क्षणे पाण्डवस्य बाह्वोर्बलमदृश्यत । यत् सादिनो वार-
णांश्च रथांश्चैकोऽजयद्युधि ॥ २० ॥ ततस्त्र्यङ्गेण महता बलेन
भरतर्षभ । दृष्ट्वा परिवृतं राजन् भीमसेनः किरीटिनम् ॥ २१ ॥
हतावशेषानुत्सृज्य त्वदीयान् कतिचिद्रथान् । जवेनाभ्यद्रवद्राजन्
धनञ्जयरथं प्रति ॥ २२ ॥ ततस्तत् प्राद्रवत् सैन्यं हतभूयिष्ठ-
मातुरम् । दृष्ट्वार्जुनं तदा भीमो जगाम भ्रातरं प्रति ॥ २३ ॥
हतावशिष्टांस्तुरगानर्जुनेन महाबलान् । भीमो व्यधमदश्रान्तो
गदापाणिर्महाहवे ॥ २४ ॥ कालरात्रिमिवात्युग्रां नरनागाश्व-
भोजनाम् । प्राकाराट्टपुरद्वारदारणीमतिदारुणाम् । ततो गदां
नृनागाश्वेष्वाशु भीमो व्यवासृजत् ॥ २५ ॥ सा जघान बहूनश्वा-
नश्वारोहांश्च मारिष ॥ २६ ॥ कार्ष्णायसतनुत्राणान्नरानश्वांश्च
पाण्डवः । पोथयामास गदया सशब्दं तेऽपतन् हताः ॥ २७ ॥
दन्तैर्दशन्तो वसुधां शेरते क्षतजोक्षिताः । भग्नमूर्द्धास्थिचरणाः
क्रव्यादगणभोजनाः ॥ २८ ॥ असृङ्मांसवसाभिश्च तृप्तिमभ्यागता
गदा । अस्थीन्यप्यश्नती तस्थौ कालरात्रीव दुर्दृशा ॥ २९ ॥
सहस्राणि दशाश्वानां हत्वा पत्तींश्च भूयसः । भीमोऽधावत्
संक्रुद्धो गदापाणिरितस्ततः ॥ ३० ॥ गदापाणिं ततो भीमं दृष्ट्वा
भारत तावकाः । मेनिरे समनुप्राप्तं कालदण्डोद्यतं यमम् ॥ ३१ ॥
स मत्त इव मातङ्गः संक्रुद्धः पाण्डुनन्दनः । प्रविवेश गजानीकं
मकरः सागरं यथा ॥ ३२ ॥ विगाह्य च गजानीकं प्रगृह्य महतीं
गदाम् । क्षणेन भीमः संक्रुद्धस्तन्निन्ये यमसादनम् ॥ ३३ ॥
गजान् सकङ्कटान् मत्तान् सारोहान् सपताकिनः । पततः सम-
पश्याम सपक्षानिव पर्वतान् ॥ ३४ ॥ हत्वा तु स गजानीकं भीम-
सेनो महाबलः । पुनः स रथमास्थाय पृष्ठतोऽर्जुनमभ्ययात् ॥३५॥
निहतं प्राङ्मुखप्रायं निरुत्साहं परं बलम् । व्यालम्बत महाराज

प्रायशः शस्त्रवेष्टितम् ॥ ३६ ॥ विलम्बमानं तत् सैन्यमप्रगल्भमव-
स्थितम् । दृष्ट्वा प्राच्छादयद्बाणैरर्जुनः प्राणतापनैः ॥ ३७ ॥
नराश्वरथमातङ्गा युधि गाण्डीवधन्वना । शरव्रातैश्चिता रेजु
कदम्बा इव केशरैः ॥ ३८ ॥ ततः कुरूणामभवदार्त्तनादो महा-
नृपः । नराश्वनागासुहरैर्वध्यतामर्जुनेषुभिः ॥ ३९ ॥ हाहाकृतं
भृशं वस्तं लीयमानं परस्परम् । अलातचक्रवत् सैन्यं तदाभ्रमत
तावकम् ॥ ४० ॥ ततस्तद्युद्धमभवत् कुरूणां सुमहद्बलैः । न
ह्यवाशीर्दनिर्भिन्नो रथः सादी हयो गजः ॥ ४१ ॥ आदीप्तमिव
तत् सैन्यं शरैश्छिन्नतनुच्छदम् । आसीत् स्वशोणितक्लिन्नं फुल्ला-
शोकवनं यथा ॥ ४२ ॥ तं दृष्ट्वा कुरवस्तत्र विक्रान्तं सव्यसाचिनम् ।
निराशाः समपद्यन्त सर्वे कर्णस्य जीविते ॥ ४३ ॥ अविषह्यन्तु
पार्थस्य शरसम्पातमाहवे । मत्वा न्यवर्त्तन् कुरवो जिता गाण्डीव
धन्वना ॥ ४४ ॥ ते हित्वा समरे कर्णं वध्यमानाश्च सायकैः ।
प्रदुद्रुवुर्दिशो भीताश्चुक्रुशुश्चापि सूतजम् ॥ ४५ ॥ अभ्यद्रवत तान्
पार्थः किरञ्छरशतान् बहून् । हर्षयन् पाण्डवान् योधान् भीम-
सेनपुरोगमान् ॥ ४६ ॥ पुत्रास्तु मे महाराज जग्मुः कर्णरथं
प्रति । अगाधे मज्जतां तेषां द्वीपः कर्णोऽभवत्तदा ॥ ४७ ॥ कुरवो
हि महाराज निर्विषा पन्नगा इव । कर्णमेवोपलीयन्त भया-
द्गाण्डीवधन्वनः ॥ ४८ ॥ यथा सर्वाणि भूतानि मृत्योर्भीतानि
मारिष । धर्म्ममेवोपलीयन्ते कर्मवन्ति हि यानि च ॥ ४९ ॥
तथा कर्णं महेष्वासं पुत्रास्तव नराधिप । उपालीयन्त संत्रासात्
पाण्डवस्य महात्मनः ॥ ५० ॥ ताञ्छोणितपरिक्लिन्नान् विषमस्था-
ञ्छरातुरान् । मा भैष्टेत्यब्रवीत् कर्णो ह्यभितो मामितेति च ॥ ५१ ॥
प्रभग्नं हि बलं दृष्ट्वा बलात् पार्थेन तावकम् । धनुर्विस्फारयन्
कर्णस्तस्थौ शत्रुजिघांसया ॥ ५२ ॥ तान् विद्रुतान् कुरून् दृष्ट्वा
कर्णः शस्त्रभृताम्वरः । सञ्चिन्तयित्वा पार्थस्य वधे दध्रे मनः

प्रब्रवन् ॥ ५३ ॥ विस्फार्य्य सुमहच्चापं तत आधिरथिर्वृषः। पाञ्चालान् पुनराधावत् पश्यतः सव्यसाचिनः ॥ ५४ ॥ ततः क्षणेन क्षितिपाः क्षतजप्रतिमेक्षणाः। कर्णं ववर्षुर्वाणौघैर्यथा मेघा महीधरम् ॥ ५५ ॥ ततः शरसहस्राणि कर्णमुक्तानि मारिष। व्ययोजयत पाञ्चालान् प्राणैः प्राणभृताम्वर ॥ ५६ ॥ तत्र शब्दो महानासीत् पाञ्चालानां महामते। वध्यतां सूतपुत्रेण मित्रार्थे मित्रगृद्धिना ॥ ५७ ॥

इति कर्णपर्वणि संकुलयुद्धे एकाशीतोऽध्यायः ॥ ८१ ॥

---

सञ्जय उवाच। ततः कर्णः कुरुषु प्रद्रुतेषु वरूथिना श्वेतहयेन राजन्। पाञ्चालपुत्रान् व्यधमत् सूतपुत्रो महेषुभिर्वात इवाभ्रसङ्घान् ॥ १ ॥ सूतं रथादञ्जलिकैर्निपात्य जघान चाश्वान् जनमेजयस्य। शतानीकं सुतसोमञ्च भल्लैरवाकिरद्धनुषी चाप्यकृन्तत् ॥ २ ॥ धृष्टद्युम्नं निर्विभेदाथ षड्भिर्जघान चाश्वांस्तरसा तस्य सङ्ख्ये। हत्वा चाश्वान् सात्यकेः सूतपुत्रः कैकेयपुत्रं न्यवधीद्विशोकम् ॥ ३ ॥ तमभ्यधावन्निहते कुमारे कैकेयसेनापतिरुग्रकर्मा। शरैर्विधुन्वन् भृशमुग्रवेगैः कर्णात्मजं चाभ्यहनत् प्रसेनम् ॥ ४ ॥ तस्यार्द्धचन्द्रैस्त्रिभिरुच्चकर्त्त प्रसह्य बाहू च शिरश्च कर्णः। स स्यन्दनाद्गामगमद्गतासुः परश्वधैः शाल इवावरुग्णः ॥ ५ ॥ हताश्वमञ्जोगतिभिः प्रसेनः शिनिप्रवीरं निशितैः पृषत्कैः। प्रच्छाद्य नृत्यन्निव कर्णपुत्रः शैनेयवाणाभिहतः पपात ॥ ६ ॥ पुत्रे हते क्रोधपरीतचेताः कर्णः शिनीनामृषभं जिघांसुः। हतोऽसि शैनेय इति ब्रुवन् स व्यवासृजद्वाणममित्रसाहम् ॥ ७ ॥ तमस्य चिच्छेद शरं शिखण्डी त्रिभिस्त्रिभिश्च प्रतुतोद कर्णम्। शिखण्डिनः कार्मुकं स ध्वजञ्च छित्त्वा क्षुराभ्यां व्यधमत् सूतजातः ॥ ८ ॥

शिखण्डिनं षड्भिरविध्यदुग्रो धार्ष्टद्युम्नैः स शिरश्चकर्त्त।
अथाभिनत् सुतसोमं शरेण सुसंशितेनाधिरथिर्महात्मा ॥ ९ ॥
अथाक्रन्दे तुमुले वर्त्तमाने धार्ष्टद्युम्नौ निहते तत्र कृष्णः। अपा-
ञ्चाल्यं क्रियते याहि पार्थ कर्णं जहीत्यब्रवीद्राजसिंह ॥ १० ॥ ततः
प्रहस्याशु नरप्रवीरो रथं रथेनाधिरथेर्जगाम। भये तेषां त्राण-
मिच्छन् सुबाहुरभ्याहतानां रथयूथपेन ॥ ११ ॥ विस्फार्य्य
गाण्डीवमथोग्रघोषं ज्यया समाहत्य तले भृशञ्च। बाणान्धकारं
सहसैव कृत्वा जघान नागाश्वरथध्वजांश्च ॥ १२ ॥ प्रतिश्रुतः प्राच-
रन्नन्तरीक्षे गुहा गिरीणामपतन् वयांसि। यन्मण्डलज्येन
विजृम्भमाणो रौद्रे मुहूर्त्तेऽभ्यपतत् किरीटी ॥ १३ ॥ तं भीम-
सेनोऽनुययौ रथेन पृष्ठे रक्षन् पाण्डवमेकवीरः। तौ राजपुत्रौ
त्वरितौ रथाभ्यां कर्णाय यातावरिभिर्विषक्तौ ॥ १४ ॥ तत्रान्तरे
सुमहत् सूतपुत्रश्चक्रे युद्धं सोमकान् संप्रमृद्नन्। रथाश्वमातङ्ग-
गणान् जघान प्रच्छादयामास शरैर्दिशश्च ॥ १५ ॥ तमुत्तमौजा
जनमेजयश्च क्रुद्धौ युधामन्युशिखण्डिनौ च। कर्णं विभेदुः सहिताः
पृषत्कैः संनर्द्दमानाः सह पार्षतेन ॥ १६ ॥ ते पञ्च पञ्चालरथ-
प्रवीरा वैकर्त्तनं कर्णमभिद्रवन्तः। तस्माद्रथाच्च्यावयितुं न शेकु-
र्धैर्य्यात् कृतात्मानमिवेन्द्रियार्थाः ॥ १७ ॥ तेषां धनूंषि ध्वजवाजि-
सूतांस्तूणं पताकाश्च निकृत्य बाणैः। तान् पञ्चभिः स्वभ्यहनत्
पृषत्कैः कर्णस्ततः सिंह इवोन्ननाद ॥ १८ ॥ तस्यास्यतस्तानभि-
निघ्नतश्च ज्याबाणहस्तस्य धनुःस्वनेन। साद्रिद्रुमा स्यात् पृथिवी
विशीर्णेत्यतीव मत्वा जनता व्यसीदत् ॥ १९ ॥ स शक्रचापप्रतिमेन
धन्वना भृशायतेनाधिरथिः शरान् सृजन्। बभौ रणे दीप्त-
मरीचिमण्डलो यथांशुमाली परिवेशवांस्तथा ॥ २० ॥ शिखण्डिनं
द्वादशभिः पराभिनच्छितैः शरैः षड्भिरथोत्तमौजसम्। त्रिभि-
र्युधामन्युं त्रिभिश्च द्वाशु गैस्त्रिभिस्त्रिभिः सोमकपार्षतात्मजौ ॥ २१ ॥

पराजिताः पञ्च महारथास्तु ते महाहवे सूतसुतेन मारिष । निरुद्यमास्तस्य शरमिवनन्दना यथेन्द्रवार्य्यात्मवता पराजिता ॥२२॥ निमज्जतस्तानथ कर्णसागरे विपन्ननावो वणिजो यथार्णवे। उद्दधिरे नौभिरिवार्ण्णवाद्रथैः सुकल्पितैर्द्रौपदिजाः समातुलान् ॥ २३ ॥ ततः शिनीनामृषभः शितैः शरैर्निकृत्य कर्णप्रहिता-निषून् बहून्। विदार्य्य कर्णं निशितैरयस्मयैस्तवात्मजं ज्येष्ठ-मविध्यदष्टभिः ॥ २४ ॥ कृपोऽथ भोजश्च तवात्मजस्तथा स्वयञ्च कर्णोनिशितैरताड़यत्। स तैश्चतुर्भिर्युयुधे यदूत्तमो दिगीश्वरै-र्दैत्यपतिर्यथा तथा ॥ २५ ॥ समाततेनेष्वसनेन कूजता भृशायते-नामितबाणवर्षिणा। बभूव दुर्द्धर्षतरः स सात्यकिः शरन्नभोमध्य-गतो यथा रविः ॥ २६ ॥ पुनः समास्थाय रथान् सुदंशिताः शिनिप्रवीरं जुगुपुः परन्तपाः। समेत्य पाञ्चालमहारथा रणे मरुद्गणाः शक्रमिवारिनिग्रहे ॥ २७ ॥ ततोऽभवद्युद्धमतीव दारुणं तवाहितानां तव सैनिकैः सह। नराश्वमातङ्गविनाशनं तथा यथा सुराणामसुरैः पुराभवत् ॥ २८ ॥ रथद्विपा वाजिपदातय-स्तथा भ्रमन्ति नानाविधशस्त्रवेष्टिताः। परस्परेणाभिहताश्च चस्खलुर्विनेदुरार्त्ता व्यसवोऽपतंस्तथा ॥ २९ ॥ तथागतं भीम-मभीस्तवात्मजः ससार राजावरजः किरञ्छरैः। तमभ्यधाव-त्त्वरितो वृकोदरो महारुरुं सिंह इवाभिपेदिवान् ॥ ३० ॥ तत-स्तयोर्युद्धमतीवदारुणं प्रदीव्यतोः प्राणदुरोदरं द्वयोः। परस्परे-णाभिनिविष्टरोषयोर्यथा पुरा शम्बरशक्रयोरभूत् ॥ ३१ ॥ शरैः शरीरार्त्तिकरैः सुतेजनैर्निजघ्नतुस्ताविततरेतरं भृशम्। सकृत् प्रभिन्नाविव वाशितान्तरे महागजौ मन्मथसक्तचेतसौ ॥ ३२ ॥ तवात्मजस्याथ वृकोदरस्त्वरन् धनुः क्षुराभ्यां ध्वजमेव चाच्छिनत्। ललाटमप्यस्य बिभेद पत्रिणा शिरश्च कायात् प्रजहार सारथेः ॥ ३३ ॥ स राजपुत्रोऽन्यदवाप्य कार्मुकं वृकोदरं द्वादशभिः परा-

विशेषविज्ञप्तिरियम्।

द्वितीयसंस्करणे मुद्रितस्य भारतग्रन्थस्य क्षयमुपगतायां संख्यायामारब्धमस्माभिस्तृतीयसंस्करणमस्य। अधुना च प्रथम-संस्करणग्राहका द्वितीयसंस्करणग्राहकाश्च तुल्यमेव भारतखण्डं प्राप्नुवन्ति। तृतीयसंस्करणे मुद्रितानां भारतस्य खण्डितखण्डानां मुद्रणात् परं द्वितीयसंस्करणमुद्रितानि सर्वाण्येव भारतस्य साम्प्रतं विद्यमानान्युत्तरखण्डानि दातव्यानि युगपदेव ग्राहकेभ्यः। प्रावृडन्ते शरदि त्रीण्येव संस्करणानि युगपत् परिसमाप्तिमाग-मिष्यन्तीति आशास्महे। कतिपयसंख्याश्च भारतस्याधुनापि वितरणीयाः सन्ति। पुनः संस्करणमस्य च नो भावि स्थिर-मेतत्। विज्ञापयामोऽतः प्रेप्सवः कृपयानिदयन्त्वाशु। प्रेषण-व्ययादिकञ्च यथावत्।

दातव्य भारत कार्य्यालयः
कलिकाता।

श्रीप्रतापचन्द्र रायः।


MOHARAJAH'S LIBRARY
22 JAN 1891
COOCH BEHAR.

---

Printed by Kāli Dāss Sen, at the Bhārata Press,
No. 1, Rājā Gooroo Dāss' Street, Calcutta.

COOCHBEHAR.

# MAHABHARATAM

KARNA PARVA

TEXT

PUBLISHED AND DISTRIBUTED GRATIS

BY

PRATAPA CHANDRA ROY, C. I. E.

# श्रीमहाभारतम्।

श्रीमन्महर्षिवेदव्यासविरचितम्।

कर्णपर्व्व।

सि, आइ, इ, उपाधिधारिणा

रायश्रीप्रतापचन्द्रेण

प्रकाशितम्

मूल्यं विना वितीर्णञ्च।

"[illegible]"

---

तृतीयसंस्करणम्।

कलिकाता बीडन ष्ट्रीटान्तर्गत

१ नं राजा गुरुदास ष्ट्रीट् भारतयन्त्रे

श्रीकालिदास सेनेन मुद्रितम्।

शकाब्दाः १८११।

७म खण्ड।

भनत्। स्वयं नियच्छंस्तुरगानजिह्मगैः शरैश्च भीमं पुनरप्यवीवृषत् ॥ ३४ ॥ ततः शरं सूर्य्यमरीचिसप्रभं सुवर्णवज्रोत्तमरत्नभूषितम्। महेन्द्रवज्राशनिपातदुःसहं मुमोच भीमाङ्गविदारणक्षमम् ॥ ३५ ॥ स तेन निर्व्विद्धतनुर्व्वृकोदरो निपातितः स्रस्ततनुर्गतासुवत्। प्रसार्य्य बाहू रथवर्य्यमाश्रितः पुनः स संज्ञामुपलभ्य नानदत् ॥ ३६ ॥

---

इति कर्णपर्व्वणि भीमदुःशासनयुद्धे द्व्यशीतोऽध्यायः ॥ ८२ ॥

सञ्जय उवाच। तत्राकरोद्दुष्करं राजपुत्रो दुःशासनस्तुमुलं युध्यमानः। चिच्छेद भीमस्य धनुः शरेण षड्भिः शरैः सारथिमप्यविध्यत् ॥ १ ॥ स तत् कृत्वा राजपुत्रस्तरस्वी विव्याध भीमं नवभिः पृषत्कैः। ततोऽभिनद्दर्भिः क्षिप्रमेव वरेषुभिर्भीमसेनं महात्मा ॥ २ ॥ ततः क्रुद्धो भीमसेनस्तरस्वी शक्तिञ्चोग्रां प्राहिणोत्ते सुताय। तामापतन्तीं सहसातिघोरां दृष्ट्वा सुतस्ते ज्वलितामिवोल्काम्। आकर्णपूर्णैरिषुभिर्महात्मा चिच्छेद पुत्रो दशभिः पृषत्कैः ॥ ३ ॥ दृष्ट्वा तु तत् कर्म्म कृतं सुदुष्करं प्रापूजयन् सर्व्वयोधाः प्रहृष्टाः। अथाशु भीमञ्च शरेण भूयो गाढं स विव्याध सुतस्त्वदीयः ॥ ४ ॥ चुक्रोध भीमः पुनराशु तस्मै भृशं प्रजज्वाल रुषाभिवीक्ष्य। विद्धोऽस्मि वीराशु भृशं त्वयाद्य सहस्व भूयोऽपि गदाप्रहारम् ॥ ५ ॥ उक्त्वैवमुच्चैः कुपितोऽथ भीमो जग्राह तां भीमगदां वधाय। उवाच चाद्याहमहं दुरात्मन् पास्यामि ते शोणितमाजिमध्ये ॥ ६ ॥ अथैवमुक्तस्तनयस्तवोग्रां शक्तिं वेगात् प्राहिणोन्मृत्युरूपाम्। आविध्य भीमोऽपि गदां सुघोरां विचिक्षिपे रोषपरीतमूर्त्तिः ॥ ७ ॥ सा तस्य शक्तिं सहसा विरुज्य पुत्रं तवाजौ ताड़यामास मूर्द्धि। स विस्फुरन्नाग इव प्रभिन्नो

गदामशं तुमुले प्राहिणोदै ॥ ८ ॥ तयाहरद्दशधन्वन्तराणि दुः-
शासनं भीमसेनः प्रसह्य। तया हतः पतितो वेपमानो दुःशासनो
गदया वेगवत्या ॥ ९ ॥ हयाः समग्रा निहता नरेन्द्र चूर्णीकृत-
श्चास्य रथः पतन्त्या। विध्वस्तवर्माभरणाम्बरस्रग्विचेष्टमानो भृश-
वेदनातुरः ॥ १० ॥ ततः स्मृत्वा भीमसेनस्तरस्वी सापत्नकं यत्
प्रयुक्तं सुतैस्ते। तस्मिन् घोरे तुमुले वर्त्तमाने प्रधानभूयिष्ठतरैः
समन्तात् ॥ ११ ॥ दुःशासनं तत्र समीक्ष्य राजन् भीमो महा-
बाहुरचिन्त्यकर्मा। स्मृत्वा च केशग्रहणञ्च देव्या वस्त्रापहारञ्च
रजस्वलायाः ॥ १२ ॥ अनागसो भर्त्तृपराङ्मुखाया दुःखानि दत्ता-
न्यपि विप्रचिन्त्य। जज्वाल कोपादथ भीमसेन आज्यप्रसिक्तो हि
यथा हुताशः ॥ १३ ॥ तत्राह कर्णञ्च सुयोधनञ्च कृपं द्रौणिं कृत-
वर्माणमेव। निहन्मि दुःशासनमद्य पापं संरक्ष्यतामद्य समस्त-
योधाः ॥ १४ ॥ इत्येवमुक्त्वा सहसाभ्यधावन्निहन्तुकामोऽतिबल-
स्तरस्वी ॥ १५ ॥ तथा तु विक्रम्य रणे वृकोदरो महागजं केशरी-
वोग्रवेगः। निगृह्य दुःशासनमेकवीरः सुयोधनस्याधिरथेः सम-
क्षम् ॥ १६ ॥ रथादवप्लुत्य गतः स भूमौ यत्नेन तस्मिन् प्रणिधाय
चक्षुः। असिं समुद्गृह्य शितं सुधारं कण्ठे पदाक्रम्य च वेपमानम्
उत्कृत्य वक्षः पतितस्य भूमावथापिवच्छोणितमस्य कोष्णम् ॥१७॥
ततो निपात्यास्य शिरोऽपकृत्य तेनासिना तव पुत्रस्य राजन्। सत्यां
चिकीर्षुर्मतिमान् प्रतिज्ञां भीमोऽपिवच्छोणितमस्य कोष्णम् ॥१८॥
आस्वाद्य चास्वाद्य च वीक्षमाणः क्रुद्धो हि चैनं निजगाद वाक्यम्
॥ १९ ॥ स्तन्यस्य मातुर्मधुसर्पिषोर्वा माध्वीकपानस्य च सत्-
कृतस्य। दिव्यस्य वा तोयरसस्य पानात् पयोदधिभ्यां मथिताच्च
मुख्यात् ॥ २० ॥ अन्यानि पानानि च यानि लोके सुधामृतस्वादु-
रसानि तेभ्यः। सर्वेभ्य एवाभ्यधिको रसोऽयं मतो ममाद्याहित-
लोहितस्य ॥ २१ ॥ अथाह भीमः पुनरुग्रकर्मा दुःशासनं क्रोध-

तैतचेताः । गतासुमालोक्य विहस्य सुस्वरं किं वा कुर्य्यां मृत्युना
क्षितोऽसि ॥ २२ ॥ एवं ब्रुवाणं पुनराद्रवन्तमासाद्य रक्तं
मतिप्रहृष्टम् । ये भीमसेनं ददृशुस्तदानीं भयेन तेऽपि व्यथिता
पेतुः ॥ २३ ॥ ये चापि तत्रापतिता मनुष्यास्तेषां करेभ्यः पतितं
ह शस्त्रम् । भयाच्च सञ्चुक्रुशुरस्वरैस्ते निमीलिताक्षा ददृशुश्च
ततः ॥ २४ ॥ ये तत्र भीमं ददृशुः समन्ताद्दौःशासनं तद्रुधिरं
पिबन्तम् । सर्व्वेऽपलायन्त भयाभिपन्ना नायं मनुष्य इति भाष-
माणाः ॥ २५ ॥ तस्मिन् कृते भीमसेनेन रूपे दृष्ट्वा च तच्छोणितं
पीयमानम् । संप्राद्रवंश्चित्रसेनेन सार्द्धं भीमं रक्षो भाषमाणा
भयार्त्ताः ॥ २६ ॥ युधामन्युः प्रद्रुतं चित्रसेनं सहानीकस्त्वभ्यया-
द्राजपुत्रः । विव्याध चैनं निशितैः पृषत्कैर्व्यपेतभीः सप्तभिराशु-
मुक्तैः ॥ २७ ॥ संक्रान्तभोग इव लेलिहानो महोरगः क्रोधविषं
विसृक्षुः । निवृत्य पाञ्चालजमभ्यविध्यत्त्रिभिः शरैः सारथिमस्य
षड्भिः ॥ २८ ॥ ततः सुपुङ्खेन सुपर्व्वितेन सुसंशितागेण शरेण
शूरः । आकर्णमुक्तेन समाहितेन युधामन्युस्तस्य शिरो जहार
॥ २९ ॥ तस्मिन् हते भ्रातरि चित्रसेने क्रुद्धः कर्णः पौरुषं
दर्शयानः । व्यद्रावयत् पाण्डवानामनीकं प्रत्युद्यातो नकुले-
नामितौजाः ॥ ३० ॥ भीमोऽपि हत्वा तत्रैव दुःशासनममर्षणम् ।
पूरयित्वाञ्जलिं भूयो रुधिरस्योग्रनिस्वनः । शृण्वतां लोकवीराणा-
मिदं वचनमब्रवीत् ॥ ३१ ॥ एष ते रुधिरं कण्ठात् पिबामि पुरुषा-
धम । ब्रूहीदानीं सुसंहृष्टः पुनर्गौरिति गौरिति ॥ ३२ ॥ ये
तदास्मान् प्रनृत्यन्ति पुनर्गौरिति गौरिति । तान् वयं प्रति
नृत्यामः पुनर्गौरिति गौरिति ॥ ३३ ॥ प्रमाणकोट्यां शयनं काल-
कूटस्य भोजनम् । दंशनञ्चाहिभिः कृष्णैर्दाहश्च जतुवेश्मनि ॥ ३४ ॥
द्यूतेन राज्यहरणमरण्ये वसतिश्च या । द्रौपद्याः केशपक्षस्य
ग्रहणञ्च सुदारुणम् ॥ ३५ ॥ इष्वस्त्राणि च संग्रामेष्वसुखानि च

वेश्मनि। विराटभवने यश्च क्लेशोऽस्माकं पृथग्विधः ॥ ३६ ॥ शकुने-र्धार्त्तराष्ट्रस्य राधेयस्य च मन्त्रिते। अनुभूतानि दुःखानि तेषां हेतुस्त्वमेव हि ॥ ३७ ॥ दुःखान्येतानि जानीमो न सुखानि कदाचन। धृतराष्ट्रस्य दौरात्म्यात् सपुत्रस्य सदा वयम् ॥ ३८ ॥ इत्युक्त्वा वचनं राजन् जयं प्राप्य वृकोदरः। पुनराह महाराज स्मयंस्तौ केशवार्जुनौ ॥ ३९ ॥ असृग्दिग्धो विस्रवल्लोहितास्यः क्रुद्धोऽत्यर्थं भीमसेनस्तरस्वी। दुःशासने यद्रणे संश्रुतं मे तद्वै सत्यं कृतमद्येह वीरौ ॥ ४० ॥ अत्रैव दास्याम्यपरं द्वितीयं दुर्य्योधनं यज्ञपशुं विशस्य। शिरो मृदित्वा च पदा दुरात्मनः शान्तिं लप्स्ये कौरवाणां समक्षम् ॥ ४१ ॥ एतावदुक्त्वा वचनं प्रहृष्टो ननाद चोच्चैः रुधिरार्द्रगात्रः। ननर्त्त चैवातिबलो महात्मा वृत्रं निहत्येव सहस्रनेत्रः ॥ ४२ ॥

इति कर्णपर्वणि दुःशासनवधे त्र्यशीतोऽध्यायः ॥ ८३ ॥

---

सञ्जय उवाच। दुःशासने तु निहते पुत्रास्तव महारथाः। महाक्रोधविषा वीराः समरेष्वपलायिनः। दश राजन् महावीर्य्या भीमं प्राच्छादयञ्छरैः ॥ १ ॥ निषङ्गी कवची पाशी दण्डधारो धनुर्ग्रहः। अलोलुपः सहः षण्डो वातवेगसुवर्च्चसौ ॥ २ ॥ एते समेत्य सहिता भ्रातृव्यसनकर्षिताः। भीमसेनं महाबाहुं मार्गणैः समवारयन् ॥ ३ ॥ स वार्य्यमाणो विशिखैः समन्तात्तैर्महारथैः। भीमः क्रोधाग्निरक्ताक्षः क्रुद्धः काल इवाबभौ ॥ ४ ॥ तांस्तु भल्लैर्महावेगैर्दशभिर्दश भारतान्। रुक्माङ्गदान् रुक्मपुङ्खैः पार्थो निन्ये यमक्षयम् ॥ ५ ॥ हतेषु तेषु वीरेषु प्रदुद्राव बलं तव। पश्यत सूतपुत्रस्य पाण्डवस्य भयार्द्दितम् ॥ ६ ॥ ततः कर्णो

महाराज प्रविवेश महद्भयम्। दृष्ट्वा भीमस्य विक्रान्तमन्तकस्य प्रजास्विव ॥ ७ ॥ तस्य तदाकारभावज्ञः शल्यः समितिशोभनः। उवाच वचनं कर्णं प्राप्तकालमरिन्दमम् ॥ ८ ॥ मा व्यथां कुरु राधेय नैतत्त्वय्युपपद्यते। एते द्रवन्ति राजानो भीमसेनभयार्द्दिताः ॥ ९ ॥ दुर्य्योधनश्च संमूढ़ो भ्रातृव्यसनकर्षितः। दुःशासनस्य रुधिरे पीयमाने महात्मना ॥ १० ॥ व्यापन्नचेतसश्चैव शोकोपहतमन्यवः। दुर्य्योधनमुपासन्ते परिवार्य्य समन्ततः। कृपप्रभृतयः कर्ण हतशेषाश्च सोदराः ॥ ११ ॥ पाण्डवा लब्धलक्ष्याश्च धनञ्जयपुरोगमाः। त्वामेवाभिमुखाः शूरा युद्धाय समुपस्थिताः ॥ १२ ॥ स त्वं पुरुषशार्दूल पौरुषे महति स्थितः। क्षत्रधर्मं पुरस्कृत्य प्रत्युद्याहि धनञ्जयम् ॥ १३ ॥ भारो हि धार्त्तराष्ट्रेण त्वयि सर्व्वः समर्पितः। तमुद्वह महाबाहो यथाशक्ति यथाबलम् ॥ १४ ॥ जये स्याद्विपुला कीर्त्तिर्ध्रुवः स्वर्गः पराजये ॥ १५ ॥ वृषसेनश्च राधेय संक्रुद्धस्तनयस्तव। त्वयि मोहं समापन्ने पाण्डवानभिधावति ॥ १६ ॥ एतच्छ्रुत्वा तु वचनं शल्यस्यामिततेजसः। हृदि चावश्यकं भावं चक्रे युद्धाय सुस्थिरम् ॥ १७ ॥ ततः क्रुद्धो वृषसेनोऽभ्यधावदवस्थितः स्वरथे पाण्डवं तम्। वृकोदरं कालमिवात्तदण्डं गदाहस्तं पोथयन्तं त्वदीयान् ॥ १८ ॥ अथाभ्यधावन्नकुलः प्रवीरो रोषादमित्रं प्रतुदन् पृषत्कैः। कर्णस्य पुत्रं समरे प्रहृष्टो जिष्णुर्ज्जिघांसुर्मघवेव जम्भम् ॥ १९ ॥ ततो ध्वजं स्फाटिकबिन्दुचित्रं चिच्छेद वीरो नकुलः क्षुरेण। कर्णात्मजस्येष्वसनञ्च चित्रं भल्लेन जाम्बूनदपट्टनद्धम् ॥ २० ॥ अथान्यदादाय धनुः सुशीघ्रं कर्णात्मजः पाण्डवमभ्यविध्यत्। दिव्यैर्महास्त्रैर्नकुलं महास्त्रो दुःशासनस्यापचितिं यियासुः ॥ २१ ॥ ततः स क्रुद्धो नकुलो महात्मा शरैर्महोल्काप्रतिमैरविध्यत्। दिव्यैरस्त्रैरभ्यवर्षच्च सोऽपि कर्णस्य पुत्रो नकुलं कृतास्त्रः ॥ २२ ॥ शराभि-

धानाच्च तथा राजन् त्वया च मार्गास्तथमीरणाच्च । जज्वाल
कर्णस्य सुतोऽतिमात्रमिद्धो यथाज्याहुतिभिर्हुताशः ॥ २३ ॥ कर्णस्य
पुत्रो नकुलस्य राजन् सर्वानश्वानक्षिणोदुत्तमास्त्रैः । वनायुजान्
सुकुमारस्य शुभ्रानलङ्कृतान् जातरूपेण चित्रान् ॥ २४ ॥ ततो
हताश्वादवरुह्य यानादादाय चर्मामलरुक्मचन्द्रम् । आकाश-
सङ्काशमसिं गृहीत्वा पोप्लूयमानः खगवच्चचार ॥ २५ ॥ ततो-
ऽन्तरीक्षे नृवराश्वनागांश्चिच्छेद मार्गान्विचरन्विचित्रान् । ते
प्रापतन्नसिना गां विशस्ता यथाश्वमेधे पशवः शमित्रा ॥ २६ ॥
द्विसाहस्रा विदिता युद्धशौण्डा नानादेश्याः सुभृताः सत्यसन्धाः ।
एकेन शीघ्रं नकुलेन कृत्ताः सारेप्सुनेवोत्तमचन्दनास्ते ॥ २७ ॥
तमापतन्तं नकुलं जवेन कर्णस्य पुत्रः सहसाभिपत्य । रणे
जिघांसन्निशितैरनेकैः समन्ततः सायकैः प्रत्यविध्यत् ॥ २८ ॥ स
तुद्यमानो नकुलः पृषत्कैर्विव्याध वीरं स चुकोप विद्धः । महाभये
रक्ष्यमाणो महात्मा भ्रात्रा भीमेनाकरोत्तत्र भीमम् ॥ २९ ॥ तं
कर्णपुत्रो विचरन्तमेकं नराश्वमातङ्गरथप्रवेकान् । क्रीडन्तमष्टा-
दशभिः पृषत्कैर्विव्याध वीरं नकुलं सरोषः ॥ ३० ॥ स
विद्धोऽतिभृशं तरस्वी महाहवे वृषसेनेन राजन् । क्रुद्धोऽभ्यधावत्
समरे जिघांसुः कर्णात्मजं पाण्डुसुतो नृवीरः ॥ ३१ ॥ वितत्य
पक्षौ सहसापतन्तं श्येनं यथैवामिषलुब्धमाजौ । अवाकिरद्वृष-
सेनस्ततस्तं शितैः शरैर्नकुलमुदारवीर्यम् ॥ ३२ ॥ स तान् मोघां-
स्तस्य कुर्वञ्छरौघान् चचार मार्गान्नकुलश्चित्ररूपान् । अथास्य
तूर्णं चरतो नरेन्द्र खड्गेन चित्रं नकुलस्य तस्य । महेषुभि-
र्व्यधमत् कर्णपुत्रो महारणे चर्म सहस्रतारम् ॥ ३३ ॥ तस्यायसं
निशितं तीक्ष्णधारमसिं विकोषं गुरुभारसाहम् । द्विषच्छरीरा-
पहरं सुघोरमाधुन्वतः सर्पमिवोग्ररूपम् ॥ ३४ ॥ क्षिप्रं शरैः
षड्भिरमित्रसाहश्चकर्त्त खड्गं निशितैः क्षुरप्रैः । पुनश्च पीतै

निशितैः पृषत्कैः स्तनान्तरे गाढ़मथाभ्यविध्यत् ॥ ३५ ॥ कृत्वा स तद्दुष्करमार्य्यजुष्टं नरैरन्यैः कर्म रणे महात्मा। ययौ रथं भीमसेनस्य राजन् शराभितप्तो नकुलस्त्वरावान् ॥ ३६ ॥ स भीमसेनस्य रथं हताश्वो माद्रीसुतः कर्णसुताभितप्तः। आपुप्लुवे सिंह इवाचलाग्रं संप्रेक्षमाणस्य धनञ्जयस्य ॥ ३७ ॥ ततः क्रुद्धो वृष-सेनो महात्मा ववर्ष ताविषुजालेन वीरः। महारथावेकरथे समेतौ शरैः प्रभिन्दन्निव पाण्डवेयौ ॥ ३८ ॥ तस्मिन्रथे विहते पाण्डवस्य क्षिप्रञ्च खड्गे विशिखैर्निकृत्ते। अथाब्रवीन्मारुतिः फाल्गुनन्तु पश्यस्वैनं नकुलं पीड्यमानम्। अयञ्च नो बाधति कर्णपुत्रस्तस्माद्भवान् प्रत्युपयातु कार्ष्णिम् ॥ ३९ ॥ स तन्निशम्यैव वचः किरीटी रथं समासाद्य वृकोदरस्य। कपिध्वजं केशवसंग्र-हीतं प्रैषीद्द्रुतो वृषसेनाय आहम् ॥ ४० ॥

इति कर्णपर्व्वणि नकुलपराजये चतुरशीतोऽध्यायः ॥ ८४ ॥

---

सञ्जय उवाच। नकुलमथ विदित्वा छिन्नबाणासनासिं विरथ-मतिशरार्त्तं कर्णपुत्रास्त्रभग्नम्। पवनधूतपताका ह्रादिनो वल्-गिताश्वा वरपुरुषनियुक्तास्ते रथाः शीघ्रमीयुः ॥ १ ॥ द्रुपदसुत-वरिष्ठाः पञ्च शैनेयषष्ठा द्रुपददुहितृपुत्राः पञ्च चामित्रसाहाः। द्विरदरथनराश्वान् सूदयन्तस्त्वदीयान् भुजगपतिनिकाशैर्मार्गणै-रात्तशस्त्राः ॥ २ ॥ अथ तव रथमुख्यास्तान् प्रतीयुस्त्वरन्तो हृदिक-सुतकृपौ च द्रौणिदुर्य्योधनौ च। शकुनिसुतवृकौ च क्राथदेवावृधौ च द्विरदजलदघोषैः स्यन्दनैः कार्म्मुकैश्च ॥ ३ ॥ नरवररथवर्य्या-स्तान् दशैकञ्च वीरान् नृवर शरवराग्रैस्ताड़यन्तोऽभ्यरुन्धन्। नवजलदसवर्णैर्हस्तिभिस्तानुदीयुर्गिरिशिखरनिकाशैर्भीमवेगैः कु-लिन्दाः ॥ ४ ॥ सुकल्पिता हैमवता मदोत्कटा रणाभिकामैः

कृतिभिः समास्थिताः। सुवर्णजालावतता बभुर्गजास्तथा यथा
खे जलदाः सविद्युतः ॥ ५ ॥ विशर्द्धिपुत्रो दशभिर्महायसैः कृपं
ससूताश्वमपीडयद्भृशम्। ततः शरद्वत्सुतसायकैर्हतः सहैव नागेन
पपात भूतले ॥ ६ ॥ विशर्द्धिपुत्रावरजस्तु तोमरैर्दिवाकरांशुप्रतिमै-
रयस्मयैः। रथञ्च विक्षोभ्य ननाद नर्द्दतस्ततोऽस्य गान्धारपतिः
शिरोऽहरत् ॥ ७ ॥ ततः कुलिन्देषु हतेषु तेष्वथ प्रहृष्टरूपास्तव
ते महारथाः। भृशं प्रदध्मुर्लवणाम्बुसम्भवान् परांश्च बाणासन-
पाणयोऽभ्ययुः ॥ ८ ॥ अथाभवद्युद्धमतीव दारुणं पुनः कुरूणां
सह पाण्डुसृञ्जयैः। शरासिशक्त्यृष्टिगदापरश्वधैर्नराश्वनागासु-
हरं भयाकुलम् ॥ ९ ॥ रथाश्वमातङ्गपदातिभिस्ततः परस्परं
विप्रहताः पतन् क्षितौ। यथा सविद्युत्स्तनिता बलाहकाः समा
हता दिग्भ्य इवोग्रमारुतैः ॥ १० ॥ ततः शतानीकमतान्महागजां-
स्तथा रथान् पत्तिगणांश्च तान् बहून्। जघान भोजस्तु हया-
नथापतन् क्षणाद्विशस्ताः कृतवर्मणः शरैः ॥ ११ । अथापरे द्रौणि-
शराहता द्विपास्त्रयः ससर्वायुधयोधकेतनाः। निपेतुरुर्व्यां व्यसवः
प्रपातितास्तथा यथा वज्रहता महाचलाः ॥ १२ ॥ कुलिन्दराजा-
वरजादनन्तरः स्तनान्तरे पत्रिवरैरताडयत्। तवात्मजं तस्य
तवात्मजः शरैः शितैः शरीरं विभिदे द्विपञ्च तम् ॥ १३ ॥ स
नागराजः सह राजसूनुना पपात रक्तं बहु सर्वतः क्षरन्।
शचीशवज्रप्रहतोऽम्बुदागमे यथा जलं गैरिकपर्वतस्तथा ॥ १४ ॥
कुलिन्दपुत्रप्रहितोऽपरो द्विपः शकं ससूताश्वरथं व्यपोथयत्।
ततोऽपतत् क्राथशराभिदारितः सहेश्वरो वज्रहतो यथा गिरिः
॥ १५ ॥ रथी द्विपस्थेन हतोऽपतच्छरैः क्राथाधिपः पर्वतजेन
दुर्ज्जयः। सवाजिसूतेष्वसनध्वजस्तथा यथा महावातहतो महा-
द्रुमः ॥ १६ ॥ वृको द्विपस्थं गिरिराजवासिनं भृशं शरैर्द्वादशभिः
पराभिनत्। ततो वृकं साश्वरथं महाद्विपो द्रुतं चतुर्भिश्चरणै-

र्गोथयत् ॥ १७ ॥ स नागराजः सनियन्तृकोऽपतत् पराहतो
न्द्रसुतेषुभिर्भृशम् । स चाङ्गदो मागधसूनुरार्द्दितः पपात बाणैः
ाहदेवसूनुना ॥ १८ ॥ विषाणपुच्छावरगात्रघातिना गजेन वाहाः
ाकुनेः कुलिन्दजाः । सुवर्णवातप्रहता यथा नगास्तथा गता
ााभवमा विचूर्णिताः ॥ १९ ॥ ततोऽभ्यविध्यद्दशभिः शितैः शरैः
ुलिन्दपुत्रो नकुलात्मजं स्मयन् । ततोऽस्य कायाद्विचकर्त्त नाकुलिः
ारः क्षुरेणाम्बुजसन्निभाननम् ॥ २० ॥ ततः शतानीकमविध्य-
ाच्छैस्त्रिभिः शरैः कर्णसुतोऽर्जुनं त्रिभिः । त्रिभिश्च भीमं नकु-
ाञ्च सप्तभिर्जनार्द्दनं द्वादशभिश्च सायकैः ॥ २१ ॥ तदस्य कर्माति-
ानुष्यकर्मणः समीक्ष्य हृष्टाः कुरवोऽभ्यपूजयन् । पराक्रमज्ञास्तु
ानञ्जयस्य ये हुतोऽयमग्नाविति ते तु मेनिरे ॥ २२ ॥ ततः
करीटी परवीरघाती हताश्वमालोक्य नरप्रवीरम् । माद्रीसुत
कुलं लोकमध्ये समीक्ष्य कृष्णं भृशविक्षतञ्च । तमभ्यधावद्वृष-
ानमाहवे स सूतजस्य प्रमुखे स्थितं तदा ॥ २३ ॥ तमापतन्तं
रवीरमुग्रं महाहवे बाणसहस्रधारिणम् । अभ्यापतत् कर्णसुतो
हारथो यथैव चेन्द्रं नमुचिस्तथैव तम् ॥ २४ ॥ ततो द्रुतं चैक-
ाेन पार्थं शरेण विद्धा युधि कर्णपुत्रः । ननाद नादं सुमहा-
ुभावो विद्धेव शक्रं नमुचिः पुरा वै ॥ २५ ॥ पुनः स पार्थं वृष-
ोन उग्रैर्बाणैरविध्यद्भुजमूले तु सव्ये । तथैव कृष्णं नवभिः
ामार्पयन् पुनश्च पार्थं दशभिः पृषत्कैः ॥ २६ ॥ पूर्वं तथा वृष-
ानेन विद्धो महाजवैः श्वेतहयः शरैस्तैः । संरम्भमीषद्गमितो
ाधाय कर्णात्मजस्याथ मनः प्रदध्रे ॥ २७ ॥ ततः किरीटी रण-
ूर्द्धि कोपात् कृत्वा त्रिशाखां भ्रुकुटिं ललाटे । ससर्ज तूर्णं
विशिखान्महात्मा वधाय राजन् कर्णसुतस्य सङ्ख्ये ॥ २८ ॥
ब्याध चैनं दशभिः पृषत्कैर्मर्मस्वसक्तं प्रसभं किरीटी । चिच्छेद
ास्येष्व सनं भुजौ च क्षुरैश्चतुर्भिः शिर एव चोग्रैः ॥ २९ ॥ स

पार्थबाणाभिहतः पपातः रथाद्विबाहुर्विशिरा धरायाम्। समु-
च्छ्रितो वृक्षवरोऽतिकायो वातेरितः शाल इवाद्रिशृङ्गात्॥ ३०॥
तं प्रेक्ष्य बाणाभिहतं पतन्तं रथात् सुतजः क्षिप्रकारी। रथं
रथेनाशु जगाम रोषात् किरीटिनः पुत्रवधाभितप्तः॥ ३१॥

इति कर्णपर्वणि वृषसेनवधे पञ्चाशीतोऽध्यायः॥ ८५॥

---

सञ्जय उवाच। तमायान्तमभिप्रेक्ष्य वेलोद्वृत्तमिवार्णवम्।
गर्जन्तं सुमहाकायं दुर्निवारं सुरैरपि। अर्जुनं प्राह दाशार्हः
प्रहस्य पुरुषर्षभः॥ १॥ अयं स रथ आयाति श्वेताश्वः शल्य-
सारथिः। येन ते सह योद्धव्यं स्थिरो भव धनञ्जय॥ २॥
पश्य चैनं समायुक्तं रथं कर्णस्य पाण्डव। श्वेतवाजिसमायुक्तं
युक्तं राधासुतेन च॥ ३॥ नानापताकाकलिलं किङ्किणीजाल-
मालिनम्। उह्यमानमिवाकाशे विमानं पाण्डरैर्हयैः॥ ४॥
ध्वजञ्च पश्य कर्णस्य नागकक्षं महात्मनः। आखण्डलधनुःप्रख्य-
मुल्लिखन्तमिवाम्बरम्॥ ५॥ पश्य कर्णं समायान्तं धार्त्तराष्ट्रप्रियै-
षिणम्। शरधारा विमुञ्चन्तं धारासारमिवाम्बुदम्॥ ६॥ एष
मद्रेश्वरो राजा रथाग्रे पर्य्यवस्थितः। नियच्छति हयानस्य
राधेयस्यामितौजसः॥ ७॥ शृणु दुन्दुभिनिर्घोषं शङ्खशब्दञ्च
दारुणम्। सिंहनादांश्च विविधान् शृणु पाण्डव सर्वशः॥ ८॥
अन्तर्द्धाय महाशब्दान् कर्णेनामिततेजसा। दोधूयमानस्य भृशं
धनुषः शृणु निस्वनम्॥ ९॥ एते दीर्य्यन्ति सगणाः पाञ्चालानां
महारथाः। दृष्ट्वा केशरिणं क्रुद्धं मृगा इव महावने॥ १०॥
सर्वयत्नेन कौन्तेय हन्तुमर्हसि सूतजम्। न हि कर्णशरानन्यः
सोढ़ुमुत्सहते नरः॥ ११॥ सदेवान् सगन्धर्वांस्त्रींल्लोकान् सचरा-
चरान्। त्वं हि जेतुं रणे शक्तस्तथैव विदितं मम॥ १२॥

भीममुग्रं महादेवं यच्चं सर्वं कपर्दिनम् । न शक्ता द्रष्टुमीशानं
किं पुनर्योधितुं प्रभुम् ॥ १३ ॥ त्वया साक्षान्महादेवः सर्वभूत-
शिवः शिवः । युद्धेनाराधितः स्थाणुर्देवाश्च वरदास्तव ॥ १४ ॥
तस्य पार्थ प्रसादेन देवदेवस्य शूलिनः । जहि कर्णं महाबाहो
नमुचिं वृत्रहा यथा । श्रेयस्तेऽस्तु सदा पार्थ युद्धे जयमवा-
प्नुहि ॥ १५ ॥

अर्जुन उवाच । ध्रुव एव जयः कृष्ण मम नास्त्यत्र संशयः ।
सर्वलोकगुरुर्यस्त्वं तुष्टोऽसि मधुसूदन ॥ १६ ॥ चोदयाश्वान्
हृषीकेश रथं मम महारथ । नाहत्वा समरे कर्णं निवर्त्तिष्यति
फाल्गुनः ॥ १७ ॥ अद्य कर्णं हतं पश्य मच्छरैः शकलीकृतम् ।
मां वा द्रक्ष्यसि गोविन्द कर्णेन निहतं शरैः ॥ १८ ॥ उपस्थित-
मिदं घोरं युद्धं त्रैलोक्यमोहनम् । यज्जनाः कथयिष्यन्ति याव-
द्भूमिर्द्धरिष्यति ॥ १९ ॥ एवं ब्रुवंस्तदा पार्थः कृष्णमक्लिष्टकारि-
णम् । प्रत्युद्ययौ रथेनाशु गजं प्रतिगजो यथा ॥ २० ॥ पुनश्चाह
महातेजाः पार्थः कृष्णमरिन्दमम् । चोदयाश्वान् हृषीकेश
कालोऽयमतिवर्त्तते । एवमुक्तस्तदा तेन पाण्डवेन महात्मना ॥२१॥
जयेन सम्पूज्य स पाण्डवं तदा प्रचोदयामास हयान्मनोजवान् ।
स पाण्डुपुत्रस्य रथो महाजवः क्षणेन कर्णस्यरथाग्रतोऽभवत् ॥२२॥

इति कर्णपर्वणि श्रीकृष्णवाक्ये षड़शीतोऽध्यायः ॥ ८६ ॥

---

सञ्जय उवाच । वृषसेनं हतं दृष्ट्वा शोकामर्षसमन्वितः ।
पुत्रशोकोद्भवं वारि नेत्राभ्यां समवासृजत् ॥ १ ॥ रथेन कर्ण-
स्तेजस्वी जगामाभिमुखो रिपुम् । युद्धायामर्षताम्राक्षः समाहूय
धनञ्जयम् ॥ २ ॥ तौ रथौ सूर्य्यसङ्काशौ वैयाघ्रपरिवारणौ ।
समेतौ ददृशुस्तत्र द्वाविवार्कौ समागतौ ॥ ३ ॥ श्वेताश्वौ पुरुषा-

दिव्यावाश्वेतावरिमर्द्दनौ। शुशुभाते महेष्वासौ चन्द्रादित्यौ यथा
दिवि ॥ ४ ॥ तौ दृष्ट्वा विस्मयं जग्मुः सर्वभूतानि मारिष।
त्रैलोक्यविजयी यत्ताविन्द्रवैरोचनाविव ॥ ५ ॥ रथज्यातलनिर्घोषै-
र्बाणशङ्खरवैरपि। तौ रथावभिधावन्तौ समालोक्य महीक्षिताम्
॥ ६ ॥ ध्वजौ च दृष्ट्वा संयुक्तौ विस्मयः समपद्यत। हस्तिकच्याञ्च
कर्णस्य वानरञ्च किरीटिनः ॥ ७ ॥ तौ रथौ संप्रयुक्तौ तु दृष्ट्वा
भारत पार्थिवाः। सिंहनादरवांश्चक्रुः साधुवादांश्च पुष्कलान् ॥८॥
दृष्ट्वा च द्वैरथं ताभ्यां तव योधाः सहस्रशः। चक्रुर्बाहुस्वनांश्चैव
तथा चेलावधूननम् ॥ ९ ॥ आजघ्नुः कुरवस्तत्र वादित्राणि सम-
न्ततः। कर्णं प्रहर्षयिष्यन्तः शङ्खान् दध्मुश्च पुष्कलान् ॥ १० ॥
तथैव पाण्डवाः सर्वे हर्षयन्तो धनञ्जयम्। तूर्य्यशङ्खनिनादेन
दिशः सर्वा व्यनादयन् ॥ ११ ॥ क्ष्वेडितास्फोटितोत्क्रुष्टैस्तुमुलं
सर्वतोऽभवत्। बाहुशब्दैश्च शूराणां कर्णार्जुनसमागमे ॥ १२ ॥
तौ दृष्ट्वा पुरुषव्याघ्रौ रथस्थौ रथिनां वरौ। प्रगृहीतमहाचापौ
शरशक्तिध्वजावुभौ ॥ १३ ॥ वर्म्मिणौ बद्धनिस्त्रिंशौ श्वेताश्वौ
शङ्खशोभितौ। कृष्णशल्यरथोपेतौ तुल्यरूपौ महारथौ ॥ [illegible] ॥
सिंहस्कन्धौ दीर्घभुजौ रक्ताक्षौ हेममालिनौ। चापविद्युद्ध्वजोपेतौ
शस्त्रसम्पत्तिशोभितौ ॥ १५ ॥ चामरव्यजनोपेतौ श्वेतच्छत्रोप-
शोभितौ। तूणीरवरसम्पन्नौ द्रावप्येतौ सुदर्शनौ ॥ १६ ॥ रक्त-
चन्दनदिग्धाङ्गौ समदौ गोवृषाविव। सिंहस्कन्धप्रतीकाशौ व्यूढो-
रस्कौ महाबलौ ॥ १७ ॥ अन्योऽन्यवधिनौ राजन्नन्योऽन्यस्य
वधैषिणौ। अन्योऽन्यमभिधावन्तौ गोष्ठेष्विव महर्षभौ ॥ १८ ॥
प्रभिन्नाविव मातङ्गौ सुसंरब्धाविवाचलौ। आशीविषशिशुप्रख्यौ
यमकालान्तकोपमौ ॥ १९ ॥ इन्द्रवृत्राविव क्रुद्धौ सूर्य्यचन्द्रसम-
प्रभौ। महाग्रहाविव क्रुद्धौ युगान्ताय समुत्थितौ ॥ २० ॥ देव-
गर्भौ देवसमौ देवतुल्यौ च रूपतः। यदृच्छया समायातौ सूर्य्या-

चन्द्रमसाविव ॥ २१ ॥ बलिनौ समरे दृप्तौ नानाशस्त्रधरौ युधि ।
तौ दृष्ट्वा पुरुषव्याघ्रौ शार्दूलाविव वेगितौ । बभूव परमो हर्ष-
स्तावकानां विशाम्पते ॥ २२ ॥ संशयः सर्वभूतानां विजये सम-
पद्यत । समेतौ पुरुषव्याघ्रौ प्रेक्ष्य कर्णधनञ्जयौ ॥ २३ ॥ उभौ
वरायुधधरावुभौ रणकृतश्रमौ । उभौ च बाहुशब्देन नादयन्तौ
नभस्तलम् ॥ २४ ॥ उभौ विश्रुतकर्माणौ पौरुषेण बलेन च ।
उभौ च सदृशौ युद्धे शम्बरामरराजयोः ॥ २५ ॥ कार्त्तवीर्य्यसमौ
युद्धे तथा दाशरथेः समौ । विष्णुवीर्य्यसमौ चोभौ तथा भवसमौ
युधि ॥ २६ ॥ उभौ श्वेतहयौ राजन् रथप्रवरवाहिनौ । सारथि-
प्रवरौ चापि तयोरास्तां महारणे ॥ २७ ॥ तौ तु दृष्ट्वा महा-
राज राजमानौ महारथौ सिद्धचारणसङ्घानां विस्मयः सम-
पद्यत ॥ २८ ॥ धार्त्तराष्ट्रास्ततः कर्णं सबला भरतर्षभ । परि-
वव्रुर्महात्मानं क्षिप्रमाहवशोभिनम् ॥ २९ ॥ तथैव पाण्डवा हृष्टा
धृष्टद्युम्नपुरोगमाः । परिवव्रुर्महात्मानं पार्थमप्रतिमं युधि ॥ ३० ॥
तावकानां रणे कर्णो ग्लहो ह्यासीद्विशाम्पते । तथैव पाण्डवे-
यानां ग्लहः पार्थोऽभवत्तदा ॥ ३१ ॥ त एव सभ्यास्तत्रासन्
प्रेक्षकाश्चाभवन् स्म ते । तत्रैषां ग्लहमानानां ध्रुवौ जयपराजयौ
॥ ३२ ॥ ताभ्यां द्यूतं समासक्तं विजयायेतराय वा । अस्माकं
पाण्डवानाञ्च स्थितानां रणमूर्द्धनि ॥ ३३ ॥ तौ तु स्थितौ महा-
राज समरे युद्धशालिनौ । अन्योन्यं प्रतिसंरब्धावन्योऽन्यस्य
वधैषिणौ ॥ ३४ ॥ तावुभौ प्रजिहीर्षन्ताविन्द्रवृत्राविव प्रभो ।
भीमरूपधरावास्तां महाधूमाविव ग्रहौ ॥ ३५ ॥ ततोऽन्तरीक्षे
साक्षेपा विवादा भरतर्षभ । मिथो भेदाश्च भूतानामासन् कर्णा-
र्जुनान्तरे । व्यश्रूयन्त मिथो भिन्नाः सर्वलोकास्तु मारिष ॥ ३६ ॥
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः । प्रतिपक्षग्रहञ्चक्रुः कर्णा-
र्जुनसमागमे ॥ ३७ ॥ द्यौरासीत् कर्णतो व्यग्रा सनक्षत्रा विशा-

स्मते। भूमिर्विर्ग्रीला पार्थस्य माता पुत्रस्य वै यथा ॥ ३८ ॥
सरितः सागराश्चैव गिरयश्च नरोत्तम। वृक्षाश्चौषधयश्चैव ह्याश्र-
यन्त किरीटिनम् ॥ ३९ ॥ असुरा यातुधानाश्च गुह्यकाश्च पर-
न्तप। कर्णतः समपद्यन्त खेचराश्च वयांसि च ॥ ४० ॥ रत्नानि
निधयः सर्वे वेदाश्चाख्यानपञ्चमाः। सोपवेदोनिषदः सरहस्याः
ससंग्रहाः ॥ ४१ ॥ वासुकिश्चित्रसेनश्च तक्षकोऽथोपतक्षकः। पर्व-
ताश्च तथा सर्वे काद्रवेयाश्च सान्वयाः। विषवन्तो महारोषा
नागाश्चार्जुनतोऽभवन् ॥ ४२ ॥ ऐरावताः सौरभेया वैशालेयाश्च
भोगिनः। एतेऽभवन्नर्जुनतः क्षुद्रसर्पास्तु कर्णतः ॥ ४३ ॥ ईहा-
मृगा व्याड़मृगा माङ्गल्याश्च मृगद्विजाः। पार्थस्य विजये राजन्
सर्वे एवाभिसंश्रिताः ॥ ४४ ॥ वसवो मरुतः साध्या रुद्रा विश्वे-
ऽश्विनौ तथा। अग्निरिन्द्रश्च सोमश्च पवनोऽथ दिशो दश।
धनञ्जयस्य ते पक्षे आदित्याः कर्णतोऽभवन् ॥ ४५ ॥ विश शूद्राश्च
सूताश्च ये च सङ्करजातयः। सर्वशस्ते महाराज राधेयमभजं-
स्तथा ॥ ४६ ॥ देवास्तु पितृभिः सार्द्धं सगणाः सपदानुगाः।
यमो वैश्रवणश्चैव वरुणश्च यतोऽर्जुनः। ब्रह्म क्षत्रञ्च यज्ञाश्च
दक्षिणाश्चार्जुनश्रिताः ॥ ४७ ॥ प्रेताश्चैव पिशाचाश्च क्रव्यादाश्च
मृगाण्डजाः। राक्षसाः सह यादोभिः श्वशृगालाश्च कर्णतः ॥४८॥
देवब्रह्मनृपर्षीणां गणाः पाण्डवतोऽभवन्। तुम्बुरुप्रमुखा राजन्
गन्धर्वाश्च यतोऽर्जुनः ॥ ४९ ॥ प्राधेयाः सह मौनेयैर्गन्धर्वाप्सरसां
गणैः। ईहामृगा व्याड़मृगैर्द्विपाश्च रथपत्तिभिः ॥ ५० ॥ उह्य-
मानास्तथा मेघैर्वायुना च मनीषिणः। दिदृक्षवः समाजग्मुः
कर्णार्जुनसमागमम् ॥ ५१ ॥ देवदानवगन्धर्वा नागयक्षाः पत-
त्रिणः। महर्षयो वेदविदः पितरश्च स्वधाभुजः ॥ ५२ ॥ तपो-
निष्ठास्तथौषध्यो नानारूपास्वरस्त्रजः। अन्तरीक्षे महाराज
विनदन्तोऽवतस्थिरे ॥ ५३ ॥ ब्रह्मा ब्रह्मर्षिभिः सार्द्धं प्रजापतिभि-

देव च। भवेनावस्थितो यानं दिव्यं तं देशमागमत् ॥ ५४ ॥
समेतौ तौ महात्मानौ दृष्ट्वा कर्णधनञ्जयौ। अर्जुनो जयतां कर्ण-
मिति शक्रोऽब्रवीत् स्वयम्। जयतामर्जुनं कर्ण इति सूर्य्योऽभ्य-
भाषत ॥ ५५ ॥ हत्वार्जुनं मम सुतः कर्णो जयतु संयुगे। हत्वा
कर्णं जयत्वद्य मम पुत्रो धनञ्जयः ॥ ५६ ॥ इति सूर्य्यस्य चैवासी-
द्विवादो वासवस्य च। पश्यतः स्थितयोस्तत्र तयोः पुरुषसिंहयोः
॥ ५७ ॥ द्वैपक्ष्यमासीद्देवानामसुराणान्तथैव च। समेतौ तौ
महात्मानौ दृष्ट्वा कर्णधनञ्जयौ ॥ ५८ ॥ अकम्पन्त त्रयो लोकाः
सह देवर्षिचारणाः। सर्व्वे देवगणाश्चैव सर्व्वभूतानि यानि च ॥ ५९ ॥
यतः पार्थस्ततो देवा यतः कर्णस्ततोऽसुराः। रथयूथपयी पक्षौ
कुरुपाण्डववीरयोः ॥ ६० ॥ दृष्ट्वा प्रजापतिं देवाः स्वयम्भुवमचो-
दयन्। समोऽस्तु देव विजय एतयोर्नरसिंहयोः ॥ ६१ ॥ कर्णा-
र्जुनविवादेन मा नश्यत्वखिलं जगत्। स्वयम्भो ब्रूहि तद्वाक्यं
समोऽस्तु विजयोऽनयोः ॥ ६२ ॥ तदुपश्रुत्य मघवा प्रणिपत्य
पितामहम्। व्यज्ञापयत देवेशमिदं मतिमतां वर ॥ ६३ ॥ पूर्व्वं
भगवता प्रोक्तं कृष्णयोर्विजयो ध्रुवः। तत्तथास्तु नमस्तेऽस्तु प्रसीद
भगवन्मम ॥ ६४ ॥ ब्रह्मेशानावथो वाक्यमूचतुस्त्रिदशेश्वरम्।
विजयो ध्रुव एवास्तु विजयस्य महात्मनः ॥ ६५ ॥ खाण्डवे येन
हुतभुक् तोषितः सव्यसाचिना। स्वर्गञ्च समनुप्राप्य साहाय्यं शक्र
ते कृतम् ॥ ६६ ॥ कर्णश्च दानवः पक्ष अतः कार्य्यः पराजयः।
एवं कृते भवेत् कार्य्यं देवानामेव निश्चितम् ॥ ६७ ॥ आत्मकार्य्यञ्च
सर्व्वेषां गरीयस्त्रिदशेश्वर। महात्मा फाल्गुनश्चापि सत्यधर्मरतः
सदा। विजयस्तस्य नियतं जायते नात्र संशयः ॥ ६८ ॥ तोषितो
भगवान् येन महात्मा वृषभध्वजः। कथं वा तस्य न जयो जायते
शतलोचन ॥ ६९ ॥ यस्य चक्रे स्वयं विष्णुः सारथ्यं जगतः
प्रभुः। मनस्वी बलवान् शूरः कृतास्त्रश्च तपोधनः ॥ ७० ॥ बिभर्त्ति

च महातेजा धनुर्वेदमशेषतः। पार्थः सर्वगुणोपेतो देवकार्य्यमिदं
यतः ॥ ७१ ॥ अतिक्रमेच्च माहात्म्याद्दिष्टमप्यस्य पर्य्ययः। अति-
क्रान्ते लोकानामभावो नियतं भवेत् ॥ ७२ ॥ न विद्यते व्यव-
स्थानं क्रुद्धयोः कृष्णयोः क्वचित्। स्रष्टारौ ह्यसतश्चैतौ सतश्च
पुरुषर्षभौ ॥ ७३ ॥ नरनारायणावेतौ पुराणावृषिसत्तमौ।
अनियम्यौ नियन्तारावभीतौ स्म परन्तपौ ॥ ७४ ॥ नैतयोस्तु
समः कश्चिद्दिवि वा मानुषेषु वा। अनुगम्य त्रयो लोकाः सह
देवर्षिचारणैः ॥ ७५ ॥ सर्वे देवगणाश्चापि सर्वभूतानि यानि
च। अनयोस्तु प्रभावेण वर्त्तते निखिलं जगत् ॥ ७६ ॥ कर्णो
लोकानयं मुख्यान् प्राप्नोतु पुरुषर्षभः। वसूनाञ्च सलोकत्वं मरुतां
वा समाप्नुयात् ॥ ७७ ॥ सहितो द्रोणभीष्माभ्यां नाकलोके महो-
यताम्। वीरो वैकर्त्तनः शूरो विजयस्त्वस्तु कृष्णयोः ॥ ७८ ॥
इत्युक्तो देवदेवाभ्यां सहस्राक्षोऽब्रवीद्वचः। आमन्त्र्य सर्वभूतानि
ब्रह्मणानानुशासनम् ॥ ७९ ॥ श्रुतं भवद्भिर्यत् प्रोक्तं भगवद्भ्यां
जगद्धितम्। तत्तथा नान्यथा तद्धि तिष्ठध्वं गतमन्यवः ॥ ८० ॥
इति श्रुत्वेन्द्रवचनं सर्वभूतानि मारिष। विस्मितान्यभवन् राजन
पूजयाञ्चक्रिरे च तम् ॥ ८१ ॥ व्यसृजंश्च सुगन्धीनि नानारूपाणि
खात्तदा। पुष्पवर्षाणि विबुधा देवतूर्य्याण्यवादयन् ॥ ८२ ॥ दिदृ-
क्षवश्चाप्रतिमं द्वैरथं नरसिंहयोः। देवदानवगन्धर्वाः सर्व एवा-
वतस्थिरे ॥ ८३ ॥ रथौ तयोः श्वेतहयौ युक्तकेतू महार्जुनौ।
यौ तौ कर्णार्जुनौ राजन् प्रहृष्टावभ्यतिष्ठताम् ॥ ८४ ॥ समागता
लोकवीराः शङ्खान् दध्मुः पृथक् पृथक्। वासुदेवार्जुनौ वीरौ
शल्यकर्णौ च भारत ॥ ८५ ॥ तद्भीरुत्रासनकरं युद्धं समभवत्तदा।
अन्योऽन्यस्पर्द्धिनोरुग्रं शक्रशम्बरयोरिव ॥ ८६ ॥ तयोर्ध्वजौ वीत-
मलौ शुशुभाते रथे स्थितौ। राहुकेतू यथाकाशे उदितौ जगतः
क्षये ॥ ८७ ॥ कर्णस्याशीविषनिभा रत्नसारमयी दृढ़ा। पुर-

न्दरथनु प्रख्या हस्तिकच्चा व्यराजत ॥ ८८ ॥ कपिश्रेष्ठस्तु पार्थस्य व्यादितास्यो भयङ्करः। भीषयन्नेव दंष्ट्राभिर्दुर्निरीक्ष्यो रविर्यथा ॥ ८९ ॥ युद्धाभिलाषुको भूत्वा ध्वजो गाण्डीवधन्वनः। कर्णध्वजमुपातिष्ठत् स्वस्थानाद्वेगवान् कपिः ॥ ९० ॥ उत्पत्य तु महावेगः कच्चामभ्यहनत् कपिः। नखैश्च दशनश्चैव गरुड़ः पन्नगं यथा ॥ ९१ ॥ सकिङ्किणीकाभरणा कालपाशोपमायसी। अभ्यद्रवत् सुसंक्रुद्धा नागकच्चाथ तं कपिम् ॥ ९२ ॥ तयोर्घोरतमे युद्धे द्वैरथे द्यूत आहिते। प्रकुर्वाते ध्वजौ युद्धं प्रत्यहेषन् हयान् हयाः ॥ ९३ ॥ अविध्यत् पुण्डरीकाक्षः शल्यं नयनसायकैः। स चापि पुण्डरीकाक्षं तथैवाभिसमैक्षत ॥ ९४ ॥ तत्राजयद्वासुदेवः शल्यं नयनसायकैः। कर्णञ्चाप्यजयद्दृष्ट्या कुन्तीपुत्रो धनञ्जयः ॥ ९५ ॥ अथाब्रवीत् सूतपुत्रः शल्यमाभाष्य सस्मितम्। यदि पार्थो रणे हन्यादद्य मामिह कर्हिचित् ॥ ९६ ॥ किमुत्तरं तदा ते स्यात् सखे सत्यं ब्रवीहि मे। हते त्वयि त्वहं हन्यामुभौ कृष्णधनञ्जयौ ॥ ९७ ॥

शल्य उवाच। यदि कर्ण रणे हन्यादद्य त्वां श्वेतवाहनः। उभावेकरथेनाहं हन्यां माधवफाल्गुनौ ॥ ९८ ॥

सञ्जय उवाच। एवमेव तु गोविन्दमर्जुनः प्रत्यभाषत। तं प्रहस्याब्रवीत् कृष्णः पार्थं परमिदं वचः ॥ ९९ ॥ पतेद्दिवाकरः स्थानात् शीर्य्येतानेकधा क्षितिः। शैत्यमग्निरियायान्न त्वां कर्णो हन्याद्धनञ्जय ॥ १०० ॥ यदि त्वेवं कथञ्चित् स्यात् लोकपर्य्यासनं तथा। हन्यां कर्णं तथा शल्यं बाहुभ्यामेव संयुगे ॥ १०१ ॥ इति कृष्णवचः श्रुत्वा प्रहसन् कपिकेतनः। अर्जुनः प्रत्युवाचेदं कृष्णमक्लिष्टकारिणम् ॥ १०२ ॥ ममैव तावत् पर्य्याप्तौ शल्यकर्णौ जनार्द्दन। सपताकध्वजं कर्णं सशल्यरथवाजिनम् ॥ १०३ ॥ सच्छत्रकवचञ्चैव सशक्तिशरकार्मुकम्। द्रष्टास्यद्य रणे कृष्ण शरैश्छिन्न-

मनेकधा ॥ १०४ ॥ अद्यैनं शरधं शास्त्रं सशक्तिकवनायुधम् ।
संचूर्णितमिवारण्ये पादपं दन्तिना यथा ॥ १०५ ॥ अद्य राधेय-
भार्याणां वैधव्यं समुपस्थितम् । ध्रुवं स्वप्ने ह्यनिष्टानि ताभि-
र्दृष्टानि माधव ॥ १०६ ॥ ध्रुवमद्यैव द्रष्टासि विधवाः कर्ण-
योषितः । न मृष्यते हि मे मन्युर्यदनेन कृतं पुरा ॥ १०७ ॥
कृष्णां सभागतां दृष्ट्वा मूढेनादीर्घदर्शिना । अस्मांस्तदोपहसता
क्षिपता च पुनः पुनः ॥ १०८ ॥ अद्य द्रष्टासि गोविन्द कर्णमुन्म-
थितं मया । वारणेनेव मत्तेन पुष्पितं जगतीरुहम् ॥ १०९ ॥
अद्य ता मधुरा वाचः श्रोतासि मधुसूदन । दिष्ट्या जयसि
वार्ष्णेय इति कर्णे निपातिते ॥ ११० ॥ अद्याभिमन्युजननीमनृणः
सान्त्वयिष्यसि । कुन्तीं पितृष्वसारञ्च संप्रहृष्टो जनार्द्दन ॥ १११ ॥
अद्य वाष्पमुखीं कृष्णां सान्त्वयिष्यसि माधव । वाग्भिश्चामृत-
कल्पाभिर्धर्मराजं युधिष्ठिरम् ॥ ११२ ॥

इति कर्णपर्वणि कर्णार्जुनद्वैरथे सप्ताशीतोऽध्यायः ॥ ८७ ॥

---

सञ्जय उवाच । तद्देवनागासुरसिद्धयक्षैर्गन्धर्वरक्षोऽप्सरसाञ्च
सङ्घैः । ब्रह्मर्षिराजर्षिसुपर्णजुष्टं बभौ वियद्विस्मयनीयरूपम्
॥ १ ॥ नानद्यमानं निनदैर्मनोज्ञैर्वादित्रगीतस्तुतिहास्यनृत्यैः ।
सर्वेऽन्तरीक्षं ददृशुर्मनुष्याः खस्थांश्च तान्विस्मयनीयरूपान् ॥ २ ॥
ततः प्रहृष्टाः कुरुपाण्डुयोधा वादित्रशङ्खस्वनसिंहनादैः । निना-
दयन्तो वसुधां दिशश्च स्वनेन सर्वे द्विषतो निजघ्नुः ॥ ३ ॥ नराश्व-
मातङ्गरथायुधाकुलं गदासिशक्त्यृष्टिनिपातदुःसहम् । अभीरुजुष्टं
हततेहसंकुलं रणाजिरं लोहितमावभौ तदा । बभूव युद्धं कुरु-
पाण्डवानां यथा सुराणामसुरैः सहाभवत् ॥ ४ ॥ तथा प्रवृत्ते
ऽस्त्रभृतां पराभवे धनञ्जयस्याधिरथेश्च सायकैः । दिशश्च सैन्यञ्च

शितैरजिह्मगैः परस्परं प्रावृणुतां सुसंशितौ ॥ ५ ॥ ततस्त्वदीयाश्च
परे च सायकैः कृतेऽन्धकारे विविदुर्न किञ्चन । भयात्तु ताविक-
रथौ समाश्रयंस्तमोनुदौ खे प्रसृता इवांशवः ॥ ६ ॥ ततोऽस्त्र-
मस्त्रेण परस्परस्य तौ विधूय वाताविव पूर्व्वपश्चिमौ । घनान्धकारे
वितते तमोनुदौ यथोदितौ तद्वदतीव रेजतुः ॥ ७ ॥ न चाभि-
सर्त्तव्यमिति प्रचोदिताः परे त्वदीयाश्च तदावतस्थिरे । महारथौ
तौ परिवार्य्य सर्व्वतः सुरासुराः शम्बरवासवाविव ॥ ८ ॥ मृदङ्ग-
भेरीपणवानकस्वनैर्निनादितौ भारत शङ्खनिस्वनैः । तौ सिंह-
नादं नदतुर्नरोत्तमौ शशाङ्कसूर्य्याविव मेघसंप्लवे ॥ ९ ॥ महा-
धनुर्मण्डलमध्यगावुभौ सुवर्च्चसौ बाणसहस्ररश्मिनौ । दिधक्ष-
माणौ सचराचरं जगत् युगान्तसूर्य्याविव दुःसहौ रणे ॥ १० ॥
उभावजेयावहितान्तकावुभावुभौ जिघांसू कृतिनौ परस्परम् ।
महाहवे वीरतरौ समीयतुर्महेन्द्रजम्भाविव कर्णपाण्डवौ ॥ ११ ॥
ततो महास्त्राणि महाधनुर्द्धरौ विमुञ्चमानाविषुभिर्भयानकैः ।
नराश्वनागानमितान्निजघ्नतुः परस्परञ्चापि महारथौ नृप ॥ १२ ॥
ततो विसस्रुः पुनरर्द्दिता नरा नरोत्तमाभ्यां कुरुपाण्डवाश्रयाः ।
सनागपत्त्यश्वरथा दिशो दशस्तथा यथा सिंहहता वनौकसः ॥१३॥
ततस्तु दुर्य्योधनभोजसौवलाः कृपश्च शारद्वतसूनुनासह । महा-
रथाः पञ्च धनञ्जयाच्युतौ शरैः शरीरान्तकरैरताडयन् ॥ १४ ॥
धनूंषि तेषामिषुधीन् हयान् गजाग्रयान् ससूतांश्च धनञ्जयः शरैः ।
समं प्रचिच्छेदपराभिनच्च ताञ्छरोत्तमैर्द्दादशभिश्च सूतजम् ॥ १५ ॥
अथाभ्यधावंस्त्वरितं शतं रथाः शतं गजाश्चार्ज्जुनमाततायिनः ।
शकास्तुखारा यवनाश्च सादिनः सहैव काम्बोजवरैर्ज्जिघांसवः ॥१६॥
वरायुधान् पाणिगतैः शरैः सह करैर्निकृन्तंस्त्वरितः शिरांसि च ।
हयांश्च नागांश्च रथांश्च युध्यतो धनञ्जयः शत्रुगताम्क्षितौ क्षिणोत्
॥ १७ ॥ ततोऽन्तरीक्षे सुरतूर्य्यनिस्वनाः ससाधुवादा हृषितैः

समीरिताः। न पितुरप्युत्समपुष्पहृष्टय सुगन्धिगन्धाः पवनेरिताः शिवा ॥ १८ ॥ तदद्भुतं देवमनुष्यसाक्षिकं समीक्ष्य भूतानि विसिस्मियुर्नृप। तवात्मजः सूतसुतश्च न व्यथां न विस्मयं जग्मतुरेकनिश्चयौ ॥ १९ ॥ अथाब्रवीद्द्रोणसुतस्तवात्मजं करं करेण प्रतिपीड्य सान्त्वयन् ॥ २० ॥ प्रसीद दुर्योधन शाम्य पाण्डवैरलं विरोधेन धिगस्तु विग्रहम्। हतो गुरुर्ब्रह्मसमो महास्त्रवित् अथैव भीष्मप्रमुखा नरर्षभाः ॥ २१ ॥ अहं त्ववध्यो मम चापि मातुलः प्रशाधि राज्यं सह पाण्डवैश्चिरम्। धनञ्जयः शाम्यति वारितो मया जनार्दनो नैव विरोधमिच्छति ॥ २२ ॥ युधिष्ठिरो भूतहिते सदा रतो वृकोदरस्तद्वशगस्तथा यमौ। त्वया तु पार्थैव कृते च संविदे प्रजाः शिवं प्राप्नुयुरिच्छया तव ॥ २३ ॥ व्रजन्तु शेषाः स्वपुराणि पार्थिवा निवृत्तवैरास्तु भवन्तु सैनिकाः। न चेद्वचः श्रोष्यसि मे नराधिप ध्रुवं प्रतप्तासि हतोऽरिभिर्युधि ॥ २४ ॥ इदश्च दृष्टं जगता सह त्वया कृतं यदेकेन किरीटमालिना। यथा न कुर्य्यादबलभिन्न चान्तको न च प्रचेता भगवान्न यक्षराट् ॥ २[illegible] ॥ अतोऽपि भूयांश्च गुणैर्धनञ्जयो न चातिवर्त्तिष्यति मे वचोऽ[illegible]म। तवानुयात्रञ्च सदा करिष्यति प्रसीद राजन् जगतः शिवाय वै ॥ २६ ॥ ममापि मानः परमः सदा त्वयि ब्रवीम्यतस्त्वां परमाच्च सौहृदात्। निवारयिष्याम्यथ कर्णमप्यहं यदा भवान् सप्रणयो भविष्यति ॥ २७ ॥ वदन्ति मित्रं सहजं विचक्षणास्तथैव साम्ना च धनेन चार्ज्जितम्। प्रतापतश्चोपनतञ्चतुर्विधं तदस्ति सर्वं तव पाण्डवेषु च ॥ २८ ॥ निसर्गतस्ते तव वीर बान्धवाः पुनश्च साम्ना समवाप्नुहि स्थिरम्। त्वयि प्रसन्ने यदि मित्रतामियुर्ध्रुवं नरेन्द्रेन्द्र तथा त्वमाचर ॥ २९ ॥ स एवमुक्तः सुहृदा वचो हितं विचिन्त्य निश्वस्य च दुर्मनाब्रवीत्। यथा भवानाह सखे तथैव तन्ममापि विज्ञापयतो वचः शृणु ॥ ३० ॥ निहत्य दुःशासनमुक्तवान् वचः

प्रसह्य शार्दूलइवेष दुर्मतिः। वृकोदरस्त्वद्य दृषी मम स्थितं न
तत् परां भवतः कुतः शमः ॥ ३१ ॥ न चापि कर्णं प्रसहेद्रणे-
ऽर्जुनो महागिरिं मेरुमिवोग्रमारुतः। न चाश्वसिष्यन्ति पृथात्मजा
मयि प्रसह्य वैरं बहुशो विचिन्त्य ॥ ३२ ॥ न चापि कर्णं गुरुपुत्र
संयुगादुपारमेत्यर्हसि वक्तुमच्युत। श्रमेण युक्तो महताद्य फाल्गुनस्-
तमेष कर्णः प्रसभं हनिष्यति ॥ ३३ ॥ तमेवमुक्त्वाप्यनुनीय चास-
कृत् तवात्मजः स्वाननुशास्ति सैनिकान्। विनिघ्नताभिद्रवताह्विता-
निमान् सबाणहस्ताः किमु जोषमासत ॥ ३४ ॥

इति कर्णपर्व्वणि अश्वत्थामवाक्ये अष्टाशीतोऽध्यायः ॥ ८८ ॥

---

सञ्जय उवाच। तौ शङ्खभेरीनिनदे समृद्धे समीयतुः श्वेत-
हयौ नराग्र्यौ। वैकर्त्तनः सूतपुत्रोऽर्जुनश्च दुर्मन्त्रिते तव पुत्रस्य
राजन् ॥ १ ॥ यथा गजौ हैमवतौ प्रभिन्नौ प्रवृद्धदन्ताविव वासि-
तार्थे। तथा समाजग्मतुरुग्रवेगौ धनञ्जयश्चाधिरथिश्च वीरौ ॥ २ ॥
बलाहकेनेव यथा बलाहको यदृच्छया वा गिरिणा गिरिर्यथा।
तथा धनुर्ज्यातलनेमिस्वनैः समीयतुस्ताविषुवर्षवर्षिणौ ॥ ३ ॥
प्रवृद्धशृङ्गद्रुमवीरुधौषधी प्रवृद्धनानाविधपर्वतौकसौ। यथाचला-
वाचलितौ महाबलौ तथा महास्त्रैरितरेतरं घ्नतः ॥ ४ ॥ स
सन्निपातस्तु तयोर्महानभूत् सुरेशवैरोचनयोर्यथा पुरा। शरै-
र्विभिन्नाङ्गनियन्तृवाहयोः सुदुःसहोऽन्यैः कटुशोणितोदकः ॥ ५ ॥
प्रभूतपद्मोत्पलमत्स्यकच्छपौ महाह्रदौ पक्षिगणानुनादितौ।
सुसन्निकृष्टावनिलोद्धतौ यथा तथा रथौ तौ ध्वजिनौ समीयतुः
॥ ६ ॥ उभौ महेन्द्रस्य समानविक्रमावुभौ महेन्द्रप्रतिमौ महा-
रथौ। महेन्द्रवज्रप्रतिमैश्च सायकैर्महेन्द्रवृत्राविव संप्रजह्रतुः ॥ ७ ॥
सनागपत्त्यश्वरथे उभे बले विचित्रवर्माभरणाम्बरायुधे। चकम्पतु-

श्चोन्नमतुश्च विस्मयाद्दियद्गताश्चार्जुनकर्णसंयुगे ॥ ८ ॥ भुजाः स-
वस्त्राङ्गुलयः समुच्छ्रिताः ससिंहनादैर्हृषितैर्दिदृक्षुभिः । यदर्जुनं
मत्तमिव द्विपो द्विपं समभ्ययादाधिरथिर्जिघांसया ॥ ९ ॥ उद-
क्रोशन् सोमकास्तत्र पार्थं त्वरस्व याह्यर्जुन भिन्धि कर्णम् ।
छिन्ध्यस्य मूर्द्धानमलं चिरेण श्रद्धाञ्च राज्याद्धृतराष्ट्रसूनोः ॥ १० ॥
तथास्माकं बहवस्तत्र योधाः कर्णं तदा याहि याहीत्यवोचन् ।
जह्यर्जुनं कर्ण शरैः सुतीक्ष्णैः पुनर्वनं यान्तु चिराय पार्थाः ॥ ११ ॥
ततः कर्णः प्रथमं तत्र पार्थं महेषुभिर्दशभिः प्रत्यविध्यत् । तमर्जुनः
प्रत्यविध्यच्छिताग्रैः कक्षान्तरे दशभिः संप्रहस्य ॥ १२ ॥ परस्परं
तौ विशिखैः सुपुङ्खैस्ततक्षतुः सूतपुत्रोऽर्जुनश्च । परस्परस्यान्त-
रेप्सू विमर्द्दे सुभीममभ्यापततुश्च हृष्टौ ॥ १३ ॥ ततोऽर्जुनः
प्रासृजदुग्रधन्वा भुजावुभौ गाण्डिवञ्चापमृज्य । नाराचनालीक-
वराहकर्णान् क्षुरांस्तथा साञ्जलिकार्द्धचन्द्रान् ॥ १४ ॥ ते सर्वतः
समकीर्य्यन्त राजन् पार्थेषवः कर्णरथं विशन्तः । अवाङ्मुखाः
पक्षिगणा दिनान्ते विशन्ति केतार्थमिवाशु वृक्षम् ॥ १५ ॥ या-
नर्जुनः सभ्रुकुटीकटाक्षः कर्णाय राजन्नसृजज्जितारिः । तान्
सायकैर्ग्रसते सूतपुत्रः क्षिप्तान् क्षिप्तान् पाण्डवस्येषुसङ्घान् ॥ १६ ॥
ततोऽस्त्रमाग्नेयममित्रसाधनं मुमोच कर्णाय महेन्द्रसूनुः । भूम्य-
न्तरीक्षे च दिशोऽर्कमार्गं प्रावृत्य देहोऽस्य बभूव दीप्तः ॥ १७ ॥
योधाश्च सर्वे ज्वलिताम्बरा भृशं प्रदुद्रुवुस्तत्र विदग्धवस्त्राः । शब्दश्च
घोरोऽतिबभूव तत्र यथा वने वेणुवनस्य दह्यतः ॥ १८ ॥ तदीक्ष्य
कर्णो ज्वलनास्त्रमुद्यतं स वारुणं तत्प्रशमार्थमाहवे । समुत्सृजन्
सूतसुतः प्रतापवान् स तेन वह्निं शमयाम्बभूव ॥ १९ ॥ बला-
हकौघश्च दिशस्तरस्वी चकार सर्वास्तिमिरेण संवृताः । ततो
धरित्रीधरतुल्यरोधसः समन्ततो वै परिवार्य वारिणा ॥ २० ॥
तैश्चापि वेगात् स तथाविधोऽपि नीतः शमं वह्निरतिप्रचण्डः ।

बलाहकैश्चैव दिगन्तराणि व्याप्तानि सर्व्वाणि तथा नभश्च ॥ २१ ॥
तथा च सर्व्वास्तिमिरेण वै दिशो मेघैर्वृता न प्रदृश्येत किञ्चित् ।
अथापोवाहास्त्रमखण्डमस्ततस्तान् वायव्यास्त्रेण ततः स कर्णात् ॥२२ ॥
ततोऽप्यस्त्रं दयित देवराज्ञः प्रादुश्चक्रे वज्रप्रतिमप्रभावम् । गाण्डीवं
ज्यां विशिखांश्चानुमन्त्र्य धनञ्जयः शत्रुभिरप्रधृष्यः ॥ २३ ॥ ततः
क्षुरप्राञ्जलिकार्द्धचन्द्रा नालीकनाराचवराहकर्णाः । गाण्डीवतः
प्रादुरासन् सुतीक्ष्णाः सहस्रशो वज्रसमानवेगाः ॥ २४ ॥ ते
कर्णमासाद्य महाप्रभावाः सुतेजना गार्द्धपत्राः सुवेगाः । गात्रेषु
सर्व्वेषु हयेषु चापि शरासने युगचक्रे ध्वजे च ॥ २५ ॥ निर्भिद्य
तूर्णं विविशुः सुतीक्ष्णास्तार्क्ष्यत्रस्ता भूमिमिवोरगास्ते । शराचिताङ्गो
रुधिरार्द्रगात्रः कर्णस्तदा रोषविवृत्तनेत्रः ॥ २६ ॥ दृढ़ज्यमानाम्य
समुद्रघोषं प्रादुश्चक्रे भार्गवास्त्रं महात्मा । महेन्द्रशस्त्राभिमुखान्
विमुक्तान् छित्त्वा कर्णः पाण्डवस्येषुसङ्घान् ॥ २७ ॥ तस्यास्त्र-
मस्त्रेण निहत्य सोऽथ जघान सङ्ख्ये रथनागपत्तीन् । अमृष्य-
माणस्तु महाविमर्द्दे महारथो भार्गवास्त्रप्रभावात् ॥ २८ ॥ पाञ्चा-
लानां प्रवरांश्चापि योधान् क्रोधाविष्टः सूतपुत्रस्तरस्वी । वाणै-
र्विव्याधाहवे सुप्रयुक्तैः प्रहस्य कृष्णौ तु नरप्रवीरः ॥ २९ ॥ ततः
पाञ्चालाः सोमकाश्चापि राजन् कर्णेनाजौ पीड्यमानाः शरौघैः ।
क्रोधाविष्टा विविधुस्ते समन्तात् तीक्ष्णैर्वाणैः सूतपुत्रं समेताः
॥ ३० ॥ तांस्तांस्तैस्तैः सन्निकृत्याशु वाणान् पाञ्चालानां रथ-
नागाश्वसङ्घान् । अभ्यर्द्दयद्बाणगणैः प्रसह्य विक्षोभयन् समरे
सूतपुत्रः ॥ ३१ ॥ ते भिन्नदेहा व्यसवो निपेतुः कर्णेषुभिर्भूमितले
स्तनन्तः । क्रुद्धेन सिंहेन यथैव नागा महाबला भीमबलेन तद्वत्
॥ ३२ ॥ पाञ्चालानां प्रवरान् सन्निहत्य संस्पर्द्धमानान् बलिनो
योधमुख्यान् । ततः स राजन् विरराज कर्णः शरान् सृजन्मेघ
इवाम्बुधाराः ॥ ३३ ॥ कर्णस्य मत्वा तु जयं त्वदीयास्तलान्निजघ्नुः

सिंहनादांश्च चक्रुः। सर्वे ह्यमन्यन्त वशे कृतौ तौ कर्णेन कृष्णा-
विति कौरवेन्द्र ॥ ३४ ॥ तत्तादृशं प्रेक्ष्य महारथस्य कर्णस्य
वीर्य्यन्तु परैरसह्यम्। दृष्ट्वा च कर्णेन धनञ्जयस्य संग्राममध्ये
विद्रवं तरस्विन् ॥ ३५ ॥ ततस्त्वमर्षी क्रोधसंदीप्तनेत्रो वातात्मजः
पाणिना पाणिमार्च्छत्। भीमोऽब्रवीदर्जुनं सत्यसन्धममर्षितो
निश्वसन् जातमन्युः ॥ ३६ ॥ कथन्नु पापोऽयमपेतधर्मः सूतात्मजः
समरेऽद्य प्रसह्य। पाञ्चालानां योधमुख्याननेकान्निजघ्निवांस्तव
जिष्णो समक्षम् ॥ ३७ ॥ पूर्वं देवैरजितं कालकेयैः साक्षात्
स्थाणोर्बाहुसंस्पर्शमेत्य। कथं नु त्वां सूतपुत्रः किरीटिन्नद्येषुभि-
र्द्दशभिः प्रागविध्यत्। त्वया क्षिप्तान्ग्रसद्बाणसङ्घानाश्चर्य्यमेतत्
प्रतिभाति मेऽद्य ॥ ३८ ॥ कृष्णापरिक्लेशमनुस्मर त्वं यथाब्रवीत्
षण्डतिलानिति स्म। वाचः सुतीक्ष्णास्थिभिदोऽसमीक्ष्याः सूता-
त्मजोऽयं गतभीर्दुरात्मा ॥ ३९ ॥ संस्मृत्य तत् सर्वमिहाद्य पापं
जह्याशु कर्णं युधि सव्यसाचिन्। कस्मादुपेक्षां कुरुषे किरीटि-
न्नुपेक्षितुं नायमिहाद्य कालः ॥ ४० ॥ यया धृत्या सर्वभूता-
न्यजैषीर्ग्रासं ददद्वह्नये खाण्डवे त्वम्। तया धृत्या सूतपुत्रं जहि
त्वमहञ्चैनं गदया पोथयिष्ये ॥ ४१ ॥ अथाब्रवीद्वासुदेवोऽपि पार्थं
दृष्ट्वा रथेषून् प्रतिहन्यमानान् ॥ ४२ ॥ अमीमृदत् सर्वथा तेऽद्य
कर्णो ह्यस्त्रैरस्त्रं किमिदं भोः किरीटिन्। स वीर किं मुह्यसि
नावधत्से नदन्त्येते कुरवः संप्रहृष्टाः। कर्णं पुरस्कृत्य विदुर्हि सर्वे
तवास्त्रमस्त्रैर्विनिपात्यमानम् ॥ ४३ ॥ यया धृत्या निहतं ताम-
सास्त्रं युगे युगे राक्षसाश्चापि घोराः। दम्भोद्भवाश्चासुराश्चाहवेषु
तया धृत्या जहि कर्णं त्वमद्य ॥ ४४ ॥ अनेन चास्य क्षुरनेमिनाद्य
संछिन्धि मूर्द्धानमरेः प्रसह्य। मया विसृष्टेन सुदर्शनेन वज्रेण
शक्रो नमुचेरिवारेः ॥ ४५ ॥ किरातरूपी भगवान् यया च त्वया
महात्मा परितोषितोऽभूत्। तां त्वं धृतिं वीर पुनर्गृहीत्वा

सहानुबन्धं जहि सूतपुत्रम् ॥ ४६ ॥ ततो मही सागरमेखलां त्वं सपत्तनां ग्रामवतीं समृद्धाम् । प्रयच्छ राज्ञे निहतारिसङ्घो यशश्च पार्थातुलमाप्नुहि त्वम् ॥ ४७ ॥ स एवमुक्तोऽतिवलो महात्मा चकार बुद्धिं हि वधाय सौतेः । स चोदितो भीमजनार्द्दनाभ्यां स्मृत्वा तथात्मानमवेक्ष्य सर्वम् । इहात्मनश्चागमने विदित्वा प्रयोजनं केशवमित्युवाच ॥ ४८ ॥ प्रादुष्करोम्येष महास्त्रमुग्रं शिवाय लोकस्य वधाय सौतेः । तन्मेऽनुजानातु भवान् सुराश्च ब्रह्मा भवो ब्रह्मविदश्च सर्वे ॥ ४९ ॥ इत्युच्य देवं स तु सव्यसाची नमस्कृत्वा ब्रह्मणे सोऽमितात्मा । तदुत्तमं ब्राह्ममसह्यमस्त्रं प्रादुश्चक्रे मनसा यद्विधेयम् ॥ ५० ॥ तदस्य हत्वा विरराज कर्णो मुक्ता शरांश्चैव दृष्टाम्बुधाराः ॥ ५१ ॥ समीक्ष्य कर्णेन किरीटिनस्तु तथाजिमध्ये विहितं तदस्त्रम् । ततोऽमर्षी वलवान् क्रोधदीप्तो भीमोऽब्रवीदर्जुनं सत्यसन्धम् ॥ ५२ ॥ ननु त्वाहुर्वेदितारं महास्त्रं ब्राह्मं विधेयं परमं जनास्त्वत् । तस्मादन्यद्योजय सव्यसाचिन्निति सोऽत्रेऽयोजयत् सव्यसाची ॥ ५३ ॥ ततो दिशश्च प्रदिशश्च सर्वाः समावृणोत् सायकैर्भूरितेजाः । गाण्डीवमुक्तैर्भुजगैरिवोग्रैर्द्दिवाकरांशुप्रतिमैर्ज्ज्वलद्भिः ॥ ५४ ॥ सृष्टास्तु वाणा भरतर्षभेण शतं शतानीव सुवर्णपुङ्खाः । प्राच्छादयत् कर्णरथं क्षणेन युगान्तवह्न्यर्ककरप्रकाशाः ॥ ५५ ॥ ततश्च शूलानि परश्वधानि चक्राणि नाराचशतानि चैव । निश्चक्रमुर्घोरतराणि योधास्ततो ह्यहन्यन्त समन्ततोऽपि ॥ ५६ ॥ छिन्नं शिरः कस्यचिदाजिमध्ये पपात योधस्य परस्य कायात् । भयेन सोऽप्याशु पपात भूमावन्यः प्रनष्टः पतितं विलोक्य ॥ ५७ ॥ अन्यस्य सासिर्निपपात कृत्तो योधस्य वाहुः करिहस्ततुल्यः । अन्यस्य सव्यः सह चर्मणा च क्षुरप्रकृत्तः पतितो धरण्याम् ॥ ५८ ॥ एवं समस्तानपि योधमुख्यान् विध्वंसयामास किरीटमाली । शरैः शरीरान्तकरैः सुघोरैर्दौर्य्योधनं सैन्यमशेष-

मेव ॥ ५९ ॥ वैकर्त्तनेनापि तथाजिमध्ये सहस्रशो बाणगणा विसृष्टा। ते घोषिणः पाण्डवमभ्युपेयुः पर्ज्जन्यमुक्ता इव वारिधाराः ॥ ६० ॥ स भीमसेनञ्च जनार्द्दनञ्च किरीटिनञ्चाप्यमनुष्यकर्मा। त्रिभिस्त्रिभिर्भीमबलोऽभिहत्य ननाद घोरं महता स्वरेण ॥ ६१ ॥ स कर्णबाणाभिहतः किरीटी भीमं तदा प्रेक्ष्य जनार्द्दनञ्च। अमृष्यमाणः पुनरेव पार्थः शरान् दशाष्टौ च समुद्ववर्ह ॥ ६२ ॥ सुषेणमेकेन शरेण विद्धा शल्यञ्चतुर्भिस्त्रिभिरेव कर्णम्। ततः सुमुक्तैर्द्दशभिर्ज्जघान सभापतिं काञ्चनवर्म्मनद्धम् ॥ ६३ ॥ स राजपुत्रो विशिरा विबाहुर्विवाजिसूतो विधनुर्विकेतुः। हतो रथाग्रादपतत् स रुग्णः परश्वधैः शाल इवावकृत्तः ॥ ६४ ॥ पुनश्च कर्णं त्रिभिरष्टभिश्च द्वाभ्याञ्चतुर्भिर्द्दशभिश्च विद्धा। चतु न द्विरदान् सायुधीयान् हत्वा रथानष्टशतं जघान ॥ ६५ ॥ सह मश्वांश्च पुनः ससादीनष्टौ सहस्राणि न पत्तिवीरान्। कर्णं सरं सरथाश्वकेतुमदृश्यमञ्जोगतिभिश्च चक्रे ॥ ६६ ॥ ततोऽक्रो कुरवो वध्यमाना धनञ्जयेनाधिरथिं समन्तात्। विमुञ्च बाण जहि पाण्डुपुत्रं बाणैः पुरा हन्ति कुरून् समग्रान् ॥ ६७ ॥ स चोदितः सर्व्वयत्नेन कर्णो मुमोच बाणान् सुबहूनभीक्ष्णं। ते पाण्डुपाञ्चालगणान्निजघ्नुर्म्मर्म्मच्छिदः शोणितपाः सुमुक्ताः ॥ ६८ ॥ तावुत्तमौ सर्व्वधनुर्द्धराणां महाबलौ सर्व्वसपत्नसाहौ। निजघ्नतुश्चाहितसैन्यमुग्रावन्योऽन्यमप्यस्त्रविदौ महास्त्रैः ॥ ६९ ॥ अथोपयातस्त्वरितो दिदृक्षुर्म्मन्त्रौषधिभ्यां विरुजो विशल्यः। कृतः सुहृद्भिर्भिषजांवरिष्ठैर्युधिष्ठिरस्तत्र सुवर्णवर्म्मा ॥ ७० ॥ तत्रोपयातं युधि धर्म्मराजं दृष्ट्वा मुदा सर्व्वभूतान्यनन्दन्। राहोर्व्विमुक्तं विमलं समग्रं चन्द्रं यथैवाभ्युदितं तथैव ॥ ७१ ॥ दृष्ट्वा तु मुख्यावथ युध्यमानौ दिदृक्षवः शूरवरावरिघ्नौ। कर्णञ्च पार्थञ्च नियम्य वाहान् खस्था महीस्थाश्च जना वितस्थुः ॥ ७२ ॥ स कार्मुक-

ज्यातलसन्निपातः सुमुक्तबाणस्तुमुलो बभूव। प्रतीस्तथान्योन्य-मिषुप्रवेकैर्द्दन्तञ्जयस्याधिरथेश्च राजन् ॥ ७३ ॥ ततो धनुर्ज्या सहसातिकृष्टा सुघोषमच्छिद्यत पाण्डवस्य। तस्मिन् क्षणे सूत-पुत्रस्तु पार्थं समाचिनोत् क्षुद्रकाणां शतेन ॥ ७४ ॥ निर्मुक्तसर्प-प्रतिमैश्च तीक्ष्णैस्तैलप्रधौतैः खगपत्रवाजैः। षष्ट्या नाराचैर्वासु-देवं बिभेद तदन्तरं प्राद्रवन् सोमकाश्च ॥ ७५ ॥ प्राच्छादयंस्ते निशितैः पृषत्कैर्जीमूतसङ्घा नभसीव सूर्य्यम्। आगच्छतस्तान् विशिखैरनेकैर्व्यष्टम्भयत् सूतपुत्रः कृतास्त्रः ॥ ७६ ॥ तैरस्त्रमस्त्रै-र्विनिहत्य सर्वं जघान तेषां रथवाजिनागान्। तथा तु सैन्य-प्रवरांश्च राजन्नभ्यर्द्दयन्मार्गणैः सूतपुत्रः ॥ ७७ ॥ ते भिन्नदेहा व्यसवो निपेतुः कर्णेषुभिर्भूमितले स्तनन्तः। क्रुद्धेन सिंहेन यथा श्वयूथा महाबला भीमबलेन तद्वत् ॥ ७८ ॥ पुनश्च पाञ्चालवरा-स्तथान्ये तदन्तरे कर्णधनञ्जयाभ्याम्। प्रस्कन्दतो वलिनः साधु-मुक्तैः कर्णेन बाणैर्निहता प्रसह्य ॥ ७९ ॥ जयन्तु मत्वा विपुलं त्वदीयास्तलान्निजघ्नुः सिंहनादांश्च नेदुः। सर्वे ह्यमन्यन्त वशे कृतौ तौ कर्णेन कृष्णाविति ते विमर्द्दे ॥ ८० ॥ ततो धनुर्ज्यामव-नाम्य शीघ्रं शरानस्तानाधिरथेर्विधम्य। सुसंरब्धः कर्णशर-क्षताङ्गो रणे पार्थः कौरवान् प्रत्यरुन्धात् ॥ ८१ ॥ ज्याञ्चानुमृज्या-भ्यहनत्तलत्रे बाणान्धकारानकरोत् क्षणेन। प्रत्यञ्च कर्णञ्च कुरूंश्च सर्वान् बाणैरविध्यद्युगपत् किरीटी ॥ ८२ ॥ न पक्षिणो व्यपतन्नन्तरीक्षे क्षेपीयसास्त्रेण कृतान्धकारे। वायुर्वियत्स्थै-रीरितो भूतसङ्घैरुवाह दिव्यः सुरभिस्तदानीम् ॥ ८३ ॥ शल्यन्तु पार्थो दशभिः पृषत्कैर्भृशं तनुत्रे प्रहसन्नविध्यत्। ततः कर्णं द्वादशभिः सुमुक्तैर्विद्ध्वा पुनः सप्तभिरत्यविध्यत् ॥ ८४ ॥ स पार्थ-बाणाशनवेगमुक्तैर्दृढाहतः पत्रिभिरुग्रवेगैः। विभिन्नगात्रः क्षत-शोणिताङ्गः कर्णो बभौ रुद्र इवाततेषुः। प्रक्रीड़माणश्च श्मशाना-

मध्ये रौद्रे मुहूर्त्ते रुधिरार्द्रगात्रः ॥ ८५ ॥ ततस्त्रिभिस्तं विदशाधिपोपमं शरैर्विभेदाधिरथिर्धनञ्जयम्। शरांश्च पञ्च ज्वलितानिवोरगान् प्रवेशयामास जिघांसुरच्युतम् ॥ ८६ ॥ ते वर्म्म भित्त्वा पुरुषोत्तमस्य सुवर्णचित्रा न्यपतन् सुमुक्ताः। वेगेन गामाविविशुः सुवेगाः स्नात्वा च कर्णाभिमुखाः प्रतीयुः ॥ ८७ ॥ तान् पञ्च भल्लैर्दशभिः सुमुक्तैस्त्रिधात्रिधैकैकमथोच्चकर्त्त। धनञ्जयस्ते न्यपतन् पृथिव्यां महाहयस्तक्षकपुत्रपक्षाः ॥ ८८ ॥ ततः प्रजज्वाल किरीटमाली क्रोधेन कक्षं प्रदहन्निवाग्निः। तथा वितुन्नाङ्गमवेक्ष्य कृष्णं सर्पेषुभिः कर्णभुजप्रसृष्टैः ॥ ८९ ॥ स कर्णमाकर्णविकृष्टसृष्टैः शरैः शरीरान्तकरैर्ज्ज्वलद्भिः। मर्मस्वविध्यत् स चचाल दुःखाद्वैर्य्यात्तु तस्थावतिमात्रधैर्य्यः ॥ ९० ॥ ततः शरौघैः प्रदिशो दिशश्च रविप्रभाः कर्णरथश्च राजन्। अदृश्य आसीत् कुपिते धनञ्जये तुषारनीहारवृतं यथा नभः ॥ ९१ ॥ स चक्ररक्षानथ पादरक्षान् पुरःसरान् पृष्ठगोपांश्च सर्वान्। दुर्य्योधनस्यानुमतान् वरिष्ठान् समुच्छ्रितान्रथिनः सारभूतान् ॥ ९२ ॥ द्विसाहस्रान् समरे सव्यसाची कुरुप्रवीरानृषभः कुरूणाम्। क्षणेन सर्वान् सरथाश्वसूतान् निनाय राजन् क्षयमेकवीरः ॥ ९३ ॥ अथो पलायन्त विहाय कर्णं तवात्मजाः कुरवश्चावशिष्टाः। हतानवाकीर्य्य शरक्षतांश्च लालप्यमानांस्तनयान् पितॄंश्च ॥ ९४ ॥ स सर्वतः प्रेक्ष्य दिशो विशून्या भयावदीर्णैः कुरुभिर्विहीनः। न विव्यथे भारत तत्र कर्णः प्रतीपमेवार्ज्जुनमभ्यधावत् ॥ ९५ ॥

इति कर्णपर्वणि कर्णार्जुनसंग्रामे एकोननवतोऽध्यायः ॥ ८९ ॥

---

सञ्जय उवाच। ततोऽपयाताः शरपातमात्रमवस्थिताः कुरवो भिन्नसेनाः। विद्युत्प्रकाशं ददृशुः समन्ताद्धनञ्जयास्त्रं समुदीर्य्य-

मानाम् ॥ १ ॥ तदर्जुनास्त्रं ग्रसति स्म कर्णो वियद्गतं घोरतरैः शरौघैः क्रुद्धेन पार्थेन भृशाभिसृष्टं वधाय कर्णस्य महाविमर्द्दे ॥ २ ॥ उदीर्य्यमाणं स्म कुरून् दहन्तं सुवर्णपुङ्खैर्विशिखैर्विमर्द्दे । कर्णः सुघोरिष्वसनं दृढज्यं विस्फारयित्वा व्यसृजच्छरौघान् ॥ ३ ॥ रामादुपात्तेन महामहिम्ना ह्याथर्वणेनारिविनाशनेन । तदर्जुनास्त्रं व्यधमद्दहन्तं पार्थञ्च बाणैर्निशितैर्निजघ्ने ॥ ४ ॥ ततो विमर्द्दः सुमहान् बभूव तवार्जुनस्याधिरथेश्च राजन् । अन्योऽन्यमासादयतोः पृषत्कैर्विषाणघातैर्द्विपयोरिवोग्रैः ॥ ५ ॥ ततोऽस्त्रसङ्घातसमावृतं तदा बभूव दिक्चक्रमदृश्यभास्करम् । यत् कर्णपार्थौ शरजालवृष्ट्या निरन्तरं चक्रतुरन्तरीक्षम् ॥ ६ ॥ ततो जालं बाणमयं महान्तं सर्व्वेऽद्राक्षुः कुरवः सोमकाश्च । नान्यत् किञ्चिद्ददृशुः सम्पतद्वै बाणान्धकारे तुमुले च तस्मिन् ॥ ७ ॥ तौ सन्दधानावनिशं स्म राजन् समस्यन्तौ चापि शराननेकान् । सन्दर्शयन्तौ युद्धमार्गान्विचित्रान् धनुर्द्धराणां प्रवरौ कृतास्त्रौ ॥ ८ ॥ तयोरेवं युध्यतोराजिमध्ये सूतात्मजोऽभूदधिकः कदाचित् । पार्थः कदाचित्त्वधिकः किरीटी वीर्य्यास्त्रसम्पद्बललाघवैस्तु ॥ ९ ॥ दृष्ट्वा तयोस्तं युधि संप्रहारं परस्परस्यान्तरप्रेक्षिणोस्तु । घोरं तदा दुर्व्विषहं रणेऽन्ये योधाः सर्व्वे विस्मयमभ्यगच्छन् ॥ १० ॥ ततो भूतान्यन्तरीक्षस्थितानि कर्णार्जुनौ तौ प्रशशंसुर्नरेन्द्र । भोः कर्ण साध्वर्जुन साधु चेति हृष्टाः प्रोचुः सङ्घशः प्रीतिमन्तः ॥ ११ ॥ तस्मिन् विमर्द्दे रथवाजिनागैस्तदाभिघातैर्द्दलिते भूतले च । ततस्तु पातालतले शयानो नागोऽश्वसेनः कृतवैरोऽर्जुनेन ॥ १२ ॥ राजंस्तदा खाण्डवदाहमुक्तो विवेश कोपादसुधातलं यः । स नागवीरोऽथ समुत्थितोऽग्रतो मातुर्वधं संस्मरंश्च स्म वैरम् । अथोर्द्ध्वयातोर्द्ध्वगतिर्ज्जवेन संदृश्य कर्णार्जुनयोर्विमर्द्दम् ॥ १३ ॥ अयं हि कालोऽस्य दुरात्मनो वै पार्थस्य वैरप्रतियातनार्थम् । सञ्चिन्त्य

चैवं प्रविवेश तूर्णं कर्णस्य राजन् शरक्षपधारी ॥ १४ ॥ ततो-
ऽस्त्रसङ्घातसमाकुलं तदा बभूव जालं विततांशुजालम्। तौ
कर्णपार्थौ शरसङ्घवृष्टिभिर्निरन्तरं चक्रतुरम्बरं तदा ॥ १५ ॥
तद्बाणजालैकमयं महान्तं सर्वेऽवसन् कुरवः सोमका नान्यत्
किञ्चिद्ददृशुः सम्पतद्भि वाणान्धकारे तुमुलेऽतिमात्रम् ॥ १७ ॥ ततस्तौ
पुरुषव्याघ्रौ सर्वलोकधनुर्द्धरौ। प्रेच्यमाणौ रणे वीरौ युद्धश्रम-
मुपागतौ ॥ १७ ॥ समुत्क्षेपैर्वीज्यमानौ सिक्तौ चन्दनवारिणा।
सवालव्यजनैर्दिव्यैर्दिविस्थैरप्सरोगणैः। शक्रसूर्य्यकराब्जाभ्यां
प्रमार्जितमुखावुभौ ॥ १८ ॥ कर्णोऽथ पार्थं न विशेषयेद्यदा भृशञ्च
पार्थेन पराभितप्तः। ततस्तु वीरः शरविक्षताङ्गो दध्रे मनो
ह्येकशयस्य तस्य ॥ १९ ॥ ततो रिपुघ्नं समधत्त कर्णः सुसंशितं
सर्पमुखं ज्वलन्तम्। रौद्रं शरं संयतिसुप्रधौतं पार्थार्थमत्यर्थ-
चिराभिगुप्तम् ॥ २० ॥ सदार्चितं चन्दनचूर्णशायितं सुवर्णतूणीर-
शयं महार्चिषम्। आकर्णपूर्णं प्रविकृष्य कर्णः पार्थोन्मुखं सन्दधे
तिग्ममन्युम् ॥ २१ ॥ प्रदीप्तमैरावतवंशसम्भवं शिरोजिहीर्षु-
र्युधि फाल्गुनस्य। ततः प्रजज्वाल दिशो नभश्च उल्काश्च घोरा
ह्यशनिर्निपेतुः ॥ २२ ॥ तस्मिंस्तु नागे धनुषि प्रयुक्ते हाहाकृता
लोकपालाः सशक्राः। न चापि तं बुबुधे सूतपुत्रो बाणे प्रविष्टं
योगबलेन नागम् ॥ २३ ॥ ततोऽब्रवीन्मद्रराजो महात्मा वैक-
र्त्तनं प्रेच्य हि सन्धितेषुम्। न कर्ण ग्रीवामिषुरेष लप्स्यते
समीच्य सन्धत्स्व शरं शिरोघ्नम् ॥ २४ ॥ अथाब्रवीत् क्रोधसंदीप्त-
नेत्रो मद्राधिपं सूतपुत्रस्तरस्वी। न सन्धत्ते द्विः शरं शल्य कर्णो
न मादृशा जिह्मयुद्धा भवन्ति ॥ २५ ॥ इतीदमुक्त्वा विससर्ज्ज तं
शरं प्रयत्नतो वर्षगणाभिपूजितम्। हतोऽसि वै फाल्गुन इत्य-
वोचत्त्वरन् स राजन् विजबाधमुद्यतः ॥ २६ ॥ स सायकः कर्ण-
भुजाभिसृष्टो हुताशनार्कप्रतिमः सुघोषः। गुणाच्युतः प्राज्वल-

दन्तरीक्षे कुर्वन् सीमन्तं नभसोभीमरूपः ॥ २७ ॥ तं वीक्ष्य
दीप्तं युधि माधवस्तु त्वरान्वितः कंसरिपुः सलीलम् । पदा विनि-
पिष्य रथोत्तमं तं प्रावेशयत्क्ष्मागतौ किष्कुमात्रम् । क्षितिं गता
जानुभिस्तेऽथ वाहा हेमच्छन्ना चन्द्रमरीचिवर्णाः ॥ २८ ॥ सन्धीय-
मानं भुजगं दृष्ट्वा कर्णेन माधवः । आक्रामत् स्यन्दनं पद्भ्यां
बलेन बलिनां वरः । अवगाढे रथे भूमौ जानुभ्यामगमन् हयाः
॥ २९ ॥ ततोऽन्तरीक्षे सुमहान्निनादः संपूजनार्थं मधुसूदनस्य ।
दिव्याश्च वाचः सहसा बभूवुर्दिव्यानि पुष्पाण्यथ सिंहनादाः ।
तस्मिंस्तथा वै धरणीं निमग्ने रथे प्रयत्नान्मधुसूदनस्य ॥ ३० ॥
अथार्जुनस्योत्तमगात्रभूषणं धराबियद्द्योसलिलेषु विश्रुतम् । व्या-
लास्त्रसर्गोत्तमयत्नमन्युभिः शरेण मूर्ध्नः प्रजहार सूतजः ॥ ३१ ॥
दिवाकरेन्दुज्वलनग्रहत्विषं सुवर्णमुक्तामणिवज्रभूषितम् । पुर-
न्दरार्थं तपसा प्रयत्नतः स्वयं कृतं यद्विभुना स्वयम्भुवा ॥ ३२ ॥
महार्हरूपं द्विषतां भयङ्करं बिभर्त्तुरत्यर्थसुखं सुगन्धिनम् । जिघां-
सते देवरिपून् सुरेश्वरः स्वयं ददौ यत् सुमनाः किरीटिने ॥ ३३ ॥
हराम्बुपाखण्डलवित्तगोप्तृभिः पिनाकपाशाशनिसायकोत्तमैः ।
सुरोत्तमैरप्यविसह्यमर्दितुं प्रसह्य नागेन जहार यद्वृतः ॥ ३४ ॥
स दुष्टभावो वितथप्रतिज्ञः किरीटमासाद्य तमुग्ररूपः । विशुद्ध-
जाम्बूनदरत्नचित्रं पार्थोत्तमाङ्गादहरत्तरस्वी ॥ ३५ ॥ तद्रत्न-
मालावततं सुचारु जाज्वल्यमानं वपुषा श्रिया च । दिव्यं प्रम-
थ्याशु नरेन्द्र सङ्ख्ये जहार नागोऽर्जुनमूर्द्धतो बलात् । गिरेः
सुजातोत्तमपुष्पितद्रुमं यथैव शृङ्गं खलुवज्रदारितम् ॥ ३६ ॥ तदु-
त्तमेषुन्मथितं विषाग्निना प्रदीप्तमर्चिष्मदभिद्वितौ प्रियम् । पपात
पार्थस्य किरीटमुत्तमं दिवाकरोऽस्तादिव पर्वताज्वलन् ॥ ३७ ॥
स वै किरीटं बहुरत्नभूषितं जहार नागोऽर्जुनमूर्द्धतो बलात् ।
गिरेः सुजाताङ्कुरपुष्पितद्रुमं महेन्द्रवज्रः शिखरोत्तमं यथा ॥ ३८ ॥

महीवियद्द्योसलिलानि वायुना यथा विदग्धानि नदन्ति भारत।
तथैव शब्दं भुवनेषु तं तदा जना व्यवस्यन् व्यथिताश्च चस्खलुः
॥ ३९ ॥ विना किरीटं शुशुभे न पार्थः श्यामो युवा शैल इवात्त-
शृङ्गः । ततः स उद्ग्रथ्य सितेन वाससा स्वमूर्द्धजान[illegible]स्थितो-
ऽर्जुनः ॥ ४० ॥ गोकर्णा सुमुखीकृतेन इषुणा गोपुत्रसंप्रेषिता
गोशब्दात्मजभूषणं सुविहितं सुव्यक्तगोसुप्रभम् । दृष्ट्वा गोगतकं
जहार मुकुटं गोशब्दगोपूरि वै गोकर्णासनमर्दनश्च न ययावप्राप्य
मृत्योर्वशम् ॥ ४१ ॥ स सायकः कर्णभुजप्रसृष्टो हुताशनार्कप्रतिमो
महार्हः । महोरगः कृतवैरोऽर्जुनेन किरीटमाहत्य ततो व्यती-
यात् ॥ ४२ ॥ तञ्चापि दग्ध्वा तपनीयचित्रं किरीटमाविष्कृतमर्जु-
नस्य । दुद्रोष गन्तुं पुनरेव तूणं दृष्टश्च कर्णेन ततोऽब्रवीदिदम्
॥ ४३॥ मुक्तस्त्वयाहं न समीक्ष्य कर्ण शिरो हृतं यन्न मयार्जुनस्य।
समीक्ष्य मां मुञ्च रणे त्वमाशु हन्तास्मि शत्रुं तव चात्मनश्च ॥ ४४॥
स एवमुक्तो युधि सूतपुत्रस्तमब्रवीत् कोभवानुग्ररूपः । नागो-
ऽब्रवीद्विद्धि कृतागसं मां पार्थेन मातुर्वधजातवैरम् ॥ ४५ ॥ यदि
स्वयं वज्रधरोऽस्य गोप्ता तथापि याता पितृराजवेश्म । त्वं माव-
मंस्थाः कुरु मे वचोऽद्य निहन्मि शत्रुं तव मुञ्च मां द्रुतम् ॥ ४६॥

कर्ण उवाच । न नाम कर्णोऽद्य रणाय वान्यबलं समास्थाय
जयं बुभूषेत् । न सन्दध्यां द्विः शरं चैव नाग यद्यर्जुनानां शतमेव
हन्याम् ॥ ४७ ॥ तमाह कर्णः पुनरेव नागं तदाजिमध्ये रविसूनु-
सत्तमः । व्यालास्त्रसर्गोत्तमयत्नमन्युभिर्हन्तास्मि पार्थं सुसुखो व्रज
त्वम् ॥ ४८ ॥ इत्येवमुक्तो युधि नागराजः कर्णेन रोषादसहंस्तु
वाक्यम् । स्वयं प्रायात् पार्थवधाय राजन् कृत्वा स्वरूपं विजिघांसुरुग्रः
॥४९॥ कृष्णस्ततः पार्थमुवाच सङ्ख्ये महोरगं कृतवैरं जहि त्वम्।
स एवमुक्तो मधुसूदनेन गाण्डीवधन्वा रिपूषूग्रधन्वा । उवाच
कोन्वेष ममाद्य नागः स्वयं य आयात् गरुड़स्य वक्त्रम् ॥ ५० ॥

कृष्ण उवाच। योऽसौ त्वया खाण्डवे चित्रभानुं सन्तर्पयाणेन धनुर्द्धरेण। वियद्गतो जननीगुप्तदेहो मत्वैकरूपं निहतास्य माता ॥ ५१ ॥ स एष ते वैरमनुस्मरन् वै त्वामद्य चायाति वधाय पार्थ। नभश्च्युतां प्रज्वलितामिवोल्कां पश्यैनमायान्तममित्र-साह॥ ५२ ॥

सञ्जय उवाच। ततः स जिष्णुः परिवृत्य रोषाच्चिच्छेद षड्भिर्निशितैः पृषत्कैः। नागं वियत्तिर्य्यगिवापतन्तं स छिन्न-गात्रो निपपात भूमौ ॥ ५३ ॥ हते तु तस्मिन् भुजगे किरीटिना स्वयं विभुः पार्थिव भूतलादथ। समुज्जहाराशु महाभुजः स तं रथं भुजाभ्यां पुरुषोत्तमः पुनः ॥ ५४ ॥ तस्मिन्मुहूर्त्ते दशभिः पृषत्कैः शिलाशितैर्बर्हिणबर्हवाजितैः। विव्याध कर्णः पुरुष-प्रवीरं धनञ्जयं तिर्य्यगवेक्षमाणः ॥ ५५ ॥ ततोऽर्जुनो द्वादशभिः सुमुक्तैर्वराहकर्णैर्निशितैः समर्प्य। नाराचमाशीविषतुल्यवेग-माकर्णपूर्णायतमुत्ससर्ज्ज ॥ ५६ ॥ स चित्रवर्म्मेषुवरो विदार्य्य प्राणान्निरस्यन्निव साधुमुक्तः। कर्णस्य पीत्वा रुधिरं विवेश वसुन्धरां शोणितदिग्धवाजः ॥ ५७ ॥ ततो वृषो बाणनिपात-कोपितो महोरगो दण्डविघट्टितो यथा। तदाशुकारी व्यसृज-च्छरोत्तमान् महाविषः सर्प इवोद्वमन् विषम् ॥ ५८ ॥ जनार्द्दनं द्वादशभिः पराभिनन्नवैर्नवत्या च शरैस्तथार्ज्जुनम्। शरेण घोरेण पुनश्च पाण्डवं विभिद्य कर्णो व्यनदज्जहास च ॥ ५९ ॥ स तस्य हर्षं ममृषे न पाण्डवो विभेद मर्म्माणि ततोऽस्य मर्म्मवित्। परः-शतैः पत्रिभिरिन्द्रविक्रमस्तथा यथेन्द्रो बलमोजसाहनत् ॥ ६० ॥ ततः शराणां नवतीर्नवार्ज्जुनः ससर्ज्ज कर्णेऽन्तकदण्डसन्निभाः। शतैर्भृशाविद्धतनुः प्रविव्यथे तथा यथा वज्रविदारितोऽचलः ॥ ६१ ॥ मणिप्रवेकोत्तमवज्रहाटकैरलंकृतं चास्य वराङ्गभूषणम्। प्रकृत्त-मुर्व्यां निपपात पत्रिभिर्द्धनञ्जयेनोत्तमकुण्डलेऽपि च ॥ ६२ ॥ महा-

घनं शिल्पिवरैः प्रयत्नतः कृतं तदस्योत्तमवर्म भास्वरम्। सुदीर्घ-
कालेन ततोऽस्य पाण्डवः क्षणेन बाणैर्बहुधा व्यशातयत्॥ ६३॥
स तं विवर्माणमथोत्तमेषुभिः शितैश्चतुर्भिः कुपितः परा
स विव्यथेऽत्यर्थमरिप्रताडितो यथातुरः पित्तकफानिल ६४॥
महाधनुर्मण्डलनिःसृतैः शितैः क्रियाप्रयत्नप्रहितैर्बलेन च। ततक्ष
कर्णं बहुभिः शरोत्तमैर्बिभेद मर्मस्वपि चार्जुनस्त्वरन्॥ ६५॥
दृढाहतः पत्रिभिरुग्रवेगैः पार्थेन कर्णो विविधैः शिताग्रैः बभौ
गिरिर्गैरिकधातुरक्तः क्षरन् प्रपातैरिव रक्तमम्भः॥ ६६ पी-
ऽर्जुनः कर्णमवक्रगैर्नवैः सुवर्णपुङ्खैः सुदृढैरयस्मयैः। य
दण्डप्रतिमैः स्तनान्तरे पराभिनत् क्रौञ्चमिवाद्रिमग्निजः॥ ६
ततः शरावापमपास्य सूतजो धनुश्च तच्छक्रशरासनोपमम्। तत
तस्थौ च मुमोह चस्खले प्रशीर्णमुष्टिः सुभृशातुरस्तदा॥ ६८॥
न चार्जुनस्तं व्यसने तदैषिवान् विहन्तुमार्य्यः पुरुषव्रते स्थितः। तत
स्तमिन्द्रावरजोऽपि सम्भ्रमादुवाच किं पाण्डव हे प्रमाद्यसि॥ ६९
नैवाहितानां सततं विपश्चितः क्षणं प्रतीक्षन्त्यपि दुर्बलीयस
विशेषतोऽरीन् व्यसनेषु पण्डितो निहत्य धर्मञ्च यशश्च विन्दति
॥ ७०॥ तदेकवीरं तव चाहितं सदा त्वरस्व कर्णं सहसाभि-
वर्हितुम्। पुरा समर्थः समुपैति सूतजो जहि त्वमेनं नमुचिं
यथा हरिः॥ ७१॥ तथास्तु कृष्णेत्यभिपूज्य सत्वरं जनार्दनं
कर्णमविध्यदर्जुनः। शरोत्तमैः सर्वकुरूत्तमस्त्वरन् यथा तथा
शम्बरमम्बराधिपः॥ ७२॥ साश्वन्तु कर्णं सरथं किरीटी समा-
चिनोत् भारत वत्सदन्तैः। प्रच्छादयामास दिशश्च बाणैः सर्व-
प्रयत्नात्तपनीयपुङ्खैः॥ ७३॥ स वत्सदन्तैः पृथुपीनवक्षाः समा-
चितः सोऽधिरथिर्विभाति। सुपुष्पिताशोकपलाशशाल्मलिर्यथा-
चलश्चन्दनकाननायुतः॥ ७४॥ शरैः शरीरे बहुभिः समर्पितो
विभाति कर्णः समरे विशाम्पते। महीरुहैराचितसानुकन्दरो

यथा गिरीन्द्रः स्फुटकर्णिकारवान् ॥ ७५ ॥ स बाणसङ्घान् बहुधा व्यवासृजन् विभाति कर्णः शरजालरश्मिवान् । सलोहितो रक्तगभस्तिमण्डलो दिवाकरोऽस्ताभिमुखो यथा तथा ॥ ७६ ॥ बाह्वन्तरादाधिरथेर्विमुक्तान् बाणान्महाहीनिव दीप्यमानान् । व्यध्वंसयन्नर्जुनबाहुमुक्ताः शराः समासाद्य दिशः शिताग्राः ॥ ७७ ॥ ततः स कर्णः समवाप्य धैर्य्यं बाणान् विमुञ्चन् कुपिताहिकल्पान् । विव्याध पार्थं दशभिः पृषत्कैः कृष्णञ्च षड्भि कुपिताहिकल्पैः ॥ ७८ ॥ ततो महेन्द्राशनितुल्यनिस्वनं महाशरं सर्पविषानलोपमम् । अयस्मयं रौद्रमहास्त्रसम्मितं महाहवे क्षेप्तुमना धनञ्जयः ॥ ७९ ॥ कालो ह्यदृश्यस्तथ विप्रशापं निदर्शयन् कर्णवधं ब्रुवाणम् । भूमिश्चक्रं ग्रसतीत्यवोचत् कर्णस्य तस्मिन् वधकालेऽप्युपान्ते ॥ ८० ॥ ब्राह्मं महास्त्रं मनसि प्रनष्टं यद्भार्गवोऽस्मै प्रददौ महात्मा । वामञ्चक्रं ग्रसते मेदिनी स्म प्राप्ते तस्मिन् वधकाले नृवीर ॥ ८१ ॥ ततो रथो घूर्णितवान्नरेन्द्र शापात्तदा ब्राह्मणसत्तमस्य । सवेदिकश्चैत्य इवातिमात्रं सुपुष्पितो भूमितले निमग्नः ॥ ८२ ॥ घूर्णे रथे ब्राह्मणस्याभिशापाद्रामादुपात्तेऽप्रतिभाति चास्त्रे । छिन्ने शरे सर्पमुखे च घोरे पार्थेन तस्मिन् विषसाद कर्णः ॥ ८३ ॥ अमृष्यमाणो व्यसनानि तानि हस्तौ विधुन्वन् स विगर्हमाणः । धर्मप्रधानानभिपाति धर्म इत्यब्रुवन् धर्मविदः सदैव ॥ ८४ ॥ वयञ्च नित्यं प्रयताम धर्मं चर्त्तुं यथाशक्ति यथाश्रुतञ्च । स चापि निघ्नाति न पाति भक्तान्मन्ये न नित्यं परिपाति धर्मः ॥ ८५ ॥ एवं ब्रुवन् प्रस्खलिताश्वसूतो विचाल्यमानोऽर्जुनबाणपातैः । मर्म्माभिघातांच्चलितः क्रियासु पुनः पुनर्धर्ममगर्हदाजौ ॥ ८६ ॥ ततः शरै[illegible] । हस्ते कृष्णं तथा पार्थमभ्यविध्यच्च सप्तभिः ॥ ८७ ॥ ततोऽर्जुनः ससर्ज घोरान् तिग्मवेगानजिह्मगान् । इन्द्राशनिसमान् घोरानसृजत्

पावकोपमान् ॥ ८८ ॥ निर्भिद्य ते भीमवेगा ह्यपतन् पृथिवीतले ।
कम्पितात्मा ततः कर्णः शक्त्या चेष्टामदर्शयत् ॥ ८९ ॥ बलेनाथ
स संस्तभ्य ब्रह्मास्त्रं समुदीरयत् । ऐन्द्रं ततोऽर्जुनश्चापि तद्दृष्ट्वा-
भ्युपमन्त्रयत् ॥ ९० ॥ गाण्डीवं ज्याञ्च बाणांश्च सोऽनुमन्त्र्य परन्-
तपः । असृजच्छरवर्षाणि वर्षाणीव पुरन्दरः ॥ ९१ ॥ तत-
स्तेजोमया बाणा रथात् पार्थस्य निःसृताः । प्रादुरासन्महावीर्य्याः
कर्णस्य रथमन्तिकात् । तान् कर्णस्त्वग्रतो न्यस्तान्मोघांश्चक्रे महा-
रथः ॥ ९२ ॥ ततोऽब्रवीद्वृष्णिवीरस्तस्मिन्नस्त्रे विनाशिते । विसृ-
जास्त्रं परं पार्थ राधेयो ग्रसते शरान् ॥ ९३ ॥ ततो ब्रह्मास्त्र-
मव्यग्रः संमन्त्र्य समयोजयत् । छादयित्वा दिशो बाणैः कर्णं
प्रत्यस्यदर्जुनः ॥ ९४ ॥ ततः कर्णः शितैर्बाणैश्चिच्छेद ज्यां सुते-
जनैः । द्वितीयाञ्च तृतीयाञ्च चतुर्थीं पञ्चमीं तथा ॥ ९५ ॥ षष्ठी-
मथास्य चिच्छेद सप्तमीञ्च तथाष्टमीम् । नवमीं दशमीञ्चैव तथा-
चैकादशीं वृषः । ज्याशतं शतसन्धानः स कर्णो नावबुध्यते ॥ ९६ ॥
ततो ज्यामवधायान्यामनुमृज्य च पाण्डवः । शरैरवाकिरत् कर्णं
दीप्तास्यैरुरगैरिव ॥ ९७ ॥ तस्य ज्याच्छेदनं कर्णो ज्यावधानं
संयुगे । नान्वबुध्यत शीघ्रत्वात्तदद्भुतमिवाभवत् ॥ ९८ ॥ अस्त्रै-
रस्त्राणि राधेयः प्राहनत सव्यसाचिनः । चक्रेऽप्यधिकमात्मानं
स्ववीर्य्यं प्रतिदर्शयन् ॥ ९९ ॥ ततः कृष्णोऽर्जुनं दृष्ट्वा कर्णास्त्रे-
णाभिपीडितम् । अभ्यस्येत्यब्रवीत् पार्थमातिष्ठास्त्रमनुत्तमम् ॥ १०० ॥
ततोऽन्यमग्निसदृशं क्रुद्धः सर्पविषोपमम् । अश्मसारमयं दिव्य-
मनुमन्त्र्य धनञ्जयः ॥ १०१ ॥ रौद्रमस्त्रं समाधाय क्षेप्तुकामः
किरीटवान् । ततोऽग्रसन्मही चक्रं राधेयस्य तदा नृप ॥ १०२ ॥
ग्रस्तचक्रस्तु राधेयः कोपादश्रूण्यवर्त्तयत् । अर्जुनञ्चाब्रवीत् कर्णो
मुहूर्त्तं क्षम पाण्डव ॥ १०३ ॥ सव्यं चक्रं महीग्रस्तं दृष्ट्वा दैवा-
दिदं मम । पार्थ कापुरुषाचीर्णमभिसन्धिं विसर्ज्जय ॥ १०४ ॥

प्रकीर्णकेशे विमुखे ब्रह्मवादिकृताञ्जलौ। शरणागते याचमाने न्यस्तशस्त्रे तथैव च ॥ १०५ ॥ अबाणे भ्रष्टकवचे भ्रष्टभग्नायुधे तथा। न विमुञ्चन्ति शस्त्राणि शूराः साधुव्रते स्थिताः ॥ १०६ ॥ त्वञ्च शूरतमो लोके साधुवृत्तश्च पाण्डव। अभिज्ञो युद्धधर्म्माणां तस्मात् क्षम मम क्षणम् ॥ १०७ ॥ यावच्चक्रमिदं भूमेरुद्धरामि धनञ्जय। न मां रथस्थो भूमिष्ठमसज्जं हन्तुमर्हसि ॥ १०८ ॥ न वासुदेवात्त्वत्तो वा पाण्डवेय बिभेम्यहम्। त्वं हि क्षत्रिय-दायादो महाकुलविवर्द्धनः। स्मृत्वा धर्म्मोपदेशं त्वं मुहूर्त्तं क्षम पाण्डव ॥ १०९ ॥

इति कर्णपर्व्वणि कर्णरथचक्रग्रासे नवतितमोऽध्यायः ॥ ९० ॥

---

सञ्जय उवाच। तमब्रवीद्वासुदेवो रथस्थो राधेय दिष्ट्या स्मरसीह धर्म्मम्। प्रायेण नीचा व्यसने निमग्ना निन्दन्ति दैवं कुकृतं न तु स्वम् ॥ १ ॥ यद्द्रौपदीमेकवस्त्रां सभायामानाय्य त्वञ्च सुयोधनश्च। दुःशासनः शकुनिः सौवलश्च न ते कर्ण प्रत्य-भात्तत्र धर्म्मः ॥ २२ ॥ यदा सभायां कौन्तेयमनक्षज्ञं युधिष्ठिरम्। अक्षज्ञः शकुनिर्ज्जिता क्क ते धर्म्मस्तदा गतः ॥ ३ ॥ यद्भीमसेनं सर्पैश्च विषयुक्तैश्च भोजनैः। आचरत्त्वन्मते राजा क्क ते धर्म्मस्तदा गतः ॥ ४ ॥ वनवासे व्यतीते च वर्षे कर्ण त्रयोदशे। न प्रय-च्छसि यद्राज्यं क्क ते धर्म्मस्तदा गतः ॥ ५ ॥ यद्वारणावते पार्थान् सुप्तान् जतुगृहे तदा। आदीपयस्त्वं राधेय क्क ते धर्म्मस्तदा गतः ॥ ६ ॥ यदा रजस्वलां कृष्णां दुःशासनवशे स्थिताम्। सभायां प्राहसः कर्ण क्क ते धर्म्मस्तदा गतः ॥ ७ ॥ यदा नारी-पुरे कृष्णां कृष्यमाणामनागसम्। उपप्रेक्षसि राधेय क्क ते धर्म्म-स्तदा गतः ॥ ८ ॥ विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः।

पतिमन्यं वृणीष्वेति वदंस्त्वं गजगामिनीम् । उपप्रेक्षितवांस्त्वं
च क्व ते धर्मस्तदा गतः ॥ ९ ॥ राज्यलुब्धः पुनः कर्ण समा-
ह्वयसि पाण्डवान् । गान्धारराजमाश्रित्य क्व ते धर्मस्तदा गतः
॥ १० ॥ यदाभिमन्युं बहवो युद्धे जघ्नुर्महारथाः । परिवार्य्य
रणे बालं क्व ते धर्मस्तदा गतः ॥ ११ ॥ यद्येष धर्मस्तत्र न
विद्यते हि किं सर्वथा तालुविशोषणेन । अद्येह धर्म्याणि विधत्स्व
सूत तथापि जीवन्न विमोक्ष्यसे हि ॥ १२ ॥ नलो ह्यक्षैर्निर्जितः
पुष्करेण पुनर्यथा राज्यमवाप वीर्य्यात् । प्राप्तास्तथा पाण्डवा बाहु-
वीर्य्यात् सर्वे समस्ताः परिवृत्तलोभाः ॥ १३ ॥ निहत्य शत्रून्
समरे प्रवृद्धान् ससोमका राज्यमवाप्नुयुस्ते । तथा गता धार्त्त-
राष्ट्रा विनाशं धर्माभिगुप्तैः सततं नृसिंहैः ॥ १४ ॥

सञ्जय उवाच । एवमुक्तस्तदा कर्णो वासुदेवेन भारत ।
लज्जयावनतो भूत्वा नोत्तरं किञ्चिदुक्तवान् ॥ १५ ॥ क्रोधात्
प्रस्फुरमाणोष्ठो धनुरुद्यम्य भारत । योधयामास वै पार्थं महा-
वेगपराक्रमः ॥ १६ ॥ ततोऽब्रवीद्वासुदेवः फाल्गुनं पुरुषर्षभम् ।
दिव्यास्त्रेणैव निर्भिद्य पातयस्व महाबल ॥ १७ ॥ एवमुक्तस्तु
देवेन क्रोधमागात्तदार्जुनः । मन्युमभ्यविशद्घोरं स्मृत्वा तत्तु धन-
ञ्जयः ॥ १८ ॥ तस्य क्रुद्धस्य सर्वेभ्यः स्रोतोभ्यस्तेजसोऽर्च्चिषः ।
प्रादुरासंस्तदा राजंस्तदद्भुतमिवाभवत् ॥ १९ ॥ तत् समीक्ष्य
ततः कर्णो ब्रह्मास्त्रेण धनञ्जयम् । अभ्यवर्षन् पुनर्यत्नमकरोद्रथ-
सज्जने ॥ २० ॥ ब्रह्मास्त्रेणैव तं पार्थो ववर्ष शरवृष्टिभिः । अस्त्र-
मस्त्रेण संवार्य्य प्रजहार च पाण्डवः ॥ २१ ॥ ततोऽन्यदस्त्रं
कौन्तेयो दयितं जातवेदसः । मुमोच कर्णमुद्दिश्य तत् प्रजज्वाल
तेजसा ॥ २२ ॥ वारुणेन ततः कर्णः शमयामास पावकम् ।
जीमूतैश्च दिशः सर्व्वाश्चक्रे तिमिरदुर्द्दिनाः ॥ २३ ॥ पाण्डवेयस्त्वसं-
भ्रान्तो वायव्यास्त्रेण वीर्य्यवान् । अपोवाह तदभ्राणि राधेयस्य

प्रपश्यतः ॥ २४ ॥ ततः शरं महाघोरं ज्वलन्तमिव पावकम्।
आददे पाण्डुपुत्रस्य सूतपुत्रो जिघांसया ॥ २५ ॥ योज्यमाने
ततस्तस्मिन् बाणे धनुषि पूजिते। चचाल पृथिवी राजन् सशैल-
वनकानना ॥ २६ ॥ ववौ सशर्करो वायुर्दिशश्च रजसा वृताः।
हाहाकारश्च सञ्जज्ञे सुराणां दिवि भारत ॥ २७ ॥ तमिषुं
सन्धितं दृष्ट्वा सूतपुत्रेण मारिष। विषादं परमं जग्मुः पाण्डवा
दीनचेतसः ॥ २८ ॥ स सायकः कर्णभुजप्रमुक्तः शक्राशनिप्रख्य-
रुचिः शिताग्रः भुजान्तरं प्राप्य धनञ्जयस्य विवेश वल्मीकमिवो-
रगोत्तमः ॥ २९ ॥ स गाढविद्धः समरे महात्मा विघूर्णमानः
श्लथहस्तगाण्डिवः। चचाल वीभत्सुरमित्रमर्द्दनः क्षितेः प्रकम्पे
च यथाचलोत्तमः ॥ ३० ॥ तदन्तरं प्राप्य वृषो महारथो रथाङ्ग-
मुर्वीगतमुज्जिहीर्षुः। रथादवप्लुत्य निगृह्य दोर्भ्यां शशाक दैवान्न
महाबलोऽपि ॥ ३१ ॥ ततः किरीटी प्रतिलभ्य संज्ञां जग्राह बाणं
यमदण्डकल्पम्। दीप्तोऽर्जुनः प्राञ्जलिकं महात्मा ततोऽब्रवी-
द्वासुदेवोऽपि पार्थम्। छिन्ध्यस्य मूर्द्धानमरेः शरेण न यावदा-
रोहति वै रथं वृषः ॥ ३२ ॥ तथैव सम्पूज्य स तद्वचः प्रभोस्ततः
शरं प्रज्वलितं प्रगृह्य। जघान कक्षाममलार्कवर्णां महारथो
रथचक्रे निमग्ने ॥ ३३ ॥ तं हस्तिकक्षाप्रवरञ्च केतुं सुवर्णमुक्ता-
मणिवज्रपृष्ठम्। ज्ञानप्रकर्षोत्तमशिल्पयत्नैः कृतं सुरूपं तपनीय-
चित्रम् ॥ ३४ ॥ ऊर्ज्जस्करं तव सैन्यस्य नित्यममित्रवित्रासनमीड्य-
रूपम्। विख्यातमादित्यसमस्य लोके समात्विषं पावकभानुचन्द्रैः
॥ ३५ ॥ ततः क्षुरप्रेण सुसंशितेन सुवर्णपुङ्खेन हुताग्निवर्च्चसा।
श्रिया ज्वलन्तं ध्वजमुन्ममाथ महारथस्याधिरथेः किरीटी ॥ ३६ ॥
यशश्च दर्पश्च तथा जयोऽपि प्रियाणि सर्वाणि च तेन केतुना।
सार्द्धं कुरूणां हृदयानि चापतन् बभूव हाहेति च निस्वनो महान्
॥ ३७ ॥ दृष्ट्वा ध्वजं पातितमाशुकारिणा कुरुप्रवीरेण निकृत्त-

माहवे। नाशंभिरे सूतपुत्रस्य सर्वे जयं तदा भारत ये त्वदीयाः
॥ ३८ ॥ अथ त्वरन् कर्णवधाय पार्थो महेन्द्रवज्रानलदण्डसन्नि-
भम्। आदत्त पार्थोऽञ्जलिकं निषङ्गात् सहस्ररश्मेरिव रश्मि-
मुत्तमम् ॥ ३९ ॥ मर्मच्छिदं शोणितमांसदिग्धं वैश्वानरार्कप्रतिमं
महार्हम्। नराश्वनागासुहरं त्र्यरत्निं षड्वाजमञ्जोगतिमुग्र-
वेगम् ॥ ४० ॥ सहस्रनेत्राशनितुल्यतेजसं निशासु क्रव्यादमिवाति-
दुःसहम्। पिनाकनारायणचक्रसन्निभं भयङ्करं प्राणभृतां विना-
शनम् ॥ ४१ ॥ जग्राह पार्थः स शरं प्रहृष्टो यो देवसङ्घैरपि
दुर्निवार्य्यः। संपूजितो यः सततं महात्मा देवासुरान् यो विज-
येन्महेषुः ॥ ४२ ॥ तं वै प्रमृष्टं प्रसमीक्ष्य युद्धे चचाल सर्वं
सचराचरं जगत्। स्वस्ति जगत स्यादृषयः प्रचक्रुस्तमुद्यतं प्रेक्ष्य
महाहवेषु ॥ ४३ ॥ ततस्तु तं वै शरमप्रमेयं गाण्डीवधन्वा धनुषि
व्ययोजयत्। युक्त्वा महास्त्रेण परेण चापं विकृष्य गाण्डीवमुवाच
सत्वरम् ॥ ४४ ॥ अयं महास्त्रप्रतिमोऽस्तु मे शरः शरीरहृच्चासु-
हरश्च दुर्हृदः। तपोऽस्ति तप्तं गुरवश्च तोषिता मया यदीष्टं
सुहृदां तथा श्रुतम् ॥ ४५ ॥ अनेन सत्येन निहन्त्वयं शरः सु-
शितः कर्णमरिं ममार्च्चितः। इत्यूचिवांस्तं प्रमुमोच वाणं धनञ्जयः
कर्णवधाय घोरम् ॥ ४६ ॥ कृत्यामथर्वाङ्गिरसीमिवोग्रां दीप्ता-
मसह्यां युधि मृत्युनापि। ब्रुवन् किरीटीत्यतिसंप्रहृष्टो ह्ययं शरो
मे विजयावहोऽस्तु। जिघांसुरर्केन्दुसमप्रभावः कर्णं ममास्तो
नयतां यमाय ॥ ४७ ॥ तेनेषुवर्य्येण किरीटमाली प्रहृष्टरूपो
विजयावहेन। जिघांसुरर्केन्दुसमप्रभेण चक्रे विषक्तं रिपुमात-
तायी ॥ ४८ ॥ तथा विमुक्तो बलिनार्कतेजाः प्रज्वालयामास
दिशो नभश्च ॥ ४९ ॥ ततोऽर्जुनस्तस्य शिरो जहार वज्रेण वृत्रस्य
यथा महेन्द्र। शरोत्तमेनाञ्जलिकेन राजंस्तदा महास्त्रप्रति-
मन्त्रितेन ॥ ५० ॥ पार्थो पराह्णे शिर उच्चकर्त्त वैकर्त्तनस्याथ

महेन्द्रसूनुः । तत् प्राञ्जलिकेन छिन्नमथास्य कायो निपपात
पश्चात् ॥ ५१ ॥ तदुद्यतादित्यसमानवर्च्चसं शरन्नभोमध्यगभास्क-
रोपमम् । वराङ्गमुर्व्व्यामपतच्चमूपतेर्दिवाकरोऽस्तादिव रक्तमण्डलः
॥ ५२ ॥ तमस्य देहं सततं सुखोचितं सुरूपमत्यर्थमुदारकर्म्मणः ।
परेण कृच्छ्रेण शिरः समत्यजद्गृहं महर्द्धीव सुसङ्गमीश्वरः ॥ ५३ ॥
शरैर्विभिन्नं व्यसु तत् सुवर्च्चसः पपात कर्णस्य शरीरमुच्छ्रितम् ।
स्रवद्व्रणं गैरिकतोयविस्रवं गिरेर्यथा वज्रहतं शिरस्तथा ॥ ५४ ॥
देहात्तु कर्णस्य निपातितस्य तेजः सूर्य्यं खं विगाह्याविवेश ।
तदद्भुतं सर्व्वमनुष्ययोधाः पश्यन्ति राजन्निहते स्म कर्णे ॥ ५५ ॥
ततः शङ्खान् पाण्डवा दध्मुरुच्चैर्दृष्ट्वा कर्णं पातितं फाल्गुनेन ।
तथैव कृष्णश्च धनञ्जयश्च हृष्टौ तदा दध्मतुराशु शङ्खौ ॥ ५६ ॥ तं
सोमकाः प्रेक्ष्य हतं शयानं प्रीता नादान् सह सैन्यैरकुर्व्वन् ।
तूर्य्याणि चाजघ्नुरतीव हृष्टा वासांसि चैवादुधुवुर्भुजांश्च । सं-
वर्द्धयन्तश्च नरेन्द्रयोधाः पार्थं समाजग्मुरतीव हृष्टाः ॥ ५७ ॥
बलान्वितास्त्वप्यपरे ह्यनृत्यन्नन्योऽन्यमाश्लिष्य नदन्त ऊचुः । दृष्ट्वा
तु कर्णं भुवि निष्टनन्तं कृतं तथा सायकैनातिभिन्नम् ॥ ५८ ॥
महानिलेनाद्रिमिवापविद्धं यज्ञावसानेऽग्निमिव प्रशान्तम् । रराज
कर्णस्य शिरो निकृत्तमस्तङ्गते भास्करस्येव बिम्बम् ॥ ५९ ॥ प्रताप्य
सेनामामित्रीं दीप्तैः शरगभस्तिभिः । बलिनार्ज्जुनकालेन नीतो-
ऽस्तं कर्णभास्करः ॥ ३० ॥ अस्तं गच्छन् यथादित्यः प्रभामादाय
गच्छति । एवं जीवितमादाय कर्णस्येषुर्जगाम ह ॥ ६१ ॥ अप-
राह्ने पराह्नस्य सूतपुत्रस्य मारिष । छिन्नमञ्जलिकेनाजौ सोत्-
सेधमपतच्छिरः ॥ ६२ ॥ उपर्य्युपरि सैन्यानां तस्य शत्रोस्तदि-
ञ्जसा । शिरः कर्णस्य सोत्सेधमिषुः सोऽपाहरद्द्रुतम् ॥ ६३ ॥
कर्णन्तु शूरं पतितं पृथिव्यां शराचितं शोणितदिग्धगात्रम् । दृष्ट्वा
शयानं भुवि मद्रराजश्छिन्नध्वजेनापययौ रथेन ॥ ६४ ॥ हते

कर्णे कुरवः प्राद्रवन्त भयार्दिता गाढविद्धाश्च संख्ये । अवेक्षमाणा मुहुरर्जुनस्य ध्वजं महान्तं वपुषा ज्वलन्तम् ॥ ६५ ॥ सहस्रनेत्रप्रतिमानकर्मणः सहस्रनेत्रप्रतिमाननं शुभम् । सहस्ररश्मिर्दिनसङ्क्षये तथा तथापतत् कर्णशिरो वसुन्धराम् ॥ ६६ ॥

इति कर्णपर्वणि कर्णवधे एकनवतोऽध्यायः ॥ ९१ ॥

---

सञ्जय उवाच । शल्यस्तु कर्णार्जुनयोर्विमर्द्दे बलानि दृष्ट्वा मृदितानि बाणैः । ययौ परीतो भृशमन्युनासौ रथेन संछिन्नपरिच्छदेन ॥ १ ॥ निपातितस्यन्दनवाजिनागं बलञ्च दृष्ट्वा हतसूतपुत्रम् । दुर्य्योधनोऽश्रुपरिपूर्णनेत्रो मुहुर्मुहुर्न्यश्वसदार्त्तरूपः ॥ २ ॥ कर्णन्तु शूरं पतितं पृथिव्यां शराचितं शोणितदिग्धगात्रम् । यदृच्छया सूर्य्यमिवावनिस्थं दिदृक्षवः सं परिवार्य्य तस्थुः ॥ ३ ॥ प्रहृष्टवित्रस्तविषण्णविस्मितास्तथापरे शोकपरा बभूवन् । परे त्वदीयाश्च परस्परं जना यथायथैषां प्रकृतिस्तथाभवन् ॥ ४ ॥ प्रविद्धवर्माभरणाम्बरायुधं धनञ्जयेनाभिहतं महौजसम् । निशम्य कर्णं कुरवः प्रदुद्रुवुर्हतर्षभा गाव इवाकुलाकुलाः ॥ ५ ॥ भीमश्च भीमेन महास्वनेन नादं कृत्वा रोदसी कम्पयानः । आस्फोटयन् वल्गति नृत्यति च हते कर्णे त्रासयन् धार्त्तराष्ट्रान् ॥ ६ ॥ तथैव राजन् सोमकाः सृञ्जयाश्च शङ्खान् दध्मुः सस्वजुश्चापि सर्व्वे । परस्परं क्षत्रिया हृष्टरूपाः सूतात्मजे वै निहते तदानीम् ॥ ७ ॥ कृत्वा विमर्द्दं भृशमर्जुनेन कर्णो हतः केशरिणेव नागः । तीर्णा प्रतिज्ञा पुरुषर्षभेण वैरस्यान्तं गतवांश्चैव पार्थः ॥ ८ ॥ मद्राधिपश्चैव विमूढचेतास्तूर्णं रथेनापहृतध्वजेन । दुर्य्योधनस्यान्तिकमेत्य राजन् संभाष्य दुःखार्त्त उवाच वाक्यम् ॥ ९ ॥ विशीर्णनागाश्वरथप्रवीरं बलं त्वदीयं यमराष्ट्र-

कल्पम् । अन्योन्यमासाद्य हतैर्महद्भिर्नराश्वनागैर्गिरिकूटकल्पैः ॥ १० ॥ नैतादृशं भारत युद्धमासीद्यथाद्य कर्णार्जुनयोर्बभूव । ग्रस्तौ हि कर्णेन समेत्य कृष्णावन्ये च सर्वे तव शत्रवो ये ॥ ११ ॥ दैवन्तु यत्नात् स्ववशं प्रवृत्तं तत् पाण्डवान् पाति छिनत्ति चास्मान्। तवार्थसिद्ध्यर्थकरास्तु सर्वे प्रसह्य वीरा निहता द्विषद्भिः ॥ १२ ॥ कुवेरवैवस्वतवासवानां तुल्यप्रभावाम्बुपतेश्च वीराः । वीर्य्येण शौर्य्येण बलेन चैव तैस्तैश्च युक्ता विविधैर्गुणौघैः ॥ १३ ॥ अवध्यकल्पा निहता नरेन्द्रास्तवार्थकामा युधि पाण्डवेयैः । तन्माशुचो भारत दिष्टमेतत् पर्य्यायसिद्धिर्न सदास्ति सिद्धिः ॥ १४ ॥ एतद्वचो मद्रपतेर्निशम्य स्वं चापनीतं मनसा निरीक्ष्य । दुर्य्योधनो दीनमना विसंज्ञः पुनः पुनर्न्यश्वसदार्त्तरूपः ॥ १५ ॥

इति कर्णपर्व्वणि शल्यवाक्ये द्विनवतोऽध्यायः ॥ ९२ ॥

---

धृतराष्ट्र उवाच । तस्मिंस्तु कर्णार्जुनयोर्विमर्द्दे दग्धस्य रौद्रेऽहनि विद्रुतस्य । बभूव रूपं कुरुसृञ्जयानां बलस्य बाणोन्मथितस्य कीदृक् ॥ १ ॥

सञ्जय उवाच । शृणु राजन्नवहितो यथा वृत्तो महाक्षयः । घोरो मनुष्यदेहानामाजौ नरवरक्षयः ॥ २ ॥ यत्तत् कर्णे हते पार्थः सिंहनादमथाकरोत् । तदा तव सुतान् राजन्नाविवेश महद्भयम् ॥ ३ ॥ न सन्धातुमनीकानि न च वाथ पराक्रमे । आसीद्बुद्धिर्हते कर्णे तव योधस्य कस्यचित् ॥ ४ ॥ वणिजो नावि भिन्नायामगाधे ह्यप्लवा यथा । अपारे पारमिच्छन्तो हते द्वीपे किरीटिना ॥ ५ ॥ सूतपुत्रे हते राजन् वित्रस्ताः शरविक्षताः । अनाथा नाथमिच्छन्तो नागाः सिंहैरिवार्द्दिताः ॥ ६ ॥ भग्नशृङ्गा इव वृषा भग्नदंष्ट्रा इवोरगाः । प्रत्युपायाम सायाह्ने निर्जिताः

सव्यसाचिना ॥ ७ ॥ हतप्रवीरा विध्वस्ता निकृत्ता निशितैः शरैः । सूतपुत्रे हते राजन् पुत्रास्ते प्राद्रवन् भयात् ॥ ८ ॥ विशस्त्रकवचाः सर्वे कान्दिशीका विचेतसः । अन्योऽन्यमवमृद्नन्तो वीक्षमाणा भयार्दिताः ॥ ९ ॥ मामेव नूनं बीभत्सुर्मामेव च वृकोदरः । अभियातीति मन्वानाः पेतुर्मम्लुश्च सम्भ्रमात् ॥ १० ॥ हयानन्ये रथानन्ये गजानन्ये महारथाः । आरुह्य जवसम्पन्नाः पादाता प्राद्रवन् भयात् ॥ ११ ॥ कुञ्जरैः स्यन्दनाः क्षुण्णाः सादिनश्च महारथैः । पदातिसङ्घाश्चाश्वौघैः पलायद्भिर्भयार्दिताः ॥१२॥ व्यालतस्करसङ्कीर्णे सार्थहीना यथा वने । तथा त्वदीया निहते सूतपुत्रे तदाभवन् ॥ १३ ॥ हतारोहास्तदा नागाश्छिन्नहस्तास्तथा नराः । सर्वं पार्थमयं लोकं संपश्यन्तो भयातुराः ॥ १४ ॥ तान् प्रेक्ष्य द्रवतः सर्वान् भीमसेनभयार्दितान् । तान् दृष्ट्वा विद्रुतान् सर्वान् योधांस्तात्र सहस्रशः । दुर्योधनोऽथ स्वं सूतं वाक्यमुद्दिरमब्रवीत् ॥ १५ ॥

दुर्योधन उवाच । नातिक्रमिष्यते पार्थो धनुष्पाणिमवस्थितम् । जघने सर्वसैन्यानां शनैरश्वान् प्रचोदय ॥ १६ ॥ जघने युध्यमानं हि कौन्तेयो मां न संशयः । नोत्सहेत व्यतिक्रान्तुं वेलामिव महोदधिः ॥ १७ ॥ अद्यार्जुनं सगोविन्दं मानिनञ्च वृकोदरम् । निहत्य शिष्टान् शत्रूंश्च कर्णस्यानृण्यमाप्नुयाम् ॥ १८ ॥ तत् श्रुत्वा कुरुराजस्य शूराढ्यसदृशं वचः । सूतो हेमपरिच्छन्नान् शनैरश्वानचोदयत् ॥ १९ ॥ रथाश्वगजहीनास्तु पादातास्तत्र मारिष । पञ्चविंशतिसाहस्रा युद्धायैव व्यवस्थिताः ॥ २० ॥ तान् भीमसेनः सङ्क्रुद्धो धृष्टद्युम्नश्च पार्षतः । बलेन चतुरङ्गेन संवृत्याजघ्नतुः शरैः ॥ २१ ॥ प्रत्ययुध्यन्त ते सर्वे भीमसेनं सपार्षतम् । पार्थपार्षतयोश्चान्ये जगृहुस्तत्र नामनी ॥ २२ ॥ अक्रुध्यत तदा भीमस्तैर्मृधे प्रत्युपस्थितैः । सोऽवतीर्य रथात्तूर्णं गदापाणिरयुध्यत ॥२३॥

स तान्रथस्थो भूमिष्ठान् धर्मापेक्षी वृकोदरः। योधयामास
कौन्तेयो भुजवीर्य्यसमाश्रितः ॥ २४ ॥ जातरूपपरिच्छन्नां प्रगृह्य
महतीं गदाम्। अवधीत्तावकान् सर्वान् दण्डपाणिरिवान्तकः
॥ २५ ॥ पदातिनोऽपि संरब्धास्त्यक्त्वा जीवितमात्मनः। भीम-
मभ्यद्रवन् सङ्ख्ये पतङ्गा इव पावकम् ॥ २६ ॥ आसाद्य भीमसेनन्तु
संरब्धा युद्धदुर्मदाः। विनेशुः सहसा दृष्ट्वा भूतग्रामा इवान्तकम्
॥ २७ ॥ श्येनवद्विचरन् भीमो गदाहस्तो महाबलः। पञ्च-
विंशतिसाहस्रांस्तावकानभ्यपोथयत् ॥ २८ ॥ हत्वा तत् पुरुषा-
नीकं भीमः सत्यपराक्रमः। धृष्टद्युम्नं पुरस्कृत्य पुनस्तस्थौ महा-
बलः ॥ २९ ॥ धनञ्जयो रथानीकमभ्यवर्त्तत वीर्य्यवान् ॥ ३० ॥
माद्रीपुत्रौ तु शकुनिं सात्यकिश्च महारथः। जवेनाभ्यपतन् हृष्टा
निघ्नन्तः सौबलं बलम् ॥ ३१ ॥ तस्याश्वांश्च गतानाजौ विनिहत्य
शितैः शरैः। तमभ्यधावंस्त्वरितास्ततो युद्धमभूत्तदा ॥ ३२ ॥ धन-
ञ्जयोऽपि चाभ्येत्य रथानीकं तव प्रभो। विश्रुतं त्रिषु लोकेषु
व्याक्षिपत् गाण्डिवं धनुः ॥ ३३ ॥ कृष्णसारथिमायान्तं दृष्ट्वा
श्वेतहयं रथम्। अर्जुनञ्चापि योद्धारं त्वदीयाः प्राद्रवन् भयात्
॥ ३४ ॥ विप्रहीणरथाश्चैव शरैश्च परिकर्षिताः। पञ्चविंशति-
साहस्राः कालमार्च्छन् पदातयः ॥ ३५ ॥ हत्वा तान् पुरुषव्याघ्रः
पाञ्चालानां महारथः। पुत्रः पाञ्चालराजस्य धृष्टद्युम्नो महा-
मनाः ॥ ३६ ॥ भीमसेनं पुरस्कृत्य नचिरात् प्रत्यदृश्यत। महा-
धनुर्द्धरः श्रीमानमित्रगणसूदनः ॥ ३७ ॥ पारावतसवर्णाश्वं
कोविदारमहाध्वजम्। धृष्टद्युम्नरथं दृष्ट्वा प्राद्रवन्त भयाद्रणम्
॥ ३८ ॥ गान्धारराजं शीघ्रास्त्रमनुसृत्य यशस्विनौ। नचिरात्
प्रत्यदृश्येतां माद्रीपुत्रौ ससात्यकी ॥ ३९ ॥ चेकितानः शिखण्डी
च द्रौपदेयाश्च मारिष। हत्वा त्वदीयं सुमहत् सैन्यं शङ्खानथा-
धमन् ॥ ४० ॥ ते सर्व्वे तावकान् प्रेक्ष्य द्रवतोऽपि पराङ्मुखान्।

अभ्यवर्त्तन्त संरब्धान् वृषान् जित्वा यथा वृषाः ॥ ४१ ॥ सेनाव-
शेषं तं दृष्ट्वा सैन्यस्य पाण्डव। व्यवस्थितं सव्यसाची चुक्रोध
बलवान्नृप ॥ ४२ ॥ धनञ्जयो रथानीकमभ्यवर्त्तत वीर्य्यवान्।
विश्रुतं त्रिषु लोकेषु व्याक्षिपन् गाण्डिवं धनुः ॥ ४३ ॥ तत एनं
शरव्रातैः सहसा समवाकिरत्। रजसा चोद्धृतेनाथ न स्म किञ्चि-
दप्रदृश्यत ॥ ४४ ॥ अन्धकारीकृते लोके रजोभूते महीतले। दिशः
सर्वा महाराज तावकाः प्राद्रवन् भयात् ॥ ४५ ॥ भज्यमानेषु
सैन्येषु कुरुराजे विशाम्पते। परानभिमुखांश्चैव सुतस्ते समुपा-
द्रवत् ॥ ४६ ॥ ततो दुर्य्योधनः सर्वानाजुहावाथ पाण्डवान्। युद्धाय
भरतश्रेष्ठ देवानिव पुरा बलिः ॥ ४७ ॥ त एनमभिवर्त्तन्त सहिताः
समुपाद्रवन्। नानाशस्त्रसृजः सर्वे भर्त्सयन्तो मुहुर्मुहुः ॥ ४८ ॥
दुर्य्योधनस्त्वसम्भ्रान्तस्तानरीन्निशितैः शरैः। तत्रावधीत्ततः क्रुद्धः
शतशोऽथ सहस्रशः ॥ ४९ ॥ तत्राद्भुतमपश्याम तव पुत्रस्य पौरु-
षम्। यदेकः सहितान् सर्वान् रणेऽयुद्ध्यत पाण्डवान् ॥ ५० ॥
नातिदूरापयातन्तु कृतबुद्धिं पलायने। दुर्य्योधनः स्वकं सैन्य-
मपश्यच्छरविक्षतम् ॥ ५१ ॥ ततोऽवस्थाप्य राजेन्द्र कृतबुद्धिस्तवा-
त्मजः। हर्षयन्निव तान् योधानिदं वचनमब्रवीत् ॥ ५२ ॥ न
तं देशं प्रपश्यामि पृथिव्यां पर्वतेषु च। यत्र यातान् न वो हन्युः
पाण्डवाः किं सृतेन वः ॥ ५३ ॥ स्वल्पञ्च बलमेतेषां कृष्णौ च
भृशविक्षतौ। यदि सर्वेऽवतिष्ठामो ध्रुवं नो विजयो भवेत् ॥ ५४ ॥
विप्रयातांस्तु वो भिन्नान् पाण्डवाः कृतकिल्बिषान्। अनुसृत्य
वधिष्यन्ति श्रेयान्नः समरे वधः ॥ ५५ ॥ सुखं सांग्रामिको मृत्युः
क्षत्रधर्मेण युध्यताम्। मृतो दुःखं न जानीते प्रेत्य चानन्त्यमश्नुते
॥ ५६ ॥ शृणुध्वं क्षत्रियाः सर्वे यावन्तः स्थ समागताः। यदा
शूरञ्च भीरुञ्च मारयत्यन्तको यमः। को नु मूढ़ो न युध्येत मादृशः
क्षत्रियव्रतः ॥ ५७ ॥ द्विषतो भीमसेनस्य क्रुद्धस्य वशमेष्यथ।

पितामहैराचरितं न धर्मं हातुमर्हथ ॥ ५८ ॥ न हि धर्मोऽस्ति पापीयान् क्षत्रियस्य पलायने । न युद्धधर्माच्छ्रेयोऽन्यः पन्थाः स्वर्गस्य कौरवाः । अचिरेण हता लोकं सर्वे योधाः समश्नुतः ॥५९॥

सञ्जय उवाच । एवं ब्रुवति ते पुत्रे सैनिका भृशविक्षताः । अनवेक्ष्यैव तद्वाक्यं प्राद्रवन् सर्वतोमुखम ॥ ६० ॥

इति कर्णपर्वणि कौरवसैन्यपलायने त्रिनवतोऽध्यायः ॥ ९३ ॥

---

सञ्जय उवाच । दृष्ट्वा तु सैन्यं विनिवर्त्तमानं पुत्रेण ते मद्रपतिस्तदानीम् । सन्त्रस्तरूपः परिमूढचेता दुर्य्योधनं वाक्यमिदं बभाषे ॥ १ ॥

शल्य उवाच । पश्येदमुग्रं नरवाजिनागैरायोधनं वीर हतैः सुपूर्णम् । महीधराभैः पतितैर्महागजैः सकृत् प्रभिन्नैः शरविद्धमर्मभिः ॥२॥ तैर्विह्वलद्भिश्च समन्ततो वै प्रध्वस्तवर्मायुधयोधमुख्यैः। वज्रापविद्धैरिव चाचलेन्द्रैर्विभिन्नपाषाणमहाद्रुमौषधैः॥३॥ प्रविद्धघण्टाङ्कुशतोमरध्वजैः सहेमजालैरुधिरौघसंप्लुतैः । शरावभिन्नैः पतितैश्च वाजिभिः श्वसद्भिरार्त्तैः क्षतजं वमद्भिः ॥४॥ दीनं स्तनद्भिः परिवृत्तनेत्रैर्महीं दशद्भिः कृपणं नदद्भिः । तथापविद्धैर्गजवाजियोधैर्मन्दापविद्धै रथवीरसङ्घैः ॥ ५ ॥ मन्दासुभिश्चैव गतासुभिश्च नराश्वनागैश्च रथैश्च मर्द्दितै । मही महावैतरणीव दुर्दृशा गजैर्निकृत्तैर्यतहस्तगात्रैः ॥ ६ ॥ उद्वेपमानैः पतितैः पृथिव्यां विशीर्णदन्तैः क्षतजं वमद्भि । स्फुरद्भिरार्त्तैः करुणं रणाजिरे नयोधवर्मायुधपादगाम्भिः । प्रकीर्णतूणीरपताककेतुभिः सुवर्णजालावततैर्भृशाहतैः ॥ ७ ॥ मही बभौ द्यौर्ज्वलदैरिवावृता यशस्विभिर्नागरथाश्वयोधिभिः । पदातिभिश्चाभिमुखैर्हतैः परैर्विशीर्णवर्माभरणाम्बरायुधैः ॥ ८ ॥ शरप्रहाराभिहतैर्महाबलै-

रवेक्ष्यमाणैः पतितैः सहस्रशः। प्रनष्टसंज्ञैः पुनरुच्छ्वसद्भिर्मही
बभूवानुगतैरिवाग्निभिः ॥ ९ ॥ कर्णार्जुनाभ्यां शरभिन्नगात्रैर्हतैः
प्रवीरैः कुरुसृञ्जयनाम्। दिव्यग्रहैर्भूरतिदीप्तिमद्भिर्न [illegible]
र्द्यौरमलैश्च दीप्तैः ॥ १० ॥ शराश्च कर्णार्जुनबाहु[illegible] विदार्य
नागाश्वमनुष्यदेहान्। प्राणान्निरस्याशु महीं व्यतीयुर्महोरगा
वासमिवातितान्नाः ॥ ११ ॥ हतैर्मनुष्याश्वगजैरसङ्ख्यैः शराव-
भिन्नैश्च रथैर्बभूव। धनञ्जयस्याधिरथेश्च मार्गणैर्गजैरगम्या
वसुधातिदुर्गमा ॥१२॥ रथैर्वरैषन्मथितैः सयोधैः सं[illegible]ताश्व-
वरायुधध्वजैः। विशीर्णशस्त्रैर्विनिकृत्तकन्धरैर्निकृत्तचक्रा[illegible]ति-
वेणुभिः ॥ १३ ॥ विमुक्तचक्रैर्विहतैरुपस्करैः कृतानुकर्षैर्वि[illegible]
वल्गनैः। प्रभग्ननीडैर्मणिहेममण्डितैः स्तृता मही द्यौरिव शा[illegible]
धनैः ॥ १४ ॥ विकृष्यमाणैर्जवनैस्तुरङ्गमैर्हतेश्वरैः राजरथैः स[illegible]
ल्पितैः। मनुष्यमातङ्गरथाश्वराशिभिर्द्रुतं व्रजन्तो बहुधा वि[illegible]
शिताः ॥ १५ ॥ सहेमपट्टाः परिघाः परश्वधाः शिताश्च [illegible]
मुषलानि पट्टिशाः। पेतुश्च खड्गा विमला विकोषा [illegible]
जाम्बूनदपट्टनद्धाः ॥ १६ ॥ चापानि रु[illegible]णानि [illegible]श्च
कार्त्तस्वरचित्रपुङ्खाः। ऋष्टयश्च पीता विमला विकोषाः प्रासाः
सखड्गाः कनकावभासाः ॥ १७ ॥ छत्राणि वालव्यजनानि शङ्खा
भुजाश्च पुष्पोत्तमहेमभूषिताः। कुथा पताका रथवेष्टनानि किरीट
माला मुकुटाश्च शुभ्राः ॥ १८ ॥ प्रकीर्णका विप्रकीर्णाश्च राजन्
प्रवालमुक्तातरलाश्च हाराः। आपीडकेयूरवराङ्गदानि ग्रैवेय-
निष्काश्च सुवर्णसूत्राः ॥ १९ ॥ मण्युत्तमा वज्र सुवर्णमुक्ता रत्नानि
चोच्चावचमङ्गलानि। गात्राणि चात्यन्तसुखोचितानि शिरांसि
चेन्दुप्रतिमाननानि ॥ ३० ॥ देहांश्च भोगांश्च परिच्छदांश्च त्यक्त्वा
मनोज्ञानि सुखानि चापि। स्वधर्मनिष्ठां महतीमवाप्य चाप्याशु
लोकान् यशसा गतास्ते ॥ २१ ॥ निवर्त्त दुर्योधन यान्तु सैनिका

व्रजस्व राजन् शिविराय मानद । दिवाकरो ह्येष विलम्बते प्रभो पुनस्त्वमेवात्र नरेन्द्र कारणम् ॥ २२ ॥ इत्येवमुक्त्वा विरराम शल्यो दुर्य्योधनं शोकपरीतचेताः । हा कर्ण हा कर्ण इति ब्रुवाणमार्त्तं विसंज्ञं भृशमश्रुनेत्रम् ॥ २३ ॥ तं द्रोणपुत्रप्रमुखा नरेन्द्रा सर्व्वे समाश्वास्य मुहुः प्रयान्ति । निरीक्षमाणा मुहुरर्जुनस्य ध्वजं महान्तं यशसा ज्वलन्तम् ॥ २४ ॥ नराश्वनागाङ्गशरीरजेन रक्तेन सिक्ताञ्च तथैव भूमिम् । रक्ताम्बरस्रक्तपनीययोगान्नारीं प्रकाशामिव सर्व्वगम्याम् ॥ २५ ॥ प्रच्छन्नरूपा रुधिरेण राजन्रौद्रे मुहूर्त्तेऽतिविराजमाने । नैवावतस्थुः कुरवः समीक्ष्य प्रव्राजिता देवलोकाय सर्व्वे ॥ २६ ॥ वधेन कर्णस्य च दुःखितास्ते हा कर्ण हा कर्ण इति ब्रुवाणाः । द्रुतं प्रयाताः शिविराणि राजन् दिवाकरं रक्तमवेक्षमाणाः ॥ २७ ॥ गाण्डीवमुक्तैश्च सुवर्णपुङ्खैः शिलाशितैः शोणितदिग्धवाजैः । शरैश्चिताङ्गो युधि भाति कर्णो हतोऽपि सन् सूर्य्य इवांशुमाली ॥ २८ ॥ कर्णस्य देहं रुधिरावसिक्तं भक्तानुकम्पी भगवान् विवस्वान् । स्पृष्ट्वांशुभिर्लोहितरक्तरूपः सिस्नासुरभ्येति परं समुद्रम् ॥ २९ ॥ इतीव सञ्चिन्त्य सुरर्षिसङ्घाः संप्रस्थिता यान्ति यथानिकेतम् । सञ्चिन्तयित्वा जनता विसस्रु र्यथासुखं खञ्च महीतलञ्च ॥ ३० ॥ तदद्भुतं प्राणभृतां भयङ्करं निशम्य युद्धं कुरुवीरमुख्याः । धनञ्जयस्याधिरथेश्च विस्मिताः प्रशंसमानाः प्रययुस्तदा जनाः ॥ ३१ ॥ शरैः संकृत्तवर्म्माणं वीरं विशसने हतम् । गतासुमपि राधेयं न लक्ष्मीः प्रतिमुञ्चति ॥ ३२ ॥ निष्टहेमवपुषं ज्वलनार्कसमप्रभम् । जीवन्तमिव शूरञ्च सर्व्वभूतानि मेनिरे ॥ ३३ ॥ हतस्यापि महाराज सूतपुत्रस्य संयुगे । वित्रेसुः सर्व्वतो योधाः सिंहस्येवेतरे मृगाः ॥ ३४ ॥ हतोऽपि पुरुषव्याघ्रो व्याहरन्निव दृश्यते । नाभवद्विकृतं किञ्चित् मृतस्यापि महात्मनः ॥ ३५ ॥ चारुवेशधरं राजन् चारु-

मौलिशिरोधरम्। तन्मुखं सूतपुत्रस्य पूर्णचन्द्रसमद्युति ॥ ३६ ॥
नानाभरणवान्राजंस्तप्तजाम्बुनदाङ्गदः। हतो वैकर्त्तनः शेते पादपोऽङ्कुरवानिव ॥ ३७ ॥ कनकोत्तमसङ्काशो ज्वलन्निव विभावसुः। स शान्तः पुरुषव्याघ्रः पार्थसायकवारिणा ॥ ३८ ॥ यथा हि ज्वलनो दीप्तो जलमासाद्य शाम्यति। कर्णाग्निः शमितस्तद्वत् पार्थमेघेन संयुगे ॥ ३९ ॥ प्रगृह्य च यशो दीप्तं सुयुद्धेनात्मनो भुवि। विसृज्य शरवर्षाणि प्रताप्य च दिशो दश। सपुत्रः पुरुषव्याघ्रः संशान्तः पार्थतेजसा ॥ ४० ॥ प्रताप्य पाण्डवान्राजन् पाञ्चालान् स्वतेजसा। वर्षित्वा शरवर्षेण प्रताप्य रिपुवाहिनीम् ॥४१॥ श्रीमानिव सहस्रांशुर्जगत् सर्वं प्रताप्य च। हतो वैकर्त्तनः कर्णः सपुत्रः सहवाहनः ॥ ४२ ॥ अर्थिनां पक्षिसङ्घस्य कल्पवृक्षो निपातितः। ददानीत्येव योऽवोचन्न नास्तीत्यर्थितोऽर्थिभिः ॥४३॥ सद्भिः सदा सत्पुरुषः स हतो द्वैरथे वृषः। यस्य ब्राह्मणसात् सर्वं वित्तमासीन्महात्मनः। नादेयं ब्राह्मणेष्वासीद्यस्य स्वमपि जीवितम् ॥ ४४ ॥ सदा नृणां प्रियो दाता प्रियदानोऽप्रियं गतः। स पार्थास्त्रविनिर्दग्धो गतः परमिकां गतिम् ॥ ४५ ॥ यमाश्रित्याकरोद्वैरं सुतस्ते स गतो दिवम्। आदाय तव पुत्राणां जयाशां शर्म वर्म च ॥ ४६ ॥ हते कर्णे सरितो न प्रसस्रुर्जगाम चास्तं कलुषो दिवाकरः। ग्रहश्च तिर्य्यग्ज्वलितार्कवर्णः सोमस्य पुत्रोऽभ्युदियाय तिर्य्यक् ॥ ४७ ॥ नभः पफालाथ चचाल चोर्वी ववुश्च वाताः परुषाः सुघोराः। दिशः सधूमाश्च भृशं प्रजज्वलुर्महार्णवाश्चुक्षुभिरे च सस्वनाः ॥ ४८ ॥ सकाननाश्चाद्रिचया विदद्रिरे प्रविव्यथुर्भूतगणाश्च मारिष। बृहस्पती रोहिणीं संप्रपीड्य बभूव चन्द्रार्कसमानवर्णः ॥ ४९ ॥ हतेऽपि कर्णे विदिशोऽपि जज्वलुस्तमोवृता द्यौर्विचचाल भूमिः। पपात चोल्का ज्वलनप्रकाशा निशाचराश्चाप्यभवन् प्रहृष्टाः ॥ ५० ॥ शशिप्रकाशाननमर्जुनो यदा

क्षुरेण कर्णस्य शिरो न्यपातयत्। तदान्तरीक्षे दिवि चेह राजन्
बभूव हाहेति जनस्य निस्वनः ॥ ५१ ॥ स देवगन्धर्वमनुष्यपूजितं
निहत्य कर्णं रिपुमाहवेऽर्जुनः। रराज पार्थः परमेण तेजसा
वृत्रं निहत्येव सहस्रलोचनः ॥ ५२ ॥ ततो रथेनाम्बुदवृन्दनादिना
शरन्नभोमध्यगभास्करत्विषा। पताकिना भीमनिनादकेतुना हिमेन्दु-
शङ्खस्फटिकावभासिना ॥ ५३ ॥ महेन्द्रवाहप्रतिमेन तावुभौ
महेन्द्रवीर्य्यप्रतिमानपौरुषौ। सुवर्णमुक्तामणिवज्रविद्रुमैरलंकृता-
वप्रतिमेन रंहसा ॥ ५४ ॥ नरोत्तमौ पाण्डवकेशिमर्द्दिनौ तदा-
हितावग्निदिवाकरोपमौ। रणाजिरे वीतभयौ विचेरतुः समान-
यानाविव विष्णुवासवौ ॥ ५५ ॥ ततो धनुर्ज्यातलघातनिस्वनैः
प्रसह्य कृत्वा च रिपुं हतप्रभम्। ससाधयित्वैव कुरून् शरौघैः
कपिध्वजः पक्षिवरध्वजश्च ॥ ५६ ॥ हृष्टौ ततस्तावमितप्रभावौ
मनांस्यरीणामवदारयन्तौ। सुवर्णजालावततौ महास्वनौ हिमा-
वदातौ परिगृह्य पाणिभिः। चुचुम्बतुः शङ्खवरौ नृणांवरौ वरा-
ननाभ्यां युगपच्च दध्मतुः ॥ ५७ ॥ पाञ्चजन्यस्य निर्घोषो देवदत्तस्य
चोभयोः। पृथिवीञ्चान्तरीक्षञ्च दिवञ्च समपूरयत् ॥ ५८ ॥
वित्रस्ताश्चाभवन् सर्व्वे कुरवो राजसत्तम। शङ्खशब्देन शूरस्य
माधवस्यार्जुनस्य च ॥ ५९ ॥ तौ शङ्खशब्देन निनादयन्तौ वनानि
शैलान् सरितो दिशश्च। वित्रासयन्तौ तव पुत्रसेनां युधिष्ठिरं
नन्दयतां वरिष्ठौ ॥ ६० ॥ ततः प्रयाताः कुरवो जवेन श्रुत्वैव
शङ्खस्वनमीर्य्यमाणम्। विहाय मद्राधिपतिं पतिञ्च दुर्य्योधनं
भारत भारतानाम् ॥ ६१ ॥ महाहवे तं बहुशोभमानं धनञ्जयं
भूतगणाः समेताः। तदान्वमोदन्त जनार्द्दनञ्च प्रभाकरावभ्युदितौ
यथैव ॥ ६२ ॥ समाचितौ कर्णशरैः परन्तपावुभौ व्यभातां समरे-
ऽच्युतार्जुनौ। तमो निहत्याभ्युदितौ यथामलौ शशाङ्कसूर्य्याविव
रश्मिमालिनौ ॥ ६३ ॥ विहाय तान् वाणगणान्महाबलौ सुहृ-

हतावप्रतिमानविक्रमौ। सुखं प्रविष्टौ शिविरं स्वमीश्वरौ सदस्य-
निन्द्राविव वासवाच्युतौ ॥ ६४ ॥ तौ देवगन्धर्वमनुष्यचारणैर्मह-
र्षिभिर्यक्षमहोरगैरपि । जयाभिवृद्धा परयाभिपूजितौ हते तु
कर्णे परमाहवे तदा ॥ ६५ ॥ यथोऽभिरूपं प्रतिमानथ
प्रशस्यमानावतुलैश्च कर्मभिः। ननन्दतुस्तौ ससुहृद्गणौ तदा बलिं
नियम्येव सुरेशकेशवौ ॥ ६६ ॥

इति कर्णपर्वणि शिविरप्रवेशे चतुर्नवतोध्यायः ॥ ९४ ॥

---

सञ्जय उवाच । हते वैकर्त्तने कर्णे कुरवो भयपीड़िताः।
वीक्षमाणा दिशः सर्वाः पलायन्ते स्म सर्वतः ॥ १ ॥ वीरं तु
निहतं श्रुत्वा शत्रुभिः परमाहवे। सर्वे दिशोऽन्वकीर्य्यन्त तावका
भयमोहिताः ॥ २ ॥ ततोऽवहारं चक्रुस्ते राजन् योधाः सम-
न्ततः। वार्य्यमाणा भयोद्विग्नास्तव पुत्रेण भारत ॥ ३ ॥ तेषान्तु
मतमाज्ञाय पुत्रस्ते भरतर्षभ। अवहारं ततश्चक्रे शल्यस्यानुमते
नृप ॥ ४ ॥ योधैर्महारथैः सार्द्धं कृतो भारत तावकैः। हता-
वशेषैस्त्वरितः शिविरायैव दुद्रुवे ॥ ५ ॥ गान्धाराणां सहस्रेण
शकुनिः परिवारितः। हतमाधिरथिं दृष्ट्वा शिविरायैव दुद्रुवे॥ ६॥
कृपः शारद्वतो राजन् नागानीकेन संवृतः। महता मेघकल्पेन
शिविरायैव दुद्रुवे ॥ ७ ॥ अश्वत्थामा ततः शूरो विनिःश्वस्य
मुहुर्मुहुः। पाण्डवानां जयं दृष्ट्वा शिविरायैव दुद्रुवे ॥ ८ ॥
संशप्तकावशेषेण वलेन महता वृतः। सुशर्मापि ययौ राजन्
वीक्षमाणो भयातुरान् ॥ ९ ॥ दुर्य्योधनस्तु नृपतिर्हतसर्वस्व
आतुरः। ययौ शोकसमाविष्टश्चिन्तयन् विमना बहु ॥ १० ॥ श्वेत-
ध्वजेन शल्यस्तु रथेन रथिनाम्वरः। प्रययौ शिविरायैव वीक्ष-
माणो दिशो दश॥ ११ ॥ ततोऽपरे सुबहवो भारतानां महा-

रथाः । प्राद्रवन्त भयत्रस्ता ह्रियाविष्टा विचेतसः ॥ १२ ॥ सम्भ्रान्ता भयोद्विग्ना वेपमाना भयातुराः । कुरवः प्रद्रुताः सर्वे दृष्ट्वा कर्णं निपातितम् ॥ १३ ॥ प्रशंसन्तोऽर्जुनं केचित् केचित् कर्णं महारथाः । व्यद्रवन्त दिशो भीताः कुरवः कुरुसत्तम ॥ १४ ॥ तेषां योधसहस्राणां तावकानां महामृधे । नासीत्तत्र पुमान् कश्चिद्योद्धुं यो मन आदधे ॥ १५ ॥ हते कर्णे महाराज निराशाः कुरवोऽभवन् । जीवितेष्वथ राज्येषु दारेषु च धनेषु च ॥ १६ ॥ तान् समानीय पुत्रस्ते यत्नेन महता प्रभो । निवेशाय मनो दध्रे दुःखशोकसमन्वितः ॥ १७ ॥ तस्याज्ञां शिरसा तेऽपि प्रतिगृह्य विशाम्पते । विवर्णवदना दीना न्यवर्त्तन्त महारथाः ॥ १८ ॥

इति कर्णपर्ब्बणि कौरवपलायने पञ्चनवतोऽध्यायः ॥ ९५ ॥

---

सञ्जय उवाच । तथा निपातिते कर्णे तव सैन्ये च विद्रुते । आश्लिष्य पार्थं दाशार्हो हर्षाद्वचनमब्रवीत् ॥ १ ॥ हतो वज्रभृता वृत्रस्त्वया कर्णो निपातितः । वधं वै वृत्रकर्णाभ्यां कथयिष्यन्ति मानवाः ॥ २ ॥ वज्रेण निहतो वृत्रः संयुगे भूरितेजसा । त्वया तु निहतः कर्णो धनुषा निशितैः शरैः ॥ ३ ॥ तमिमं विक्रमं लोके प्रथितन्ते यशस्करम् । निवेदय त्वं कौन्तेय धर्मराजाय भारत ॥ ४ ॥ वधं कर्णस्य संग्रामे दीर्घकालचिकीर्षितम् । निवेद्य धर्मराजाय त्वमानृण्यं गमिष्यसि ॥ ५ ॥ वर्त्तमाने तु युद्धे वै तव कर्णस्य चोभयोः । द्रष्टुमायोधनं पूर्वमागतो धर्मनन्दनः ॥ ६ ॥ भृशं गाढ़विद्धत्वान्न शक्तः स्थातुमाहवे । ततः स्वशिविरं यातः स राजा पुरुषर्षभः ॥ ७ ॥ तथेत्युक्तः केशवस्तु पार्थेन यदुपुङ्गव । पर्य्यावर्त्तयदव्यग्रो रथं रथवरस्य तम् ॥ ८ ॥ एवमुक्त्वार्जुनं कृष्णः सैनिकानिदमब्रवीत् । परानभिमुखा यत्तास्तिष्ठध्वं भद्रमस्तु वः

॥ ९ ॥ धृष्टद्युम्नं युधामन्युं माद्रीपुत्रौ वृकोदरम्। युयुधानञ्च गोविन्द इदं वचनमब्रवीत् ॥ १० ॥ यावदावेद्यतां राज्ञे हतः कर्णोऽर्जुनेन वै। तावद्भवद्भिर्यत्तैस्तु भवितव्यं नराधिपैः ॥ ११ ॥ स तैः शूरैरनुज्ञातो ययौ राजनिवेशनम्। पार्थमादाय गोविन्दो ददर्श च युधिष्ठिरम् ॥ १२ ॥ शयानं राजशार्दूलं काञ्चने शयनोत्तमे। अगृह्णीताञ्च मुदितौ चरणौ पार्थिवस्य तौ ॥ १३ ॥ तयोः प्रहर्षमालोक्य प्रहारांश्चातिमानुषान्। राधेयं निहतं मत्वा समुत्तस्थौ युधिष्ठिरः ॥ १४ ॥ समुत्थाय महाबाहुः पुनः पुनररिन्दमः। वासुदेवार्जुनौ प्रेम्णा पुनश्च परिषस्वजे। वासुदेवञ्च वार्ष्णेयं पप्रच्छ कुरुनन्दनः ॥ १५ ॥ ततोऽस्मै तद्यथावृत्तं वासुदेवः प्रियम्वदः। कथयामास कर्णस्य निधनं यदुनन्दनः ॥ १६ ॥ ईषदुत्स्मयमानस्तु कृष्णो राजानमब्रवीत्। युधिष्ठिरं हतामित्रं कृताञ्जलिरथाच्युतः ॥ १७ ॥ दिष्ट्या गाण्डीवधन्वा च पाण्डवश्च वृकोदरः। त्वञ्चापि कुशली राजा माद्रीपुत्रौ च पाण्डवौ। मुक्ता वीरक्षयादस्मात् संग्रामाल्लोमहर्षणात् ॥ १८ ॥ क्षिप्रमुत्तरकालानि कुरु कार्य्याणि पाण्डव। हतो वैकर्त्तनः क[illegible]वो महाबलः। दिष्ट्या जयसि राजेन्द्र दिष्ट्या वर्द्धसि पाण्डव ॥ १९ ॥ यस्तु द्यूतजितां कृष्णां प्राहसत् पुरुषाधमः। तस्याद्य सूतपुत्रस्य भूमिः पिबति शोणितम् ॥ २० ॥ शेतेऽसौ शरपूर्णाङ्गः शत्रुस्ते कुरुपुङ्गव। तं पश्य पुरुषव्याघ्र विभिन्नं बहुधा शरैः ॥ २१ ॥ हतामित्रामिमामुर्वीमनुशाधि महाभुज। यत्तो भूत्वा सहास्माभिर्भुङ्क्ष्व भोगांश्च पुष्कलान् ॥ २२ ॥

सञ्जय उवाच। इति श्रुत्वा वचस्तस्य केशवस्य महात्मनः। युधिष्ठिरस्तु दाशार्हं प्रहृष्टः प्रत्यपूजयत्। दिष्ट्या दिष्ट्येति राजेन्द्र वाक्यं चेदमुवाच ह ॥ २३ ॥ नैतच्चित्रं महाबाहो त्वयि देवकिनन्दन। त्वया सारथिना पार्थो यत् कुर्य्यादप्यमानुषम् ॥२४॥

